Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीः ॥

शास्त्रमुक्तावळी -- नं, २ ॥

# BHATTA RAHASYAM,

# भाट्टरहस्यम् ॥

श्री खण्डदेव विरचितम्

श्री कांची प्रतिवादिभयंकरम्

अनन्ताचार्येण

परिशोधितम् ।

श्रीसुदर्शन मुद्राक्षरशालाया.मू-

मुद्रितमभूव

कांची

( अस्य पुनर्मुद्रण।।य [illegible] कृतोस्ति )

इदानी मेतन्मूल्यम् -१—२—०

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीः ॥

शास्त्रमुक्तावळी -- नं, २ ॥

# भाट्टरहस्यम् ॥

श्री खण्डदेव विरचितम्

श्री कांची प्रतिवादिभयंकरम्

अनन्ताचार्येण

परिशोधितम्।

श्रीसुदर्शन मुद्राक्षरशालायाम् -

मुद्रितमभूत

कांची

स्व. डा. निगम शर्मा स्मृति संग्रह
पूर्व अध्यक्ष संस्कृत विभाग
गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार

( अस्य पुनर्मुद्रणाधिकारश्शोधकेनस्वायत्तीकृतोऽस्ति )

इदानीं मेतन्मूल्यम् --१--२--०

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

## भूमिका

## श्रीखण्डदेवः ।

भाट्टरहस्यस्यास्य कर्ता खण्डदेवो रुद्रदेवभट्टस्य पुत्रः कस्मिन्देशे समुत्पन्न इति नैतावतापि कालेनास्माभिर्निश्चितम् । अस्य पितू रुद्रदेवनामकत्वंच एतत्कृतमीमांसाकौस्तुभमंगळाचरण प्रकरणस्थेन श्लोकेनावगम्यते । तत्रत्यः श्लोकश्चायम् —

"शश्वद्बोधतरंगा विद्यागंगोत्तमांगके यस्य ।
श्रीरुद्रदेवसंज्ञं जनकं वंदे सतांस्फूर्त्यै ॥ "

अयंच खिस्ताब्दीय १६०० षोडशशतकात्परं सप्तदशशतकसमाप्तेः पूर्वमासीदित्यवगम्यते । यतोयं खण्डदेवः पण्डितराजजगन्नाथस्य पितुः पेरुभट्टस्य पूर्वमीमांसागुरुरित्यवगम्यते । तथाच रसगंगाधरे श्रूयेते श्लोकाविमौ—

" श्रीमज्ज्ञानेन्द्रभिक्षोरधिगत सकलब्रह्मविद्याप्रपंचः
काणादीराक्षपादीरपि महितगिरोयो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्
शेषांकप्राप्त शेषामलभणिति रभूत्सर्वविद्याधरो यः ॥
पाषाणादपि पीयूषंस्यंदते यस्य लीलया ।
तं वंदे पेरुभट्टाख्यं लक्ष्मीकान्तंमहागुरुम् ॥ "

इति ।

रसगंगाधरव्याख्यात्रा नागेशभट्टेन"देवादेव । एवः प्रसिद्धौ । खण्डदेवादेवेत्यर्थः" इति व्याख्यातश्चात्रत्यो देवशब्दः । पण्डितराजश्च १६२४ खिस्ताब्दे राजसिंहासनाधिरूढस्य शाहजहानमहीपते रसभामलंचकारेति तदीय चरितवेदिनः । एवंच खण्डदेवस्यापि पण्डितराजसमकालिकत्वं ततः किंचित्पूर्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कालिकत्वंवाऽस्याभ्युपगममिति ख्रिस्ताब्दीय षोडशसप्तदश शतकमध्यकालिकत्वमवसीयते ।

एतत्प्रणीताग्रन्था अद्यावध्यस्माभिरवगताः "भाट्टदीपिका", "मीमांसाकौस्तुभः", "भाट्टरहस्यम्" इत्येते त्रयएव । एतेषु त्रिषुग्रन्थेषु भाट्टदीपिकैकैव संपूर्णासमुपलभ्यते । ग्रन्थकर्ताप्ययं स्वप्रणीतेषु ग्रन्थेषु भाट्टदीपिकाया एकस्या एव संपूर्णतां स्वयमेव वक्ति । तथाच भाट्टदीपिकोपक्रमस्थः श्लोकः—

" इतः प्रांचोखिला ग्रन्था न्यूनतादोषदूषिताः ।
इयमेकैव पूर्णाभूच्छास्त्रेस्मिन् भाट्टदीपिका ॥ "

इति ।

यद्यपि एतच्छ्लोकस्थाभ्यां 'शास्त्रेस्मिन्नि' तिपदाभ्यां स्वप्रणीतेषु मीमांसा ग्रन्थेष्वेव भाट्टदीपिकाभिन्नस्य कस्यापि ग्रन्थस्यापूर्णत्वं लभ्यते । तथाप्येतत्प्रणीतानां शास्त्रान्तर विषयकग्रन्थानामद्यावध्यनुपलंभादेतद्विषयक एवायं-श्लोकइति निश्चीयते ।

एषु त्रिषुग्रन्थेषु प्रथमा भाट्टदीपिका महर्षिणा जैमिनिना प्रणीतस्य द्वादशाध्यायात्मकस्य सूत्रबद्धस्य पूर्वमीमांसाशास्त्रस्य विस्तृतव्याख्यानरूपा, सारतरबहुविचारगर्भा प्रथमाध्याय प्रथमपादमारभ्य द्वादशाध्यायांता संपूर्णा अष्टादश सहस्रग्रन्थात्मिका वरीवर्ति । यस्यायमाद्यश्लोकः—

" विश्वेश्वरं नमस्कृत्य खण्डदेव स्सतां मुदे ।
तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकां ॥"

इति ।

द्वितीयश्च मीमांसाकौस्तुभनामा ग्रन्थस्तस्यैव जैमिनीयस्य पूर्वमीमांसाशास्त्रस्य व्याख्यानरूपः प्रथमाध्याय द्वितीयपाद मारभ्य कियद्दूरपर्यंतोऽसमग्रो विस्तृतो दुरूहबहुतर विचारपरिपूर्णश्च ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयश्चायं भाट्टरहस्य ग्रन्थो मीमांसक मतानुरोधेन शाब्दबोधविचारूपः परिच्छेदचतुष्टयात्मकत्वेन बहुभिरुच्यमानश्च । तत्र प्रथमपरिच्छेदान्तोयं ग्रन्थोस्माभिरुपलब्धः मीमांसक मतानुरोधिशाब्दबोध विचारपरस्य ग्रन्थस्यैतावत्पर्यन्तं कुत्रापि कस्याप्यमुद्रिततां तादृशग्रन्थमुद्रणावश्यकतांच पर्यालोचयद्भिरस्माभि र्मुद्रितुमारब्धः ।

## अस्यच—

अस्मदीय"श्रीहयवदन लीलासदन" पुस्तकालयस्थमेकं पुस्तकं, प्रायश्शुद्धम्,

महामहोपाध्याय श्री कृष्णताततयार्य तनयनां

विद्वद्वर्याणां उ- वे. तिरुप्पुट्कुळि श्रीगोपालतातााचार्याणां ताळपत्र लिखितं प्रायशुद्धमपरम्,

,, ,, तण्डि श्री श्रीनिवासतातााचार्याणां ताळपत्रलिखितं-प्रायश्शुद्धमितरत्,

श्रीकाञ्ची शठकोपनिलयाभिधान संस्कृत पाठशाला व्याकरणाध्याप

,, कानां ,, घण्टावतारं श्रीवेंकटाचार्याणां काकललिखितं किंचिदशुद्धमन्यत्,

,, ,, मन्नालघट्टाग्रहारस्थानां कवितार्किकसिंहानां रघुनाथाचार्याणां ताळप्रत्र लिखितं प्रायश्शुद्धं परं,

चेति पुस्तकपंचकाधारेण शोधनमकारि, अत्र चास्मदीय बुद्धिमांद्यात्, अनवधानात्, अवर्जनीयान्मुद्रादोषाद्वा यदिकानिचिदशुद्धानि स्युस्तेषां ज्ञापने द्वितीयसंस्कारे पुनस्तेषां संशोधनं क्रियेत ।

इति सविनयं निवेदयति

श्रीकांची - प्र - अनन्ताचार्यः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषयसूची ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥श्रीः॥

॥ श्रीहयग्रीवायनमः॥

॥ श्रीमतेरामानुजायनमः ॥

# शास्त्रमुक्तावळी

खण्डदेवविरचितम्

## ॥ भाट्टरहस्यम् ॥

स्मृत्वास्मृत्वा मुरारातिं तत्प्रसादावलंबनात्।
रहस्यं भट्टतंत्रस्य विशदीकर्तुमीश्महे॥

तत्रतावत् द्वादशलक्षण्यांधर्माधर्मावेव जैमिनिनानुष्ठानोपयोगितयाविचारितौ. यद्यपि धर्माधर्मावदृष्टविशेषात्मकौ, नक्रियारूपौ. अतएव - “धर्मःक्षरतिकीर्तनादि त्यादौवैशेषिकतंत्रेक्रियाजन्यादृष्टेधर्माधर्मशब्दप्रयोगः. तथापि “ धर्मस्त्वनुष्ठितःपुं सामित्यादौतज्जनकविहितनिषिद्धक्रियायामपिधर्म शब्दप्रयोगात्ताविह प्राधान्येन विचार्येते. .... .... .... .... ....

अथकिंनामधर्मत्वमधर्मत्वंवा नतावद्विहितक्रियात्वंनिषिद्धक्रियात्वंवातत्. विहितनिषिद्धद्रव्यादौतदनापत्तेः, नहिफलार्थगुणानुष्ठातॄणां, यज्ञेरजताद्यनुष्ठातॄ णाञ्च धार्मिकोधार्मिकइति व्यवहाराभावः. तथात्वे - इन्द्रियकामाद्यधिकरणादौ शास्त्रसङ्गत्यनापत्तेश्च. तस्य धर्मत्वाभावेतज्जन्यादृष्टस्य धर्मत्वाभावेन कीर्तन नाश्यत्वानापत्तेश्च, नापिक्रियात्वरहितंतत्. विवाहार्थानृतवचनादा वभ्यनुज्ञा- विधिविषयेधर्मत्वापत्तेः. षोडशिग्रहणेऽधर्मत्वापत्तेश्चेतिचेन्न, वेदबोधितश्रेयस्साधनता कत्वंधर्मत्वं, तद्बोधितानिष्टसाधनताकत्वमधर्मत्वमित्येवतल्लक्षणोपपत्तेः. ज्योतिष्टो- मकळंजभक्षणादीनां हीष्टानिष्टसाधनतावेदबोधितेतितत्रलक्षणसमन्वयः। अत्रवे- दबोधितत्वंब्रह्मस्वर्गनरकादावपीत्युत्तरदळं. अन्नविषभक्षणादेरिष्टानिष्टसाधनत्वेपि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्यवेदबोधितत्वाभावादार्य. श्येनेचेष्टसाधनतायाएववेदबोधितत्वाद्धर्मत्वमेव, अनिष्टजनकत्वन्तुश्येनफलस्य वैरिमरणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्यैव, तस्यैवचवेदबोधितानिष्टसाधनताकत्वादधर्मत्वं - नतुश्येनस्येतिव्यक्तश्चतुर्थे. यत्रतुवैरिमरणकामोयजेतेत्येवंविधिस्तत्रापिविधिना-इष्टसाधनताबोधनाद्यागादेर्धर्मत्वमेव । नचतत्रयागस्यैवमरणानुकूलव्यापारत्वेनहिंसात्वान्नहिंस्यादितिनिषेधविषयत्वं, निषेधस्यरागप्राप्तहिंसोपजीवनेनाप्युपपत्तौविहिते अप्रवृत्तेः। नचैवंतादृशस्थलेश्येनत्वपरंपरयापिप्रत्यवायानुत्पत्तेरशिष्टानांतत्रनिष्कम्पप्रवृत्त्यापत्तिः. "परस्योत्सादनार्थंयत्तत्तामसमुदाहृतम्" इत्यादिवाक्यपर्यालोचनया अभिचारजनकश्येनवदभिचारस्यापिकर्मणस्तामसत्वेननिंदितत्वात्तदुन्नीतनिषेधबलेनफलार्थविहितस्यापितस्यानिष्टजनकत्वेनाधर्मत्वस्यापिसत्वात्तदनापत्तेः । अतएवधर्मत्वाधर्मत्वयोरुपाधिरूपत्वात्सांकर्यप्यदोषः ॥ .... .... .... ....

यत्तुधर्मलक्षणेबलवदनिष्टाननुबन्धित्वस्यापिप्रवेशाच्छ्येनादौचतदभावान्नधर्मत्वमितितन्न. तत्प्रवेशेप्रयोजनाभावात् अनिष्टगतद्वैविध्यरूपस्यबलवत्त्वस्यप्राचीनकर्माधीनतयाउक्तविधाननुबंधित्वस्यश्येनेपिकदाचित्संभवाच्च. इतरथाश्येनेसामग्र्यभावेनप्रवृत्त्यनापत्तेः।किंच श्येनादौधर्मत्वाभावेतामसधर्मत्वकथनानुपपत्तिः.अत उक्तलक्षणयोर्युक्तस्तत्रापिसमन्वयः. अभ्यनुज्ञाविधिनाचदोषाभावमात्रस्यैवाक्षेपादिष्टसाधनताक्षेपेणरागप्राप्तेष्टसाधनताकस्याप्यनृतवदनस्य वेदबोधितेष्टसाधनताकत्वाभावान्नधर्मत्वापत्तिः. षोडशिग्रहणेचानिषेधेननानिष्टसाधनत्वाक्षेपः. प्रमाणभावाद्गौरवाच्च । अपित्वेतदभावेपीतरांगैः क्रतुमहोपकारसिद्धिमात्रस्यैव. तावन्मात्रेणैवपुरुषस्यनिवृत्त्युपपत्तेः, अतएव तत्रप्रवृत्त्यर्थं विधिनाफलाधिक्याक्षेपः. अतस्तत्रापिनाधर्मत्वापत्तिः । वेदबोध्यत्वंच वेदातिरिक्तप्रमाणेन स्वातंत्र्येणाबोध्यत्वेसतिवेदबोध्यत्वं तेन तत्वसाक्षात्काररूपब्रह्मज्ञानस्य ब्रह्मविषयकसविलासाज्ञान निवृत्तिरूपमोक्षजनकत्वस्य प्रमाणांतरसिद्धस्योपनिषद्बोध्यत्वेपिनतस्यधर्मत्वापत्तिः, यदपि प्रपंचस्यसत्यत्वेननाज्ञानकार्यत्वं - मोक्षश्चैकविंशतिदुःखध्वंसादिरूपस्तत्वज्ञानजन्य, इतिमतमपिप्रामाणिकं - तदा मोक्षजनकत्वस्यप्रमाणांतरागम्यत्वात्तत्रधर्मत्वपरिहारार्थं वेदबोधित्वंविहायविधिबोधित्वंदेयं.ज्ञानस्यप्रमाणवस्तुपरतंत्रत्वेनप्रवर्तनाविषयत्वाभावान्नविधिबोधितत्वं । यत्तुतु " अयंतुपरमोधर्मो यद्योगेनात्मदर्शनं" मित्यादौज्ञानेपि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धर्मशब्दप्रयोगा त्तस्य धर्मत्वेपिनक्षतिः । नचतत्रत्वदर्शनशब्दोध्यानपरः-लक्षणायांप्रमाणाभावात् , ध्यानेचित्तवृत्तिनिरोधरूपमुख्ययागजन्यत्वासंभवाच्च उपासनादिवत् ज्ञानस्यधर्मत्वेपिब्रह्मणोवेदबोधितश्रेयस्त्वावच्छिन्नसाधनताकत्वाभावेन धर्मत्वाभावाद्धर्ममीमांसातो ब्रह्ममीमांसायाभेदोपपत्तिः अस्तुवाब्रह्मणिधर्मलक्षणस्यातिव्याप्तिपरिहारार्थं पुरुषकृतिव्याप्यत्वं वेदबोधितश्रेयस्साधनताकत्वाविशेषणं। गुणस्यापिचाश्रयविशिष्टस्यकृतिव्याप्यत्वान्नाव्याप्तिः. ज्ञानस्यापिचस्वरूपेणकृतिव्याप्यत्वाभावेपिसम्यगुच्चारणादिवत्तदनुकूलमनःप्रणिधानादेः कृतिव्याप्यत्वेन परंपरया तदाविष्टस्यकृतिव्याप्यत्वोपपत्तेर्नाव्याप्तिः, अतएव "आत्मावाअरेद्रष्टव्य" इतिविधिप्रत्ययोप्येतदभिप्रायक इत्यप्येतन्मतेसुवचं । असाधारणीवाकारणतालक्षणेप्रवेशनीया- तत्तल्लक्षणमेवधर्माधर्मपदशक्यतावच्छेदकं तस्यचक्रियातज्जन्यादृष्टसाधारण्येनैकयैवशक्त्या धर्माधर्मशब्दौक्रियातज्जन्यादृष्टपराविति संक्षेपः ॥

ननुकरणत्वबोधकशब्दाभावात् "यजेतस्वर्गकाम" इत्यादौकथं यागगतश्रेयस्साधनत्वस्यवेदबोध्यत्वं; कश्चवाविधिः यद्बोध्यत्वंश्रेयस्साधनत्वस्येतिचेत्. अत्रतार्किकाः, लिङादिश्रवणोत्तरं प्रवृत्तिदर्शनात्प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानस्यप्रवृत्तावुपयोग इतितावदविवादं । तत्सामग्रीचकृतिसाध्यत्वप्रकारकेच्छा-रूपाचिकीर्षा तस्याश्चस्वरूपसत्याः कारणत्वात्तत्रलिङादिज्ञानस्यानुपयोगेपि चिकीर्षाकारणीभूतज्ञानेतदुपयोगःकल्प्यते. तच्चबलवदनिष्टाननुबन्धित्वज्ञानं कृतिसाध्यत्वज्ञान मिष्टसाधनत्वज्ञानंच. अन्यतमाभावे इतरद्वयसत्वेपि मधुविषसंपृक्तान्नभोजनेचन्द्रस्पर्शे मण्डलीकरणादौच प्रवृत्त्यदर्शनात् अतो लिङादिज्ञानेनत्रितयज्ञानजननाल्लिङादेर्बलवदनिष्टाननुबंधित्वे कृतिसाध्यत्वे इष्टसाधनत्वेचशक्तिः तत्रापिविशेषणविशेष्यभावेविनिगमनाविरहात्प्रत्येकंशक्तिः। पुष्पवत्छब्दवच्चव्युत्पत्तिवैचित्र्याद्युगपदर्थत्रयस्यापिबोधः । अन्वयश्चास्ययोग्यताबलाद्धात्वर्थयागादाविव, " न कळंजंभक्षये" दित्यादौचनञर्थे अभावे । सोपिनत्रितयस्यापि-कळंजभक्षणस्य कृतिसाध्यत्वादिष्टसाधनत्वाच्च. अपितुबलवदनिष्टाननुबंधित्वस्यैव, अतएवतस्मिन्बलवदनिष्टाननुबन्धित्वाभावोबलवदनिष्टानुबन्धित्वं निषेधेनबोध्यतइति कारणाभावात्तत्राप्रवृत्तिः । तस्यचाधर्मत्वंयागादेश्चधर्मत्वं । श्येनादौच कृतिसाध्यत्वेष्टसाधनत्वयोरेवान्वयः, नतुबलवदनिष्टाननुबंधित्वस्य, प्रमाणांतरेणतत्फलस्याभिचा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रस्य नरकसाधनत्वावगमेन तस्य नरकप्रयोजकत्वरूपबलवदनिष्टानुबंधित्वात् ,अत स्तत्रास्तिकानामप्रवृत्तिरित्याहुः । तन्न शक्तित्रयकल्पनेगौरवात् बलवदनिष्टाननुबं धित्वज्ञानाभावेपि बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणेष्टसाधनताज्ञानादिनैवप्रवृत्ते रानुभविकत्वाच्च । अतोबलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकं । तदभावश्च स्वरूपसन्नेवकारणं । अतश्चतत्रेच्छावदेव लिङादेरनुपयोगान्नतस्य तद्वाच्यत्वं- किञ्चैवंनञ्समभिव्याहृत लिङर्थबलवदनिष्टाननुबन्धित्व प्रकारकशाब्दबोधे न ञ्पदजन्योपस्थितिः कारणम् । नञसमभिव्याहृत बलवदनिष्टाननुबन्धित्वातिरि क्तलिङर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम् । नञसमाभिव्या हृतलिङर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम् । लिङसमभिव्या हृतनञर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम् । लिङ्समभि व्याहृतनञर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम् । नञसमभि व्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम् । नञ्समभिव्याहृताख्यातार्थ कृतिप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारण मितिसप्तकार्यकारणभावाः ॥ .... .... .... ....

किञ्चैवंबलवदनिष्टाननुबन्धित्वरूप लिङर्थस्यैवनञ्समभिव्याहारसत्वे तत्रान्वयः तद्भिन्नलिङर्थस्यतु सर्वत्रधात्वर्थएव - नञोसत्वेधात्वर्थइति गुरुभूतानेकसमभि - व्याहारज्ञानकार्यकारणभावकल्पनापत्तिः । एवंघटोनास्तिनपचतिचैत्रइत्यादौलिङा दिसमभिव्याहाराभावे नञर्थस्याभावस्याश्रये प्रथमान्तपदोपस्थाप्येन्वयः । लिङा- दिसमभिव्याहारसत्वेतु धात्वर्थएवेतिव्युत्पत्त्यनेकत्वं । तथाख्यातार्थस्यकृत्यादेर्नञो- सत्वे - आश्रयतासंबन्धेनप्रथमान्तपदोपस्थाप्ये तत्सत्वेतदर्थेप्रतियोगिताकत्वसंब न्धेनेतिगुरुभूताः कार्यकारणभावाः । " नातिरात्रेषोडशिनंगृण्हाती " त्येतदर्थम न्योपि । अस्मन्मतेतुवक्ष्यमाणरीत्या विध्यर्थस्यनञोसत्वेप्रयोज्यत्वसंसर्गेणाख्यातार्थ- कृतौ - तत्सत्वेस्वप्रयोज्याभावप्रतियोगित्व संसर्गेण - नञर्थस्यसर्वत्रप्रतियोगिता संसर्गेण-प्रथमान्तार्थस्यचाधेयत्व संसर्गेणाख्यातार्थेकृतौ, इतिचत्वारोवक्ष्यमाणरीत्या एकएववेतिलाघवं । किञ्च"नकलञ्जंभक्षयें"दित्यत्र भक्षणेबलवदनिष्टाननुबन्धित्वबो- धेपीष्टसाधनत्वस्यापि विधिनाबोधितत्वात्तस्यच लोकावगत तृप्तिसाधनत्व मा - दायनिर्वाहेवैयर्थ्यापत्ते र्भवन्मतेविश्वजिन्नयायेन स्वर्गकल्पनापत्तिः तदधिकस्यै-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यनरकस्य कल्पनान्नबलवदनिष्ठाननुबन्धित्व विरोधः। अतएवयत्र कृतिसाध्यत्व बोधेनकथञ्चिदपि वैयर्ध्यपरिहारस्तत्र लोकसिद्धानुवादकत्वमपि नानुपपन्नम्। किञ्चयदित्रितयमपि लिङर्थः तदाश्येने बलवदनिष्ठाननुबन्धित्वस्यकुतोनबोधः बाधादितिचेत्? कोयंबाधोनाम, श्येनफलस्याभिचारस्यहिंसात्वेन नहिंस्यादिति निषेधविषयत्वमेवबाधकमितिचेत्; तस्यसामान्यशास्त्रत्वेन रागप्राप्तहिंसोपजीवनेनापि चरितार्थतया यागीयपशुहिंसायामिव श्येने बलवदनिष्ठाननुबन्धित्वस्य विशिष्यविधिप्रमितत्वेन तन्निर्वाहार्थं श्येनेप्यप्रवृत्तेः. कथञ्चित्प्रवृत्तावप्यभिचार जन्यनरकस्याधिकत्वाकल्पनेनोभयोपपत्तेश्च ॥ .... .... ....

किञ्च बलवदनिष्ठाननुबन्धित्वंनतावदिष्टोत्पत्ति नान्तरयिकदुःखाधिक दुःखाजनकत्वं. विधितस्तज्ज्ञानसत्वेपिस्वद्रव्यव्ययद्वेषवतोलसस्य यागादौ प्रवृत्त्यदर्शनेन तज्ज्ञानस्यप्रवृत्तिम्प्रत्यकारणत्वात्। इष्टोत्पत्तिनान्तरीयकदुःखाधिक दुःखजनकत्वस्यनिषेधशास्त्रतःकळञ्जभक्षणादौ ज्ञानेपिरागिणःप्रवृत्तिदर्शनेनतज्ज्ञानस्यनप्रवृत्तिप्रतिबन्धकत्वमपि, अतोनिष्टेबलवत्वमुत्कटद्वेषविषयत्वम्, औत्कट्यञ्च जातिविशेषःफलैकोन्नेयः। तादृशद्वेषश्चप्राचीनकर्मानुरोधेन। अतश्चयागादिजन्येपि दुःखेयदाप्राचीनकर्मवशा दुत्कटोद्वेषस्तदातस्य बलवदनिष्ठानुबन्धित्व ज्ञानसत्वात्त्राप्रवृत्तिः, यदातुशुभकर्मवशात्तत्र नोत्कटोद्वेषस्तदा (१)तस्यबलवदनिष्ठानुबन्धित्वज्ञानाभावसत्वात्प्रतिबन्धकाभावेन तत्रप्रवृत्तिः. एवंकळञ्जभक्षणादौश्येनेच प्राचीनकर्मवशेनैवप्रवृत्त्यप्रवृत्ती कादाचित्केउपपादनीये. अतश्चयागादौ नैयत्येनबलवदनिष्ठाननुबन्धित्वस्य विधिनाबोधयितु मशक्यत्वात्कळञ्जभक्षणादौच नैयत्येन तदभावस्य नञा बोधयितुमशक्यत्वाच्च नतत्र लिङादेश्शक्तिः.

यत्तुबलवदनिष्ठाननुबन्धित्वस्य विध्यर्थत्वाभावे, "तृप्तिकामः कळञ्जं भक्षये"दितिवाक्यस्य प्रामाण्यापत्तिः, बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिरूपविध्यर्थस्य तत्राबाधात्, अस्मन्मतेतुबलवनिष्टानुबन्धित्वस्यतत्र श्रुतिबोधितत्वादप्रामाण्योपपत्तिरिति. तन्न- बलवदनिष्टाननुबन्धित्वा तिरिक्तेष्टसाधनत्वादि विध्यर्थवादिनाम्मते तदापत्तावपिप्रवर्तनाविध्यर्थवादिमतेतदनापत्तेः, तथाहि- नञोसत्वेवक्ष्यमाणप्रवर्तना प्रयोज्यत्व संसर्गेणाख्यातार्थे कृतावन्वेतीतिवक्ष्यते, तच्चप्रयोज्यत्वं स्वविषयकज्ञान जन्यानुमिति प्रयोज्यत्वमपि,

(१) विशेषणाभाव प्रयुक्तविशिष्टाभावसत्वा दितिपाठान्तरम् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्यत्रप्रमाणान्तरेण यागादाविष्टसाधनतानवुध्यते । तत्रेष्टसाधनत्वस्यैवप्रव र्तनाज्ञानादनुमितिः । यत्रतुतत्प्रमाणान्तरेणावगतम् , निषेधेनचतस्यानिष्टस धनत्वमपि - यथादीक्षितान्नभोजनस्य - "नदीक्षितान्नमश्नीया" दितिनिषेधात् . तत्रहुतायांवपायां दीक्षितस्यान्नमश्नीया दितिपुनर्विधिरनिष्टसाधनत्वाभावस्यैवा क्षेपकोनात्विष्टसाधनत्वस्य - तस्यप्रमाणान्तरसिद्धत्वेनसिसाधयिषाभवेनुमित्यनु त्पत्तेः । अनिष्टसाधनत्वाभावज्ञानस्यापि स्वविषयविशेष्यकानिष्ट साधनत्व ज्ञाने - अप्रामाण्यनिश्चायकतया प्रवृत्त्युपयोगः । प्रवृत्तौह्यप्रामाण्य ज्ञानानास्क न्दितानिष्टसाधनताज्ञानमेव द्वेषबलवत्तादशायां प्रतिबन्धकम् । अतश्चतेना प्रामाण्यनिश्चये विशिष्टाभावसम्पादकतया तस्यप्रवृत्त्युपयोगस्सुलभएव । अत श्चनिषेधविषयविषयकेनविधिना - अभ्यनुज्ञाविधिरूपेण स्वविषयेनिष्टसाधन त्वाभावस्यैवाक्षेपात्तस्यच लौकिकवाक्ये प्रत्यक्षश्रुतिविरोधेन बाधितत्वादप्रामा ण्योपपत्तिः अतोनतावद्बलवदनिष्टाननुबन्धित्वं लिङर्थः - नापिकृतिसाध्यत्वं तस्यभवन्मतेपाकानुकूलत्वस्य कृतौ भानेसमानसंवित्संवेद्यतया पाकेपिकृतिसाध्य त्वस्यभानोपपत्तेरन्यलभ्यतयालिङोवाच्यत्वानुपपत्तेः । अस्मन्मतेपि प्रवर्तनाक्षेपादेवे ष्टसाधनत्वादिवद्भानोपपत्तेरन्यलभ्यत्वम् अतः परिशेषादिष्टसाधनत्वमेवलिङाद्य र्थइतिवक्तव्यम् । इष्यतेचकैश्चिदाधुनिकैरिदमेव । नञ्समभिव्याहारस्थलेत्वनिष्ट साधनतायां लिङोलक्षणा , अतोलिङादेरिष्टसाधनत्वमेवार्थइति । तदपिन - तथात्वयिष्टसाधनता ज्ञानादेवप्रवृत्ते राचार्यप्रेरितोहं गामानयामीत्यादा वाचा र्यादेःप्रवर्तकत्व व्यवहारानुपपत्तेः । नचप्रवृत्तिजनकेष्टसाधनता बोधकलिङुच्चा- रयितृत्वात्तस्य प्रवर्तकत्वव्यवहारः । तथात्वेराजप्रेरित पदातेस्तादृश लिङुच्चा रयितृत्वेनप्रवर्तकत्वापत्तौ पदातिप्रेरितोहं नगामानयामि , किन्तुराजप्रेरित इति पदातौप्रवर्तकत्वाभाव व्यवहारानुपपत्तेः । .... .... ....

अथ अन्याप्रेरितत्वेसति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वं । तथात्वेपितृप्रेरिते राज्ञिप्रवर्तकत्वानापत्तेः । अतश्चतादृश व्यवहारबलात्प्रवृत्ति कारणीभूत ज्ञान विषयीभूतेच्छाश्रयत्वेनैव राजादेः प्रवर्तकत्वंवाच्यम् । नचेच्छायालिङादि - वा वाच्यत्वाभावेपिज्ञानं सम्भवति , विषयविशेषस्येष्टसाधनत्वेपिपरेच्छा विष यत्वाभावेन व्यभिचारादिष्ट साधनत्वस्यानुमापकत्वानुपपत्तेः । अतःपरिशेषाल्लि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्गादिवाच्यैवसा - तथाचप्रवृत्तिविषये यागादाविष्टसाधनत्वादे रनुमानेनैव बोधोपपत्तेर्नपुनर्वाच्यत्व कल्पनावसरः। भवतिहि- अयमत्रप्रवर्ततामित्याकारकेच्छाविषयत्वमिष्टसाधनत्व व्याप्तम्। अतस्तेनतदनुमानम्। अत्रासुखेसुखत्वभ्रमेणसुखएववासुखं मेजायतामितीच्छाविषयत्व सत्वेपीष्टसाधनत्वाभावात्तत्र व्यभिचारवारणाय हेतावाकारकपर्यन्तानुधावनम्। प्रतारक ताद्दशेच्छाविषये व्यभिचारवारणाय - (आप्तेति) अत्रचेच्छाविषयत्व मिच्छाविषयीभूत प्रवृत्तिविषयत्वम्बोध्यम्। तेनप्रवृत्तौ तदाश्रयेपुरुषेवा इच्छाविषये इष्टसाधनत्वाभावेपि नव्यभिचारः। यागादावेवचहेतु सत्वादिष्टसाधनत्वानुमानम्।

अत्रच यद्यपिवक्ष्यमाणरीत्या व्यापारत्वमिच्छात्वमेववा लिङादिपदशक्यतावच्छेदकम्। तथापितेनरूपेणोक्तं विधेच्छायाएव लिङादिपदाद्बोधः। तत्र द्धातुप्रत्ययादि समभिव्याहारस्य नियामकत्वात्। भवतिहि- मृदस्तिपात्रंकरिष्यामीत्यादौ पात्रत्वेन सामान्यरूपेण मृण्मयपात्रविशेष्यको बोधस्समभिव्याहारात्। प्रवृत्तिसामर्थ्याच्च प्रवृत्त्याश्रयस्य पुरुषस्यबोधः, वचनेङ्गितादिनाचाप्तत्वेवगते इच्छायामाप्तनिष्ठत्वस्य समानसंवित्संवेद्यतया यागादौ ताद्दशेच्छाविषयत्वस्य बोधइतिनहेत्वसिद्धिः। तेनोक्तविधसामग्रया हेतुज्ञानेजाते इष्टसाधनत्वाद्यनुमानं सुलभमेव। अतश्चान्य लभ्यत्वादिष्टसाधनत्वादे र्नलिङादिवाच्यत्वम्॥ .... .... .... ....

किञ्चभवन्मते येनस्वतएवपाकादाविष्टसाधनत्वादि बुद्ध्याप्रवृत्तं तस्यपाकवर्तमानतादशायां चैत्रः पचेदितिप्रयोगापत्तिः। इष्टसाधनत्वादि विशिष्टपाकानुकूलकृतिमत्वस्य चैत्रेऽबाधितत्वात्। चैत्रः पचतीतिवद्वर्तमानत्वाबोधेपि क्षतिविरहात्। मन्मतेतुताद्दशप्रवृत्तेः प्रेरणाप्रयोज्यत्वाभावा द्विषय बाधेनाप्रामाण्योपपत्तिस्ताद्दशप्रयोगस्येतिवैषम्यम्। .... .... ....

ननुभवन्मतेपि यत्रान्यप्रेरणया चैत्रस्यप्रवृत्तिस्तत्र पाकवर्तमानता दशायांचैत्रःपचेदितिप्रयोगस्य प्रमाण्यापत्तिः, पाकानुकूलायाश्चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्याबाधात्, वस्तुतस्तु स्वतासिद्धेष्टसाधनता ज्ञानजन्यप्रवृत्तेरपिप्रेरणाप्रयोज्यत्वस्वरूपयोग्यतया प्रेरणाप्रयोज्यत्वात्तत्रापि चैत्रःपचेदिति प्रयोगापत्तिरनिवार्यैःव। नहितत्रफलोपहित प्रयोज्यत्वविशिष्टा कृतिश्शाब्दबोधे भासते। नहु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शश्शाब्दबोधेष्यालस्यादिना प्रवृत्त्यनुत्पत्तेरितिचेन्न । प्रवृत्तित्वावच्छिन्नंप्रतिनप्रेरणायाः प्रयोजकता व्यभिचरात्, अपितुप्रेरणोत्तर प्रवृत्तित्वावच्छिन्नं प्रति, इयंप्रवृत्तिः प्रेरणाप्रयोज्या - इयंन-किन्तुस्वतएवेत्यादि सर्वलौकिकव्यवहारात् , यद्वाप्रेरणाप्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यं धर्मान्तरमेवेत्यपि वक्तुंशक्यं अतएवतत्प्रयोजकतावच्छेदकतया प्रेरणात्वमखण्डोधर्मो लोकवेदसाधारण इत्यपिवक्ष्यते । तस्यचप्रवृत्तित्वव्याप्यधर्मस्य लिङादिसमभिव्याहारस्थले लक्षणया आख्याताद्बोधः । सामान्यधर्मेणैववा प्रेरणाप्रयोज्यव्यक्त्युपस्थितिरित्याद्यन्यदेतत् । सर्वथास्वतास्सिद्धेष्टसाधनता ज्ञानजन्यप्रवृत्तिंप्रति नप्रेरणायास्स्वरूपयोग्यतयापिप्रयोजकत्वमिति नतादृशप्रवृत्तिमति लिङादिमद्वाक्यप्रयोगापत्तिः । प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायान्तु प्रयोगापत्तिरेवनिवार्या ; नास्माभिः प्रेरणायाविषयतासम्बन्धेनैव प्रवृत्तावन्वयइत्युच्यते । नवाप्रेरणाविषयीभूत प्रवृत्तिविषयत्वेन यागादौयेन तादृशप्रयोगापत्तिश्शंक्येत - किन्त्वतएवसाक्षात्सम्बन्धपरित्यागेनस्वज्ञानजन्यानुमितिप्रयोज्यत्व संसर्गेणाख्यातार्थ प्रवृत्तौप्रेरणायाः प्रकारत्वम् । अस्तिहिप्रेरणाज्ञानजन्येष्टसाधनत्वाद्यनुमितेः प्रवृत्तिम्प्रतिजनकत्वात्प्रयोजकत्वम् । उपपादयिष्यत एतदुपरिष्टात् तत्प्रेरणाज्ञानंस्वप्राक्कालीन स्वज्ञानोपधेयमेवस्वरूपेण तद्व्यक्तित्वेन संसर्गमध्येनिवेश्यते । प्रथमस्वपदम् तत्तत्प्रवृत्तिव्यक्तिपरं । द्वितीयस्वपदम् तत्तल्लिङादिव्यक्तिपरम् । तेनतत्तत्प्रवृत्तिप्रागभावकालेयल्लिङादिपदज्ञानम् तेनोत्पादितम् यत्प्रेरणाज्ञानं तज्जन्येष्टसाधनत्वानुमिति प्रयोज्यत्वस्वरूपयोग्यत्वं संसर्गइतिफलितार्थः । अतश्चप्रवृत्तिवर्तमानतादशायां अनेनसंसर्गेण प्रेरणावत्त्वस्यप्रवृत्तौ बाधान्नतादृश प्रयोगापत्तिरस्मन्मते । अन्यदीयप्रेरणाप्रयोज्य प्रवृत्तिप्राक्काले अन्यदीयलिङन्तप्रयोगस्तु राजप्रेरितप्रवृत्तिकालेपदात्यादीना मन्येषामाप्तादीनाञ्च लिङन्तप्रयोग दर्शनादिष्टापत्त्यैव नापादनीयः । सम्भवतिहि तत्रराजप्रेरणामादायापि प्रयोगोन्यदीय प्रेरणामादायच । तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिस्वरूपयोग्यत्वात् ॥ .... ....

अतस्सिद्धन्ततार्किकरीत्या - इष्टसाधनत्वादे र्लिङाद्यर्थत्वम् । अपितुपूर्वोक्तरीत्याप्रवर्तकेच्छायाएव ॥ .... .... ....

" विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषुलिङ् . लोट् . छन्दसिलिङर्थेलेट्-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यादि पाणिन्यनुशासनादयमेवार्थो विज्ञायते । विधिर्निकृष्टस्यप्रेरणम् । निमन्त्रणम् - अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्तकेच्छा । यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम् । तत्रप्रमाणान्तरेणाभोजनेप्रत्यवायावगमात् । अतएव विधिस्थलइवाग्रिमयोरपिच लाघवादिष्टसाधनत्वानुमापकत्वमेव । कृतिसाध्यत्वानुमापकत्वन्तु सर्वत्रैव । मास्तुवातत् । आमन्त्रणम् - कामचारानुज्ञा । तत्रप्रेरकस्याऽऽग्रहाभावमात्रम् । अन्यत्र सर्वत्राऽऽग्रहोप्यधिकोभासते । अधीष्टंसत्कारपूर्वकमुत्तमंप्रतिप्रेरणम् । एतेषुचतुर्षुप्रवर्तनात्वस्यैकस्यानुगतत्वात्तेनैव रूपेणैकैवशक्तिः । अन्यांशस्यतु प्रमाणान्तरलभ्यत्वान्नशक्यत्वम् । सम्प्रश्नप्रार्थनयोस्त्वतिरिक्तैव शक्तिः । किन्त्वमधीयीथाः, भवतिभेप्रार्थना, वेदमधीयीयेत्यादौ तत्रप्रवर्तनात्वाभावात् । आनुशासनिकी वानिरूढलक्षणा । "हेतुहेतुमतोर्लिङ्" "कामप्रवेदनेकच्चिदि" त्याद्यनुशासनेनैव हेतुत्वादौप्रचुरप्रयोगेण प्रवर्तनात्वस्यैव शक्यतावच्छेदकत्वात् । प्रवर्तनात्वञ्च प्रवृत्त्यनुकूलव्यापारत्वम्, अनुकूलत्वञ्च जनकत्वम् । तच्च लोके पुरुषाशयवृत्ति । वेदेच तदभावादिच्छाभिन्नस्य कस्यचित्प्रवर्तनात्वम्बोध्यम् । अत्रापीष्टसाधनत्वेन प्रवर्तनात्वेन रूपेण वेदेलिङाद्यर्थइति मण्डनमिश्राः । अर्थभावनाविधानानुकूलाया लिङादिनिष्ठ शक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प तज्ज्ञानस्यप्रवृत्तिम्प्रतिकारणत्वमात्रं - कल्प्यतइतितु पार्थसारथिः । .... .... ....

वस्ततस्त - इष्टसाधनत्व कृतिसाध्यत्वयो र्विनिगमनाविरहः । तयात्वेवा लोकेपि तस्यैवतथात्वापत्ते स्तार्किकमतोक्त दूषणापत्तिः । शक्तिप्रवर्तनात्वादिमतेपि उक्तशक्तेस्संख्याभिधानानुकूलशक्त्या लिङ्त्वादिनैववाविनिगमनाविरहस्तदवस्थएव. अतः क्लृप्तेनाविनिगमनाविरहे कल्प्यमन्यास्सिद्ध्यती" तिन्यायेनालौकिको धर्मएव लिङादिनिष्ठःप्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते. तज्ज्ञानञ्च प्रवृत्तिम्प्रतिकारणमिति न्यायसुधाकृन्मतमेव कथञ्चिद्युक्तमितिव्यक्तम् कौस्तुभे ।

वस्तुतस्तु लोके नेच्छायाः स्वरूपेणप्रवृत्तिम्प्रतिकारणत्वम् तदभावेपि तद्भ्रमेणप्रवृत्त्युदयात् स्वरूपेणकारणत्वे लिङुक्तिवैयर्थ्याच्च. नापि तज्ज्ञानस्यकारणत्वम्, इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषंप्रति प्रयोजकतयैव। न्वयव्यतिरेकसिद्धौ कारणत्वकल्पने मानाभावात् । अतः प्रवृत्तिप्रयोजकत्वमेव प्रवर्तना-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वंवाच्यम् तदपिचनलिङादेश्शक्यतावच्छेदकम् गौरवादन्यलभ्यत्वाच्च । प्रवृत्ति र्हि आख्यातादेव लभ्यते प्रयोजकत्वन्तु संसर्गबलेनेति. नतदपिशक्यतावच्छेदक कोटिप्रविष्टम्, अपितुलोकवेद साधारण्येन व्यापारत्वमेवशक्यतावच्छेदकम् । अ स्तिहि लौकिके लिङादिशब्दोपस्थाप्ये पुरुषाशयेप्रवृत्तिसाधनीभूतेष्टसाधनत्वाद्यनु मापकतया प्रवृत्तिप्रयोजकव्यापारत्वम् । वेदेपि शब्दश्रवणोत्तरकाल मनुमायैव त त्कार्यदर्शनादिच्छायाश्चापौरुषेये वेदे बाधात्कार्यानुमेयमलौकिकं धर्मं लिङादि - निष्ठं लिङादिवाच्यं परिकल्प्य तस्यतदनुमापकत्व कल्पनात्तत्रापि प्रवृत्तिप्रयोजक व्यापारत्वं । अतउभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् । .... 

यद्यपिच तदन्यत्राप्यतिप्रसक्तम् । तथापिसमभिव्याहारबलाद्विशेषलाभः तथाहि लिङ्पदाद्व्यापारत्वावच्छिन्नव्यापारमात्रोपस्थितावपि तस्याख्यातोपात्त-कृतौ निरुक्तसंसर्गेणान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्त्वेन रूपेण बोधवेळायां तेन तेनप्रमाणेन विशेषलाभोनासुलभः. इष्यतएवहि भूतलंघटवदित्यादौ घटपदाद्घ टत्वावच्छिन्न घटमात्रप्रतीतावपि तस्य योग्यसंसर्गेण भूतलेघटान्वयेबुद्धे तत्संस र्गस्य तत्त्वेनजिज्ञासायां प्रमाणान्तरेण संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतिव-द्भूतलवृत्ति घटविशेषप्रतीतिः । .... .... ....

तदयमत्रक्रमः प्रथमंलिङादिपदाद्व्यापारत्वेन सामान्यरूपेणैव व्यापा रोपस्थितिः पश्चादाख्यातोपस्थितकृतौ तस्य स्वविषयकज्ञानविशेषजन्यानुमिति-प्रयोज्यत्वसंसर्गेण तत्त्वेनानुपस्थितेनैवान्वयः । शाब्दबोधश्च व्यापारवती यागा दिकृतिरिति । नचलिङर्थविशेष्यकएव शाब्दबोधइति भ्रमितव्यम्, " भावप्रधान माख्यात " मितिस्मृत्या लकारार्थ प्रकारक शाब्दबोधत्वावच्छिन्नंप्रति अर्थभाव नाविशेष्यतासंबन्धेनाऽऽख्यातपदजन्योपस्थितिः कारणमिति कालादि साधार-ण्येनैककार्यकारणभावकल्पना लाघवानुरोधेन चाख्यातार्थकृतेरेव मुख्यविशेष्य त्वात् । सम्प्रश्नप्रार्थनयोरपिविषयतासम्बन्धेन तस्यामेवान्वयः । हेतुत्वादेरपि स्वरू पसम्बन्धेन तस्यामन्वयेपि तस्या उपलक्षणत्वादिना इतरक्रियायामन्वयः । लिङो वाहेतुमत्त्वरूप संसर्गतात्पर्यग्राहकत्वं । तेनाख्यातार्थस्यैव " अतिमाछे " दित्या दावितरक्रियान्वयो हेतुमत्त्वसंसर्गेणैवेति नकश्चिद्विरोधः ॥ .... ....

एवं "यदिशालीन्भुंजीत तर्हि दध्युपसिंचे" दित्यादौ कामप्रवेदनेपि स्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विषयेच्छानिमित्तकत्वंसंसर्गः. लिङ् तात्पर्यग्राहकः. आख्यातमेवेच्छालक्षकम्। यदि शालीन्भोक्तुमिच्छेदिति निमित्तत्वमेवसंसर्गइति नक्वापि व्युत्पत्त्यन्तरम्। अतश्च देवदत्तःपचेदित्यादौ लोकेतावच्छाब्दबोधोत्तरं स्वसंसर्गस्य तत्त्वेनजिज्ञासायां चैत्रप्रेरितोहंपचामीत्यादि व्यवहारवशाद्व्यापारस्येच्छारूपत्वेऽवगते पाकविषयकृतिसम्बन्धा त्पाकेयंप्रवर्ततामित्याकारत्वेच तस्यास्सिद्धे तदाश्रयस्य प्रयोजकवृद्धस्य प्रमाणान्तरेणाप्तत्वावगमे समानसंवित्संवेद्यतया पाकेयंप्रवर्ततामित्याद्याकारकाप्तनिष्ठेच्छाविषयकृतिविषयत्वरूप हेतुज्ञानं मानसंजायते, ततश्च तस्मिन्हेतौ क्रियान्तरदृष्टान्तेनेष्टसाधनत्व कृतिसाध्यत्व योर्व्याप्तिस्मरणा दुभयविषयिणी अनुमितिरुत्पद्यते. क्वचिच्चानिष्टसाधनीभूताकरणप्रतियोगित्वादेरपि सामग्रीवशात्। तत्सामग्रीच - अयमत्रप्रवर्ततामित्याकारक स्वभङ्गनिमित्तकानिष्टकर्तृच्छाविषयत्वरूप हेतुपरामर्शादिरूपा। स्वपदमिच्छापरम्। इदञ्चतत्रतत्र कौस्तुभादौ स्पष्टम्। तस्याश्चप्रवृत्तिप्रयोजकत्वं स्पष्टमेवेति संसर्गस्य तत्त्वेनलाभ इच्छाविशेषलाभश्चोभयं सुलभम्। वेदेपि लिङादिशब्दश्रवणोत्तरकालं व्यापारत्वरूपेण व्यापाररूपपदार्थोपस्थित्या निरुक्तसंबंधेन व्यापारवतीयागादिकृतिरिति शाब्दबोधे जाते संबंधस्य तत्त्वेनजिज्ञासायां वेदस्थलिङादिप्रेरितोहं यागादिकरोमीत्यादि व्यवहाराद्यागविषयककृतिसंबंधाच्च तस्यलिङादिनिष्ठत्वं यागेयंप्रवर्ततामित्याकारकत्वञ्चावगम्यते। अतएववर्णात्मकलिङादेर्नित्यत्वात्तद्वृत्त्यलौकिकधर्मस्यापिनित्यत्वं। नचभ्रमप्रमासाधारण्येन तज्ज्ञानस्यैवानुमितिजनकत्वाल्लोकवद्वेतात्सिद्धौप्रमाणाभावः। वेदेर्थज्ञानस्य भ्रमत्वानुपपत्त्यातात्सिद्धेः। तस्मिन् यागविषयककृतिविषयिताचनज्ञानादिविषयतासाधारणी अतिरिक्तावा,अपितुपाकेऽयंप्रवर्ततामित्यादिलौकिकेच्छानिष्ठविषयितासाधारणी इच्छासामान्यनिष्ठविषयिताभिन्नालिङाद्यर्थमात्रनिष्ठा। अनुगतप्रतीतेरेवतत्रप्रामाणत्वात्. अतश्च लिङादेर्निर्दोषत्वेनानाप्तभिन्नत्वेवधारिते समानसंवित्संवेद्यतयैव प्रतारणाद्यजन्यहिताहितोपदेशजनकनिष्ठ निरुक्ताकारक व्यपारविषयीभूत कृतिविषयत्वरूप हेतुज्ञानं तथैव मानसं जायते। अतएव लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वेसति तद्भिन्नोपदेशाकर्तृत्वमाप्तत्वं। अतश्च तेनेष्टसाधनत्वाद्यनुमितिर्लोकवद्देवेनानुपपन्ना. नच भ्रमप्रमासाधारण्येनेष्टसाधनत्वाद्यनुमितेरेव प्रवृत्तिप्रयो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जकत्वान्नभवन्मते यागादावपीष्टसाधनत्वादिसिद्धिः ज्ञानस्यास्मन्मतेस्वतः प्रमाणत्वेनदोषाद्यभावेप्रमात्वस्यैवसिद्धेः । सल्लिङ्गकपरामर्शस्यभ्रांतानुमित्यजनकत्वाच्च ।

अतस्सिद्धं शक्यतावच्छेदकस्यातिप्रसक्तत्वेपि लोकेवेदेचाविशेषलाभो-निरुक्तसंसर्गलाभश्चेति ।

अथवा लोकवेदसाधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धोव्यापारत्वरूपोखण्डधर्मएवानतिप्रसक्तोलिङादिपदशक्यता-वच्छेदकः. .... .... .... .... ....

अथवा अयमत्रप्रवर्ततामित्याकारकत्वरूपस्य लोकवेदसाधारणस्य विषयिताविशेषस्य पूर्वमुक्तत्वात्सएव लिङादिशक्यतावच्छेदकः । ....

एष्टव्यश्चायमेव प्रकारः, शाब्दबोधत्वावच्छिन्नं प्रति लक्षणादिजन्यशाब्दबोधत्वावच्छिन्नं प्रतिवा लोकवेदसाधारण्येन तात्पर्यज्ञानस्य भट्टमते कारणत्वनिर्वाहार्थं । नह्यस्मात्पदादयमर्थोबोद्धव्य इत्याकारकेच्छारूपं तात्पर्यं वेदे संभवति । अतस्तत्रातिरिक्तश्शब्दनिष्ठोधर्मविशेषएव तात्पर्यं भट्टमते वाच्यं । नच तज्ज्ञानस्य कारणत्वं लोके क्लृप्तं । अत्रैवातिरिक्तकार्यकारणभावकल्पने मानाभावएव । अतोविषयिताविशेषस्यैवानुगत व्यवहारादुभयसाधारणत्वमङ्गीकृत्यकारणतावच्छेदकत्वं वाच्यं, तद्वदिहापि विषयिताविशेषस्यैव प्रवृत्तिप्रयोजकतावच्छेदकत्वं लिङादिपदशक्यतावच्छेदकत्वञ्च । .... ....

यदितु निरुक्तविषयिताविशेषस्येच्छात्वव्याप्यत्वमेवेत्याग्रहस्तदा वैदिकलिङादिनिष्ठव्यापारस्यापीच्छारूपत्वे न काचित्क्षतिः । गुणे गुणानङ्गीकारस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात् . श्रद्धेयत्वेपिवा शब्दस्य द्रव्यत्वोपपत्तेः जीवातिरिक्तेश्वरेनित्येच्छांगीकारवद्वैदिकशब्देपि नित्येच्छांगीकारे बाधकाभावात् ।

यदितु इच्छात्वस्यात्मनिष्ठत्वव्याप्यत्वमेवेत्याग्रहस्तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेनेश्वरइवात्मत्वांगीकारे मानाभावादुपनिषदादिप्रमाणगम्यमीश्वरमप्यंगीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थस्तात्पर्यरूपाच । वेदस्थलिङादिप्रेरितोहं यज इत्यादिव्यवहारस्तु तादृशेच्छाया लिङादिबोध्यत्वादिति सर्वथानेष्टसाधनत्वादिकं विध्यर्थः । .... ....

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वस्तुतस्तु इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका लाघवात् । विशेषलाभः पूर्ववत् । वेदेत्वलौकिकप्रेरणायां लक्षणा अन्यत्सर्वपूर्ववदित्यपि वक्तुं शक्यं । एवञ्चैत्रोनपचेन्नकळञ्जंभक्षयेत् इत्यादौनञ्समभिव्याहृतलिङादिस्थलेपि नतावत् बलवदनिष्टाननुबंधित्वंलिङर्थः - तद भावोनञाबोध्यतइतिपक्षस्तुवचः पूर्वमेवनिरस्तत्वात् । नाप्यनिष्टसाधनत्वे लिङोलक्षणानञ्पदंतात्पर्यग्राहकमिति न वीनतार्किकमतंयुक्तं ज्योतिष्टोमेन न यजेतेति लौकिकवाक्यस्य प्रामाण्यापत्तेः । श्रुत्या स्वर्गसाधनत्वावगमेपि तात्कालिकानिष्टसाधनत्वस्य यागेबाधाभावात् । नहि नरकादिरूपकालांतरभाव्यनिष्टजनकत्वमेव निषेधार्थ इत्यत्र प्रमाणमस्ति । अग्निं न स्पृशे इत्यादि लौकिकवाक्ये व्यभिचारात् । "नातिरात्रे षोडशिनंगृह्णाती" त्यादि वुभयथापि व्यभिचाराच्च । .... ....

यदिहि तात्कालिकानिष्टसाधनत्वं तत्र निषेधार्थस्तदा तस्य प्रमाणांतरसिद्धानुवादकत्वेपि "अतिरात्रे षोडशिनंगृह्णाती" त्यनेनेष्टसाधनत्वस्यबोधकत्वंगतयानित्यवत्करणापत्तिः । अथ तत्रवैयर्थ्यभियाक्रतुगतवैगुण्यरूपानिष्टसाधनत्वमेव नानृतंवदेदितिवत्तदर्थस्तदैकस्यैव क्रतुसाद्गुण्यतद्वैगुण्यजनकत्वविरोधः । अथविरोधपरिहारार्थं वैगुण्यापेक्षयासाद्गुण्याधिक्यंकल्प्येत तदातात्कालिकानिष्टसाधनत्ववद्वैगुण्यस्यापि नांतरीयकत्वापत्तेर्नित्यवत्करणापत्तिः. अस्मन्मते तुवक्ष्यमाणरीत्या प्रवृत्त्यभावप्रयोजकप्रवृत्तिसामग्रीविघटनाय षोडशिग्रहणाभावेपीतराङ्गैरेवक्रतुमहोपकारसिद्ध्यनुमितेरेव तत्र संसर्गघटकतयोक्तविधानुमित्या प्रवृत्त्यभावोपपत्तौ तत्रानिष्टसाधनत्वाननुमानात् । अतएवविध्युत्तरनिषेधेसर्वत्रविधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनाद्द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि श्रौतविधिविरोधे लौकिकवाक्यस्याप्रामाण्यं नानुपपन्नं । .... ....

एतेनेष्टोत्पत्तिनांतरीयकदुःखाधिकदुःखाजनकत्वमेव शक्त्यालक्षणयावा नञ्समभिव्याहारेलिङाद्यर्थः । तदभावस्तादृशदुःखजनकत्वरूपो बलवदनिष्टानुबंधित्वं नञर्थः । तस्यच धात्वर्थेन्वयः । नातोलौकिकवाक्यस्यप्रामाण्यापत्तिर्निर्मूलत्वादित्यपास्तं "नातिरात्रेषोडशिनंगृह्णाती" त्यादावपि तदापत्तेः ।

किञ्चैतेषु सर्वेष्वपि पक्षेषु रागिणः कळञ्जभक्षणवर्तमानतावेळायाम

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


चैत्रः कीदृश इति प्रश्ने इष्टोत्पत्तिनांतरीयकदुःखाधिकदुःखजनक कळञ्जभक्षणानुकूलकृतिमानित्युत्तरवन्नकळञ्जंभक्षये दित्युक्तसंबद्धप्रलापित्वानापत्तिः । श्येनवर्तमानतादशायांच श्येनेन नयजेतेत्युत्तरापत्तिः । अस्मन्मते तु वक्ष्यमाणरीत्या लिङर्थस्येच्छायाः स्वज्ञानविशेषजन्यानुमितिसंपादित प्रवृत्तिसामग्रयभावकालीनाभावप्रतियोगित्वसंबंधेनाख्यातार्थे कृतावन्वयान्नतदापत्तिरिति वैषम्यं किञ्च चैत्रः कीदृशइति प्रश्नस्य नैवेदमुत्तरं प्रथमांतमुख्यविशेष्यकत्वाभावात् । कीदृशी कृतिरित्यस्यापि नोत्तरं लिंगधर्मितावच्छेदकप्रश्ने तदनालिंगितोत्तरस्यासंबद्धत्वात् । अतएव कीदृशी कृतिरिति प्रश्नस्यापि चैत्रः पचति नपचतीत्यादिनैवोत्तरं लिंगानालिंगतत्वात् । अतएव कृतिमुख्यविशेष्यकत्वमेवभट्टसम्मतं. प्रथमांतमुख्यविशेष्यकत्वे तादृशोत्तरस्यासंबद्धत्वापत्तेः. अतोनञसमभिव्याहारस्थले प्रवर्तनावन्निवर्तनापि निवृत्तिप्रयोजकतया अभ्युपेया । आचार्योपदेशादहं निवृत्तो नस्वतो नवान्योपदेशादिति व्यवहारदर्शनात् । निवर्तनात्वञ्च प्राचांमते प्रवर्तनात्ववदेव निवृत्तिजनकव्यापारत्वादिरूपं भिन्नम् बोध्यं । तदवच्छिन्नञ्च लोके इच्छा वेदेचालौकिकोधर्मइत्यादि सर्वं पूर्ववत् । शक्ततावच्छेदकञ्च तस्यानञ्पदत्वं. प्रवर्तनावाचकंच लिङादिपदं तात्पर्यग्राहकं इतरथा नपचति चैत्रइत्यादौ नञ्पदादत्यंताभावस्यैव बोधात् । लिङावा निवर्तनोच्यते :नञ्पदं तुप्रवृत्त्यभावानुवादकं सत्तात्पर्यग्राहकमित्यादि प्राचीनमतंकौस्तुभएव व्यक्तं ।

वस्तुतस्तु अनेकशक्तिकल्पनापत्तेर्नप्रवर्तनानिवर्तनयोः प्रथक्छक्तिःनप्रवृत्त्यभावनिवृत्त्योर्वाभेदः, प्रमाणाभावाद्गौरवाच्च । अपितु आख्यातस्य कृतावेव. नञोऽभावएव । लिङादेः प्रवर्तनानिवर्तनासाधारणव्यापारादावेव । शक्यतावच्छेदकञ्च पूर्ववदतिप्रसक्तमनतिप्रसक्तंवा प्रवर्तनानिवर्तनासाधारणमेकमेव ।

यदितु प्रवर्तनानिवर्तनासाधारण्येन नैकविषयितेत्याग्रहः तदास्तु निवृत्तिविषयत्वावच्छिन्ने लिङादेर्लक्षणा नञ्पदं तात्पर्यग्राहकमिति, तस्यचालिङर्थस्य स्वविषयज्ञानविशेषजन्यानुमिति प्रयोज्याभाव प्रतियोगित्वसंसर्गेणाख्यातार्थे कृतावेवान्वयः, नञ्पदञ्च संसर्गविशेषेपितात्पर्यग्राहकं, अतोनिरुक्तससंर्गेण व्यापारवती कळञ्जभक्षणकरणिकाकृतिरिति शाब्दबोधे वृत्ते संसर्गस्यत -

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्त्वेन भानंपूर्ववत् । अत्रहि निवारणाविषयकज्ञानात्कळञ्जभक्षणेयं निवर्ततामित्याकारकात्तेच्छाविषयीभूताभाव प्रतियोगिकृतिविषयत्वरूपहेतुज्ञानं, तेन कळञ्जभक्षणे अनिष्टसाधनत्वानुमितिर्जायते. एवं " नातिरात्रेषोडशिनंगृह्णाति " त्यादौविहितनिषेधे तादृशोक्तविधहेतुज्ञानाच्छोडशिग्रहणे अतिरात्रानुपकारकत्वानुमितिद्वारा तद्व्यतिरेकेणैवेतरांगैः क्रतूपकारासिद्धेरप्यनुमानं, उक्तानुमितेश्च प्रवृत्तिसामग्रीविघटकतया प्रवृत्यभावप्रयोजकत्वं । तथाहि यत्रानिष्टसाधनत्वानुमितिस्तत्र प्राचीनकर्मवशाद्द्वेषगतबलवत्वेसति बलवदनिष्टानुबंधित्वज्ञानरूपप्रतिबंधकसंपादनात्तदभावघटितसामग्रीविघटनं. यत्रतु इष्टसाधनत्वाभावानुमितिस्तत्रतया पूर्वावगतेष्टसाधनताज्ञाने प्रयोगविशेषावच्छेदेन अप्रामाण्यज्ञानात्तदभावरूपप्रवृत्तिसामग्रीविघटनं ।

यद्यपि चोभयत्रापि प्रतिबंधकसंसर्गाभावस्यात्यंताभावादिरूपस्य नित्यतया नानुमितिनाश्यत्वं तथापि प्रतियोगिसत्त्वस्याभावसंबंधनाशकत्वादभावीयविशेषणतासंबंधरूपस्य कारणतावच्छेदकसंबंधस्य प्रतियोगिसत्त्वे नाशात्तस्याः प्रवृत्तिसामग्रीविघटकत्वं सुलभमेव । अतश्चालिङर्थस्य स्वविषयकज्ञानविशेषजन्यानुमिति जन्यस्वनिरूपितकारणातावच्छेदकी भूतसंबंधनाशकालीनाभावप्रतियोगित्वसंसर्गेणाख्यातार्थकृतावन्वयइति फलितोर्थः । प्रथमस्वपदं लिङर्थपरं । द्वितीयस्वपदं प्रवृत्तिपरं । अत्रच दैववशासंपन्नप्रवृत्तिसामग्र्यत्यंताभावकालीनप्रवृत्त्यभावदशायां नकळञ्जं भक्षयेदि तिप्रयोगापत्तिवारणाय उक्तसंबंधनाशकालीनेति । यत्र कळञ्जभक्षणमनिष्टसाधनमिति वाक्यादनिष्टसाधनत्वादिशाब्दबोधस्तत्र तज्जन्यसंबंधनाशकालीनाभावदशाया मुक्तप्रयोगापत्तिवारणायानुमितिजन्येति नाशविशेषणं । अनिष्टान्वयव्यतिरेकानुविधायित्वादिहेत्वंतरज्ञानजन्यानिष्टसाधनत्वानुमिति जन्यसंबंधनाशकालीनप्रवृत्त्यभावदशायां तादृशप्रयोगापत्तिवारणाय स्वविषयकेत्यादि. अत्र निरुक्तसंबंधेन निवारणाप्रयोज्याभाववर्तमानतादशायां तादृशप्रयोगापत्तिरतस्स्वविषयकज्ञानमपि स्वध्वंसासमानकालीनस्वज्ञानोपधेयमेव विशिष्यतत्तद्व्यक्तित्वेन प्रविष्टमिति ज्ञापनाय विशेषपदं. अत्र प्रथमस्वपदं प्रवृत्तिकारणतावच्छेदकीभूततत्तत्संबंधव्यक्तिपरं. द्वितीयस्वपदन्तु पूर्ववल्लिङादितत्तद्व्यक्तिपरं. तेन निरुक्तसंबंधध्वंसा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


समानकालीनलिङ्गादिज्ञानोपधेय हेतुज्ञानजन्यानुमितिजन्येत्यादिः फलितोर्थः । एवञ्चानुमितित्वस्य विशिष्याप्रवेशेपि नक्षतिः. तत्सिद्धं निवारणरूपस्य लिङ-र्थस्यानेन संबंधेनाख्यातार्थकृतावन्वयइति, नञ्पदंतु स्वार्थस्याभावस्य प्रतियो-गितासंसर्गेणाख्यातार्थकृतावन्वयानुवादकं सलिङ्गाद्यर्थतात्पर्यग्राहकमिति सर्व-मनाकुलं. तत्सिद्धंप्रवर्तनाप्रेरणाविध्यपरपर्याया भावना नञ्रहितवाक्येलिङ्गाद्यर्थः। सैवच शब्दनिष्ठत्वाद्वेदे शाब्दीभावनेत्युच्यते । तच्चच्छक्ततावच्छेदकंतु लिङ्त्वं लोट्त्वञ्च, नतुतव्यत्वादिकमपि, तेषां " प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति ,, स्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः. प्रमाणांतरप्रमितेर्थे पुरुषनिष्ठापुरु-षप्रवर्तना प्रैषः. अतिसर्गः कामचारः. " स्वाध्यायोध्येतव्य " इत्यादौतु अ-प्राप्तार्थत्वात्प्रैषबाधेन विधौलक्षणेति सांप्रदायिकाः । लिङ्गाद्यादेशत्वंवा शक्त-तावच्छेदकं, लयमाणत्वात्. अस्याश्च शाब्दभावनायाः अर्थभावनावदेवांशत्रयमिति व्यवहरंति. तत्र प्रवृत्तिनिवृत्त्योर्यथाक्रमं विधिनिषेध प्रयोज्यत्वात्पुरुषार्थानुबंधि-त्वाच्च भाव्यत्वं. लिङ्गादिजन्यविधिनिषेधज्ञानञ्च भाव्यप्रयोजकत्वात्करणं. अ-स्यच करणत्वेनव्यवहारमात्रं, नतु तस्य शाब्दबोधे करणत्वेनान्वयः, अशाब्दत्वात् एवं प्राशस्त्याप्राशस्त्यज्ञानं यथाक्रमं विधिनिषेधयोरितिकर्तव्यता, तदपि वस्तु-तएव, नतु शाब्दबोधेन्वयोऽशाब्दत्वादेव. तेच प्राशस्त्याप्राशस्त्ये तत्तद्विधिनिषे-धसंन्निधिपठितार्थवादैर्लक्षणया प्रतिपाद्येते ।

ननु किमिदं प्राशस्त्यंअप्राशस्त्यंवा.नतावद्गुणवत्त्वंदोषवत्त्वंवा.गुणदोषत्वयो-रेवनिर्वक्तुमशक्यत्वात्. नहि " वायुर्वैक्षेपिष्ठादेवता ,, " अपशवोवा अन्येगो-अश्वेभ्य ,, इत्यादौ वायुक्षेपिष्ठत्वादिकं गुणः । अपशुत्वं गवाश्वगतप्राशस्त्या-भाववत्त्वंवादोषः। तज्ज्ञानस्य प्रवृत्तित्वावच्छिन्नंप्रति व्यभिचारित्वेनानुपयोगित्वात् क्षेपिष्ठत्वादेः शक्त्यैवोपस्थितत्वेन लाक्षणिकत्वासिद्धांतभङ्गापत्तेश्च. नापि स्वर्गन-रकादिजनकत्वे. स्वर्गादिपदसमभिव्याहारादेव तत्सिद्धावर्थवादवैयर्थ्यापत्तेरिति-चेत् । क्रियाजन्यदुःखापेक्षया अधिकेष्टसाधनत्वं प्रशस्तत्वं. तज्जन्यसुखापेक्षया अधिकानिष्टजनकत्वमप्रशस्तत्वमित्येवंविधयोस्तयोरुपपत्तेः. नह्ययमर्थोन्यतस्सिद्धः विधिना इष्टानिष्टसाधनत्वमात्रस्यैवाक्षेपात्. अतएव यत्र नार्थवादः पठितस्त त्रविधिना तदाक्षिप्यतएव. नचैवंविधतज्ज्ञानस्य प्रवृत्तिनिवृत्त्योरनुपयोगः एवंवि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धज्ञानाभावेपि प्राचीनकर्मवशेन तात्कालिकसुखदुःखयोरुत्कटरागद्वेषसत्त्वे प्रवृत्तिनिवृत्त्योरुदयसत्त्वात् , एवंविधज्ञानसत्त्वेपिच प्राचीनकर्मवशेनैव प्रवृत्तिनिवृत्त्योरनुदयाच्चेतिवाच्यं । तथात्वेप्येवंविधज्ञानसत्त्वेक्रियाजन्यतात्कालिकसुखदुःखापेक्षया अधिकेष्टेप्रायशो लोके वेदेवा सर्वेषां पुरुषाणामुत्कटरागदर्शनेन तात्कालिकसुखापेक्षयाऽधिके दुखे उत्कटद्वेषदर्शनेनच तज्ज्ञानस्यरुच्यरुच्यात्मकोत्कटरागद्वेषोपयोगित्वस्य सर्वत्रसिद्धत्वात् । क्वचिदेवतु प्राचीनकर्मणऔत्कट्ये तत्सत्त्वेपि तदभावो नतु सर्वत्र, अत उत्कटप्राचीनकर्माभावे उक्तविधप्राशस्त्याप्राशस्त्यज्ञानस्य उत्कटरागद्वेषजनकत्वात्तद्द्वारा प्रवृत्तिनिवृत्त्योरुपयोगः । नचैवं यस्य स्वत एव रुच्य रुची तंप्रतिप्राशस्त्याप्राशस्त्यज्ञानस्यानुपयोगेन सर्वान् पुरुषान्प्रत्यनुपयोगइति वाच्यं । सर्वपुरुषान्प्रत्यनुपयोगेपि पुरुषविशेषंप्रत्युपयोगेनैवार्थवादप्रामाण्योपपत्तेः । स्वतस्सिद्धस्मरणवतोमंत्रजन्यस्मरणस्यानुपयोगेपि मंत्राम्नानवशेन तज्जन्यस्मरणस्याभ्युदयकारित्वकल्पनवदर्थवादाम्नानबलेन तद्बोधितप्राशस्त्यस्याभ्युदयकारित्वकल्पनयोपपत्तेश्च । एवंविधप्राशस्त्यादेश्च लक्षणयैवार्थवादैः प्रतिपादनात् लाक्षणिकत्वसिद्धांतस्यापि न भंगः । साच वाक्यलक्षणायां बाधकाभावादर्थवादस्थपदसमुदाये एकस्मिन्नेववा पदे लक्षणा । इतरपदानि तात्पर्यग्राहकाणीत्यन्यदेतत् । तच्च प्राशस्त्यमप्राशस्त्यंवा इतिकर्तव्यतात्वसंबंधेन शाब्दभावनायामन्वेतीति बहवः । स्वरूपसंबंधेन धात्वर्थादावेवान्वेतीतिकेचित् । .... .... ....

वस्तुतस्तु वक्ष्यमाणरीत्याऽन्यसुबंतार्थवदेककार्यकारणभावकल्पनालाघवानुरोधेन प्राशस्त्यस्य स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसंबंधेन प्रवृत्तौ, अप्राशस्त्यस्यच स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसंबंधेन प्रवृत्तावेवान्वयः । नचैवं प्रधानार्थवादेनैव क्रियाजन्यतात्कालिकदुःखापेक्षया स्वफले आधिक्यसिद्धौ अंगार्थवादवैयर्थ्यं, प्रधानजन्यफलापेक्षयांगजन्यफलस्य भेदाभावात्, क्रतूपकारेचाधिक्यासंभवादितिवाच्यं । तत्तदंगजन्यतात्कालिकदुःखकूटापेक्षया प्रधानफले आधिक्यबोधनार्थत्वात् । अतोविध्यर्थवादेषु प्रकृष्टफलकत्वरूपप्राशस्त्यलक्षणा । निषेधार्थवादेषुच प्रकृष्टदुःखजनकत्वरूपाप्राशस्त्यलक्षणेति मूलग्रन्थाल्लीलःपन्थाः । .... ....



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वस्तुतस्तु अभ्यनुज्ञाविध्यर्थवादेषु "नातिरात्रेषोडशिनंगृह्णातीत्यादि" निषेधार्थवादेषुच नैवंविधप्राशस्त्याप्राशस्त्यलक्षणासंभवः । नहि "हुतायां वपायां दीक्षितस्यान्नमश्नीया"दित्यत्र क्रियाजन्यानिष्टापेक्षयातृप्तयाख्यस्यफलस्याधिक्यंबोधयितुंशक्यं । निषेधप्रमितानिष्टस्याधिक्यावश्यंभावात् । क्रियाजन्यतात्कालिकदुःखापेक्षया आधिक्यस्य लोकसिद्धत्वेन निषेधसत्त्वे तज्ज्ञानस्य प्रवृत्त्यनुपयोगित्वात् । षोडशिग्रहणजन्यसुखापेक्षया तज्जन्यदुःखस्याधिक्यं नैवसंभावयितुंशक्यम् ।

अपिच श्येनार्थवादे श्येनजन्यतात्कालिकदुःखापेक्षया यद्यभिचाराधिक्यं बोध्यते तदा तज्ज्ञानस्य नैवप्रवृत्त्युपयोगित्वं । श्येनप्रयोज्यनरकादिदुःखापेक्षया आधिक्यंतु नैवबोधयितुंशक्यं । नहिंस्यादिति निषेधार्थवादेन तस्याभिचारापेक्षया आधिक्यबोधनाच्च । अतोविध्यर्थवादेषु विधेयतावच्छेदकसामानाधिकरण्येनबलवदनिष्टाननुबंधित्वरूपं प्राशस्त्यं लक्ष्यते । निषेदार्थवादेषुच निषेध्यतावच्छेदकसामानाधिकरण्येन बलवदनिष्टानुबंधित्वरूपमप्राशस्त्यं । अत्रानिष्टेबलवत्त्वमुत्कटद्वेषविषयत्वं, नत्वाधिक्यं. स्वर्गन्यूनेपि तात्कालिकदुःखे प्राचीनकर्मवशेन कदाचिदुत्कटद्वेषोदयात् , अतएवनैवतदायागादौप्रवर्तते । नरकन्यूनेपिच तात्कालिकसुखेप्राचीनकर्मवशेनोत्कटरागोदयाच्च, अतएवाभिचारादौ प्रवर्तते । अतएवयागादौकदाचित्प्राचीनशुभकर्मवशाद्बलवदनिष्टाननुबंधित्वं,नतुसर्वदा । अतएव विधेयतावच्छेदकसामानाधिकरण्येनेत्यनेन तस्य कालिकाव्याप्यवृत्तित्वं विवक्षितं । एवं"नकलञ्जंभक्षये"दित्यादौ कदाचिदेव शुभकर्मवशाद्बलवदनिष्टानुबंधित्वज्ञानम् । अत स्तत्रापिकालिकाव्याप्यवृत्तित्वसिद्ध्यर्थं निषेध्यतावच्छेदकेत्यादि । एतादृशाव्याप्यवृत्तित्वज्ञापनार्थमेव कौस्तुभादौयोग्यतापदं । एवंविधबलवदनिष्टाननुबंधित्वज्ञानस्यच येन पुरुषेण यागे सर्वदैव बलवदनिष्टानुबंधित्वं बुद्धं तं प्रति तद्वत्तिज्ञाने अप्रामाण्यज्ञानादिसंपादकतयो पयोगः । येनच कलञ्जभक्षणे बलवदनिष्टाननुबंधित्वं सर्वदैव बुद्धं तं प्रति तद्वत्तिज्ञानेऽप्रामाण्यज्ञानसंपादकतया एवंविधबलवदनिष्टानुबंधित्वज्ञानस्योपयोगः, अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरोधित्वात्, अतश्चैतादृशप्राशस्त्यज्ञानस्य सामग्रीसंपादनद्वारा प्रवृत्तावुपयोगः, तादृशांप्राशस्त्यज्ञानस्यच प्रवृत्तिसामग्रींविघटनद्वारा निवृत्तावुपयोगः. संभवतिचेदमभ्यनु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ज्ञाविध्यर्थवादे, वपाहोमोत्तरदीक्षितान्नभोजनस्य निषेधप्रयुक्तानिष्टाननुबंधित्व-ज्ञापनात् ।

नच तस्य दोषाभावरूपस्य विधिनैवाक्षेपात्कृतमर्थवादेनेति वाच्यं । तेन तदाक्षेपेपि सामानाधिकरण्येन बलवदनिष्टाननुबंधित्वस्यार्थवादेन बोधनोपपत्तेः. एवं षोडशिग्रहणनिषेधार्थवादेपि ग्रहणजन्ये तात्कालिके स्वल्पेपि दुःखे सामानाधिकरण्येनोत्कटद्वेषविषयत्वाख्यं बलवत्त्वं बोध्यतइति नकाचिदनुपपत्तिः । अतएवंविधे स्तुतिनिंदे क्वचित् " वायुर्वैक्षेपिष्ठे " त्यादावर्थवादपदैः स्वशक्यार्थज्ञानजन्यशाब्दबोधविषयीभूतवाक्यार्थसंबंधादेव लक्ष्येते । सच वाक्यार्थः क्षेपिष्ठत्वादिगुणको वायुस्स्वदेवताककर्मजन्यं फलं शीघ्रं प्रयच्छतीत्येवंरूपः । अत्रहि सएवेत्यत्रैवकारस्यवैयर्थ्यपरिहारार्थं गमयत्येवेत्येवंयोजना । ततश्च तेनौदासीन्यस्यापि व्युदासाद्दाने शीघ्रत्वादिप्रतीतिः, एतादृशवाक्यार्थ शाब्दबोधश्च तात्पर्यविषयीभूतएव जन्यते । गंगापदेन प्रवाहोपस्थितिवत् । फलगतशैघ्र्यज्ञानस्यच प्रायशः फले रागोत्कर्षजनकत्वदर्शनात्तत्संबंधसत्त्वेन स्तुतिलक्षणासिद्धिः । एवमन्यत्राप्यूह्यम् । यत्रत्वयोग्यतानिश्चयसत्त्वे नैतादृशशाब्दबोधः, यथा " यजमानःप्रस्तर " इत्यादौ,अभेदान्वयस्यबाधितत्वात् , तत्र यजमानपदं यजमानकार्यकारित्वसमानजातीय कार्यकारित्वरूपगुणयोगेन प्रस्तरे गौणमंगीकृत्य यजमानःप्रस्तरइति वाक्यजन्यशाब्दबोधोत्तरं स्वकार्यकर्तृत्वरूपवाक्यार्थसंबंधात्तेन वाक्येन बलवदनिष्टाननुबंधित्वरूपस्तुतिलक्षणा ॥

नच यजमानपदे गौणीमनंगीकृत्यैव बलवदनिष्टाननुबंधित्वलक्षणामंगीकृत्य तस्य प्रस्तरे न्वयः किं न स्यादिति वाच्यं । यजमानपदस्य प्रस्तरवृत्तिनिरुक्तस्तुतिलक्षणायां शक्यसंबंधाभावात् । अस्मन्मते सुबंतयोःपरस्परसंबंधाभावेन प्रस्तरेऽन्वयानुपपत्तेश्च ॥

नचैवं तात्पर्यविषयीभूतशाब्दबोधदशायां गौण्या वृत्त्या उक्तस्य स्वकार्यकारित्वविशिष्टस्याप्यभेदसंबन्धेन प्रस्तरेन्वयानापत्तिः; अध्याहृतास्त्याख्यातार्थएवोभयोरन्वयेन परस्परान्वयस्य पार्ष्ठिकत्वात् । तस्मादध्याहृताख्यातपदेनवाक्येन शाब्दबोधे जनिते पश्चात्तल्लक्षितप्राशस्त्यस्य विधावन्वयः ॥

नचैवं पश्चादपि यजमानपदेनैव प्राशस्त्यवन्तं लक्षयित्वा तस्य पार्ष्ठि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कान्वयलभ्यपरस्परसंबंधांगीकारेणाध्याहृताख्यातार्थ एव उभयान्वयोभवतु । पूर्वमेव यजमानपदे गौणीगर्भां स्तुतिलक्षणामंगीकृत्य तदन्वयोपपत्तेः । एक एववा शाब्दबोधोस्तु, कृतं विध्यन्वयेन. वाक्यैकवाक्यतयैव तदाकांक्षितपूरणोपपत्तेरिति वाच्यम् । वाक्ये लक्षणामङ्गीकृत्यैकवाक्यत्वे संभवति वाक्यभेदस्यान्याय्यत्वात् ॥

नचास्मदुक्तरीत्या ध्याहृताख्यातार्थान्वयेपि पश्यमृगोधावतीतिवदेकाख्यातार्थस्य विध्याख्यातार्थे प्रकारतयान्वयेनाप्येकवाक्यतोपपत्तिः । आख्यातार्थस्य मुख्यविशेष्यत्वव्युत्पत्तिभङ्गभयेन "स्योनन्त" इतिवदाख्यातद्वयसत्वे भिन्नवाक्यत्वस्यैवापातात् । अन्यथा । प्रयाजाद्यङ्गभावनायाअपि इतिकर्तव्यतात्वेन प्रधानभावनान्वयापत्तेस्सर्वस्याप्येकवाक्यतापत्तिः । "पश्यमृगोधावती" त्यादौतु पश्येत्यस्य कर्मान्वयंविना शाब्दबोधाजनकत्वाद्युक्तो धावनभावनायाः कर्मत्वेन तस्यामन्वयः । नहिकर्मान्वयं विना शाब्दबोधापर्यवसानवदितरकारकान्वयं विना तदपर्यवसानं । वाक्यमात्रस्य साकांक्षत्वापत्तेः । तस्मा द्यजमानपदमात्रे प्राशस्त्यलक्षणामङ्गीकृत्याध्याहृताख्यातार्थेऽन्वयांगीकारे वाक्यभेदापत्तेर्वाक्ये लक्षणांगीकरणम् ।

वस्तुतस्तु आख्यातद्वयसत्त्वेवाक्यभेदस्यादोषत्वेन वाक्य लक्षणायां प्रमाणाभावः । तेन "यजमानः प्रस्तर इत्यादौ वाक्यैकवाक्यत्वेपि न काचि त्क्षतिः ।

नचैवं "जर्तिलयवाग्वावाजुहुया,, दित्यादावपि प्राशस्त्यलक्षणया पयोहोमविध्येकवाक्यतानापत्तेर्भिन्नवाक्यतापत्तिः । तत्र वाशब्देनैकवाक्यत्वप्रतीतेः । "एकं व्रणीत,, इत्यादावपि विधायकतया भिन्नवाक्यत्वस्य विकल्पापादकतयानुपपत्तेः अगत्या वाक्ये प्राशस्त्यलक्षणयाप्येकवाक्यत्वांगीकरणम् । नहि तत्र "यजमानःप्रस्तर,, इतिवदेकस्मिन्पदे लक्षणामङ्गीकृत्य लक्षितप्राशस्त्यस्योत्तरपदार्थेन्वयः संभवति । अतस्तत्र वाक्यएव लक्षणा । तेन यत्रैकस्मिन्पदे प्राशस्त्यलक्षणामङ्गीकृत्य तस्येतरपदार्थेन्वयमङ्गीकृत्य वाक्यार्थपर्यवसानं, तत्रार्थवादविध्योर्वाक्यैकवाक्यता.. यत्रतु नतथा तत्र सर्वत्र वाक्यएव प्राशस्त्यलक्षणा मंगीकृत्य पदार्थविधयोपस्थितस्य विध्याख्यातार्थ एवान्वयाद्विध्यर्थवादयोः प

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


दैकवाक्यतैवेति युक्तमुत्पश्यामः । तत्सिद्धं लिङादिवाच्या शाब्दीभावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनत्वाद्याक्षेपमुखेन मुख्यविशेष्यभूतायामाख्यातार्थकृतावन्वेतीति । विधिवादस्समाप्तः ॥

श्रीः ॥

नन्वाख्यातार्थस्य कृतेर्मुख्यविशेष्यत्वे मानाभावः. तथाहि-तिङुपात्तैकत्वादिसंख्यातावदन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्ये चैत्रादावाश्रयतासंबंधेनान्वेतीति तावदविवादम्. सच चैत्र ओदनं पचतीत्यत्र कर्त्राख्याते चैत्रः. ओदनः पच्यते चैत्रेणेत्यत्र कर्माख्याते चौदनः. तस्यैवान्याविशेषणत्वात्. इतरस्य कर्मत्वादिविशेषणत्वात्। अत्रच चैत्रइव गच्छति मैत्रइत्यादौ चैत्रे प्रथमान्तपदोपस्थाप्येपि न तिङुपात्तसंख्यान्वयः. तस्य इवशब्दार्थे सादृश्ये प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात्, अपितु मैत्रएव. अतएव चैत्रइव मुखम् चन्द्रश्च भासत इत्यत्रोभयत्र संख्यान्वयः. उभयोरप्यन्याविशेषणीभूतपदोपस्थाप्यत्वात्। भावाख्यातेधात्वर्थस्यान्याविशेषणत्वात्तत्र संख्यान्वयवारणार्थं प्रथमांतेति ॥

अतश्च तद्वदेवाख्यातोपात्तार्थभावनाया अपि तस्मिन्नेवाश्रयतासंबंधेनान्वयः. नतु तस्य मुख्यविशेष्यत्वम्. कालादिव्यतिरिक्ताख्यातार्थप्रकारकबुद्धित्वावच्छिन्नं प्रति उक्तविधप्रथमान्तपदजन्योपस्थितिः कारणमित्येककार्यकारणभावकल्पनेलाघवादिति चेत्. उक्तप्रथमान्तार्थस्यैवाधेयतासंबंधेन कृतावन्वयस्य कालादिवत्संभवेन तादृशकार्यकारणभावकल्पनएव नियामकाभावात्, नह्याख्यातार्थभावनायाः प्रथमान्तार्थं प्रति प्रकारत्वेनैवान्वयबोध इत्यत्र नियामकं किंचिदस्ति । जैमिनिपाणिन्याद्यनुभवविरुद्धानुभवस्य शपथनिर्णेयत्वात् । "तद्भूतानां क्रियार्थेन समाम्नायः" (१-१-२५) इति जैमिनिना क्रियामुख्यविशेष्यकानुभवस्योक्तत्वात्, नचैवं गौतमानुभवोप्यस्ति ॥

किञ्च संख्याया अपि तिङुपात्ताया नैव नामार्थे चैत्रादावन्वयः; तस्य प्रथमोक्तत्संख्यावरोधात् ॥

नच तस्यास्साधुत्वार्थत्वान्नावरोधकत्वम् । एकपदोपात्तत्वप्रत्यासत्त्या झटित्युपस्थितस्य तस्यान्वयेन विलंबोपस्थितायास्तिङुपात्ताया एव साधुत्वार्थकत्वौचित्यात् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नचैवं चैत्रो मैत्रश्च गच्छत इत्यत्र द्वित्वान्वयानुभवानापत्तिः । द्वित्वान्वयानुभववत् सुपा प्रत्येकैकत्वान्वयानुभवस्याप्यपह्नोतु मशक्यतयाऽवश्यमेकस्यानुभवस्याशाब्दत्वे वाच्ये पदान्तरोपात्तद्वित्वस्यैव तदौचित्यात् ॥

वस्तुतस्तु तिङो लाघवानुरोधेन कृतौ शक्तावपि वक्ष्यमाणरीत्या कर्त्रादेर्निरूढलक्षणया भानस्यावश्यकत्वात्तत्र चैकपदोपात्तत्वप्रत्यासत्त्या संख्याया अन्वयेन न कुत्रापि तस्याः प्रथमान्तेन्वयः । अतश्च "एकपदोपात्तानामेकविशेष्यकत्वमौत्सर्गिक,, मिति न्यायेन एककार्यकारणभावकल्पनालाघवानुरोधे नच यदि संख्याविशेष्ये भावनान्वय इत्याग्रहः, तदाख्याख्यातलक्ष्यएव कर्त्रादावुभयान्वयः । नतु प्रथमान्तपदोपस्थाप्ये । यथा चैवं सति भावनायास्तं प्रति मुख्यविशेष्यत्वम् तथाग्रे निरूपयिष्यामः ॥

किंच भवन्मते कालाद्यतिरिक्ताख्यातार्थ निष्ठप्रकारतानिरूपित विशेष्यतासंबंधेनाख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबंधेन प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारणतेत्येवम् कार्यकारणभावः पर्यवसन्नः, नचासौ संभवति. न पचति चैत्रः पचत्येव चैत्रः, पचत्यपि चैत्र इत्यादावाख्यातार्थभावनायाश्चैत्रएवान्वयप्रसङ्गेन नञर्थेभावे एवकारार्थान्ययोगव्यावृत्त्यैकदेशभेदे अपिशब्दार्थभूते समुच्चये वान्वयानापत्तेः । तत्र चैत्रे संख्यान्वयेन भावनाविशेष्ये संख्यान्वय इति नियमस्यापि व्यभिचारापत्तेश्च । अतएव निपातासमभिव्याहृतत्वम् नाख्यातेत्यस्य विशेषणं । संख्यायाश्चैत्रेन्वयानापत्तेः ॥

नचोक्तकार्यकारणभावे तेन विशेषणेपि निपातसमभिव्याहृतस्थले संख्याभावनयोः प्रथक्कार्यकारणभावमङ्गीकृत्य स्वस्वविशेष्येन्वयोपपत्तिः, अनेककार्यकारणभावकल्पनापत्तेः ॥

अस्मन्मते त्वेककार्यकारणभावेनैव वक्ष्यमाणरीत्या सर्वेषांभावनान्वयेन भावनायामुख्यविशेष्यत्वात्तदनापत्तिः ॥

किंच सर्वनिपातसाधारण्येनापि नैकरूप्यं । चैत्र एव पचति घटएवदृश्यत इत्यादौ निपातसमभिव्याहारेष्युभयोरपि संख्याभावनयोश्चैत्रान्वयप्रतीतेः । नच

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रियासमभिव्याहृतस्थलएव संख्याभावनयोर्वैरूप्यम् नान्यत्रेति नियमोपि संभवति, पचति न चैत्रः, चैत्रो न पचतीत्यादावुभयथापि वैरूप्यात् ।

अतो भवन्मते कार्यकारणभावानन्त्याद्व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम् ॥

अपिच ओदनम् पचतीत्यत्र प्रथमान्तपदाभावे कारणाभावादेव भावनाप्रकारकबोधानुपपत्तेरितरसामग्रीवशाद्भावनाया मुख्यविशेष्यत्वे बाधकाभावः ।

नचानुभवानुरोधेन भावनाप्रकारकबोधत्वावच्छिन्नम् प्रत्येवाख्यातपदज्ञानस्य कारणत्वं कल्पयित्वातादृशबोधार्थप्रथमान्तपदाध्याहार इति वाच्यम्। अनुभवस्य शपथनिर्णेयत्वेन तत्कार्यकारणभावकल्पने गौरवात् ॥

नच तत्रापि पण्डितश्चैत्र इत्यादावाख्यातपदाभावे प्रथमान्तस्य मुख्यविशेष्यत्वापत्तिः । सुबर्थप्रकारकबोधत्वावच्छिन्नम् प्रत्येव सुब्ज्ञानस्य कारणत्वात्, वक्ष्यमाणरीत्या प्रथमाया अपि संख्यातिरिक्तार्थसद्भावाच्च । अनतिरिक्तत्वेपि प्रथमान्तनामपदोपस्थाप्यप्रकारकबोधत्वावच्छिन्नम् प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्तेः । न च विनिगमनाविरहः, " अस्तिर्भवतिपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्तीति " स्मृत्यनुमतत्वेन तस्यादोषत्वाम् । तादृशानुशासनज्ञानाभावे निरुक्तबोधस्येष्टत्वाच्च ॥

किञ्च भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्याख्यातपदज्ञानत्वेन कारणत्वे चैत्रेण सुप्यते, गगनेन स्थीयत इत्यादिभावाख्यातस्थले प्रथमान्तपदाध्याहारापत्तिः ॥

अथ तत्राख्यातार्थविशेष्यकबोधमेवांगीकृत्यकारणतावच्छेदके भावभिन्नत्वं निवेश्यते तदा तदपि गौरवम् । अस्मन्मतेतु सर्वत्र आख्यातार्थविशेष्यकत्वाद्भावाख्यातस्थलेच कर्तुरनभिधानेन प्रथमान्तस्याप्रसक्तिः ॥

किञ्च यदि अन्याविशेषणीभूतप्रथमान्ते भावनासंख्ययोरन्वयः, तदा चैत्रएव पचति घटएव दृश्यत इत्यादौ कुत्रभावनासंख्ययोरन्वयः कथं वा शाब्दबोधः । नतावच्चैत्रादौ, तस्यैवकारार्थभूतान्ययोगव्यावृत्त्येकदेशे भे

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


दे प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात् । नाप्येवकारार्थभूतायाम् व्यावृत्तौ प्रति योगिताकत्वसंसर्गेणभावनायाः आश्रयतासंसर्गेणच एवकारार्थभूतेन्यस्मिन् संख्यायाअन्वयः, तयोः प्रथमान्तपदोपस्थाप्यत्वाभावात् ॥

नचाव्ययोपरि सुपोलोपेन दधि तिष्ठतीतिवत् प्रथमान्तत्वाविरोधः । तथात्वेपि चैत्रे पाकभावनान्वयानुपपत्तेः ; चैत्रान्येषु बहुष्वपि चैत्र एव पचतीत्येकवचनप्रयोगाच्च । अतएव पचतिपदस्य व्युत्पत्तिवैचित्र्येण वारद्वयमन्वयमङ्गीकृत्य पाकानुकूलकृतिमच्चैत्रभिन्नः पाकानुकुलकृत्यभावाश्रय इत्येवमेवकारार्थैकदेशविशेष्यकशाब्दबोध इत्यपास्तं, तद्बहुत्वेनैकवचनस्य तत्रान्वयानुपपत्तेः । चैत्रस्यान्यविशेषणतया तत्राप्यन्वयानुपपत्तेश्च ॥

नच चैत्रपदस्य विशेष्यतया विशेषणतया च वारद्वयमर्थबोधकत्वं,तथ पाकानुकूलकृतिमांश्चैत्रः पाकानुकूलकृत्यभाववांश्चैत्रान्य इति शाब्दबोधः. इतराविशेषणत्वञ्च विशेष्यत्वाभावविशिष्टं यद्विशेषणत्वं तदभाव इति वाच्यं. तथात्वेपि चैत्रोमैत्रश्च गच्छतः इति चैत्रोमैत्रादयश्च गच्छंतीति वद्विवचनबहुवचनयोरप्यापत्तेः.

नच चैत्रो गच्छति न मैत्र इतिवदेकवचनोपपत्तिः. तथात्वे तत्र-गच्छतिपदानुषंगेण भिन्नवाक्यत्ववदिहापि मुख्यविशेष्यभेदेन भिन्नवाक्यत्वापत्तेः. अस्मन्मतेतु चैत्रवृत्तिश्चैत्रान्यवृत्तिश्चैककर्तृकाभावनेति बोधः. भेदेच चैत्रप्रतियोगिकत्वं पार्ष्णिकं, एवकारस्यैव वा तत्र लक्षणेति नविरोधः.

वस्तुतस्तु पचति चैत्रे मैत्रेचापचति कीदृशौ चैत्रमैत्राविति प्रश्ने चैत्रएव पचतीत्युत्तरापत्तिः. अतएव कीदृशश्चैत्रइति प्रश्ने पचतीत्युत्तरापत्तेर्न प्रथमांतविशेष्यकोबोध इत्युक्तं. कीदृशी कृतिरिति प्रश्नोत्तरंतु न, लिंगानास्कंदितत्वादित्यप्युक्तं. अतोनुभवसिद्धमेव भावनामुख्यविशेष्यकत्वं.

किंच सत्यपिसंख्याभावनोभयसाधारण्येनोक्तविधप्रथमांतपदजन्योपस्थितेः कारणत्वे भवन्मते प्रथमातृतीयादिप्रयोजकं किं. न तावत् कर्त्राद्यभिधानानभिधाने तत्प्रयोजके. तस्य त्वयानंगीकारात् . नापि संख्याभिधानानभिधाने, संख्यायास्सर्वत्र सर्वकारकाभिधेयत्वेन सर्वत्र प्रथमापत्तेर्द्वितीयादिविभक्त्यभावप्रसङ्गात् .

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ तिङुपात्तसंख्यान्वयित्वमेव प्रथमाप्रयोजकम् । तदन्वयश्च यगादिसमभिव्याहारसत्त्वे कृतिविषयत्वाख्यफलाश्रये कर्मणि शबादिसमभिव्याहारे कृत्याश्रयाख्ये कर्तरि । यादृशसमभिव्याहारे आख्यातस्य कर्तृवाचित्वं वैयाकरणमते, मीमांसकमतेवा कर्तृलक्षकत्वं, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृत्याश्रयरूपकर्तृगामित्वं । यादृशसमभिव्याहारेच तयोर्मते कर्मपरत्वं, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृतिविषयरूपकर्मगामित्वम् । अतस्तादृशसंख्याभिधानमेव संख्याविशेष्यवाचिनामपदोत्तरप्रथमाप्रयोजकम् । तादृशसंख्यानभिधानन्तु तदविशेष्यवाचिनामपदोत्तरकर्तृकर्माद्यभिधायक तृतीयाद्वितीयादिविभक्तिप्रयोजकम् । अतएव भावाख्यातस्थले कर्तृकर्मगतसंख्यानभिधानाच्चैत्रेण सुप्यतइति तृतीया । चैत्रेणपच्यते ओदनइत्यत्र कर्माख्याते कर्मवाचिपदएव प्रथमा, चैत्रः पचतीत्यत्र कर्त्राख्याते कर्तृवाचिपद एवेतिव्यवस्थालाभइतिचेत् । तथात्वे चैत्रेण पाचकस्यपुत्रः ओदनं पक्वस्य विक्लृतिरित्यादिप्रयोगापत्तेः । कृत्प्रत्ययेन कर्तृकर्मगतसंख्याया अनुक्तत्वात् । चैत्रस्यपाचकस्य पुत्रः, ओदनस्य पक्वस्य विक्लृतिरितिप्रयोगानापत्तेः । चैत्रः पाचकः , ओदनः पक्व इति प्रयोगानापत्तिरपि । "विषवृक्षोपिसंवर्ध्य स्वयंछेत्तुमसांप्रतम् ।" इत्यादावपि प्रथमानापत्तेश्च । .... .... .... ....

नच तत्र कृत्प्रत्ययेन सांप्रतमिति निपातेनच कर्त्राद्यभिधानादेव प्रथमासिद्धिः । संख्याकर्त्राद्यन्यतरानभिधानेच तृतीयादिरिति सूत्रार्थ इतिवाच्यं ।

तथात्वेपि चैत्रइव गच्छति मैत्रइत्यादौ चैत्रे प्रथमानापत्तेः, गच्छतीति तिङा चैत्रगतसंख्याया श्चैत्रगतकर्तृत्वस्यचानुक्तत्वात् । ....

यत्तु कृत्यनभिधाने तृतीया । फलानभिधाने द्वितीया । अभिधानेतु सर्वत्र प्रथमेतिमतम् । तदपिन । भावाख्याते भावनाभिधानेन प्रथमापत्तेः । कर्माख्यातेपि क्रियतइति विवरणानुरोधेन कृतिवाचित्वस्यावश्यकत्वात् प्रथमापत्तेश्च । .... .... .... ....

अस्मन्मतेतु सत्यपि तिङो भावनावाचित्वे वक्ष्यमाणरीत्या कर्त्रादेरपि लक्षणयाअभिधानात् कृत्प्रत्ययेन सांप्रतमिति निपातेनच शक्त्यैव कर्त्राद्यभि



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


धानाम् सर्वत्र प्रथमोपपत्तिः । सांप्रतमिति निपातेन योग्यइत्यर्थकेन कर्माभिधानात् । चैत्रइवेत्यादावपि इवशब्देन गमनकर्तृत्वरूपसादृश्याभिधानात् कर्त्रभिधानं । चन्द्रइव मुखमित्यादावपि अस्तीति क्रियापदाध्याहारस्यावश्यकत्वा दाह्लादकत्वावच्छिन्न सत्ताश्रयत्वरूप कर्त्रभिधानम् । .... ....

अतएव क्त्वाप्रत्ययेनापि समानकर्तृकत्वाभिधानात् चैत्रः पक्त्वा चैत्रो भुङ्क्ते इत्यादौचैत्रपदेपि प्रथमोपपत्तिः । .... ....

नचैवं चैत्रेण पक्त्वा चैत्रेणभुज्यतइत्यत्र चैत्रपदे तृतीयानापत्तिः, क्त्वाप्रत्ययेन कर्तुरुपादानादितिवाच्यम् । .... ....

तत्र "आत्मानमात्मनावेत्सि" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपेव्याकरवाणि" इत्यादिवत् करणत्वस्य तृतीयार्थत्वात् । ....

अतएव यद्वृत्तिकारकत्वं स्वान्वयिक्रिया प्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्व मित्युक्तं भाट्टदीपिकायां । अस्तिचेदं चैत्रः पचति, ओदनः पच्यतइत्यादौ, चैत्रादिवृत्तिकर्तृत्व कर्मत्वादेर्निरुक्तक्रियापदेनाभिधानात् । पाचकेन गम्यतइत्यादौच कृदुपात्तस्य पुरुषस्य गमनक्रिययैवान्वयः, नतु पाकक्रियया । प्रथमं तस्याएव तस्मिन्नन्वयात् । अन्वयश्चात्र प्राथमिकशाब्दबोधविषयीभूत एव विवक्षितः । तेन "औदुम्बरो यूपोभवति" "स्वर्गकामोयजेत" इत्यादौ यूपस्वर्गादीनां प्रथमया कर्मत्वादिलक्षणायामपि प्राथमिकयूपकर्तृकभावनाश्रयत्वादि शाब्दबोधे कर्तृत्वस्योक्तत्वात् प्रथमोपपत्तिः ।

नच तत्रप्रमाणाभावः । तथात्वे धर्मिज्ञानाभावेन वैयर्थ्यप्रतिसन्धानाभावात्तात्पर्यज्ञानाभावेन लक्षणानुपपत्तेः । .... ....

अतएव यत्रान्वयानुपपत्त्यैव लक्षणा तत्र लक्षणाजन्यशाब्दबोधस्यैव प्राथमिकत्वात्, तत्रच तत्कर्तृत्वानुक्तौ प्रथमान्तपदस्यायोग्यत्वमेव । यथा - अग्निना चैत्रः पाके यतत इत्यर्थे अग्निश्चैत्रःपाकेयततइति । अत्रहि न प्रथमायाः करणत्वलक्षणया शाब्दबोधः । अत्रहि अन्वयानुपपत्त्यैव करणत्वलक्षणा । अतः तत्र लक्षणातः पूर्वं शाब्दबोधाभावादयमेव बोधः प्राथमिकोवाच्यः । नच तदानींभासमानं करणत्वं स्वान्वयिक्रियाप्रतिपादकेन यततइति पदेनउक्तम् । यत्तु य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ततइत्यनेनोक्तं कर्तृत्वं नतदग्निवृत्तीति प्रथमाप्रयोजकरूपाभावात् तद्वाक्यं त स्मिन्नर्थेऽसाधु । उक्तविधं तद्वृत्तिकर्तृत्वं न कर्माख्यातेनाभिहितमिति युक्तैव त त्र तृतीया । .... .... ....

एवं चैत्रेण भुक्त्वा गम्यतइत्यत्र चैत्रस्य भुजिक्रियायामनन्वया द्गमनक्रि यायामन्वयाङ्गीकारेणतृतीयोपपत्तिः । एवञ्चपक्त्वौदनोभुज्यतइत्यादौ पाचिधातोः कर्माकांक्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम् । नहिप्रथानक्रि यायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति येनाध्याहारं विनापि वाक्यंपूर्येत । तथात्वे " ओदनं भुक्त्वाशास्त्रंपठ्यते " " श्रुत्वाप्यर्थन्नानुमतः तेनसोर्थःकुबुद्धिने " त्यादौ द्वितीया प्रयोगोनोपपद्येत । अतस्सकर्मकधातूत्तरक्त्वाप्रत्ययस्थले द्वितीयान्तौदनपदाध्याहारेपि कर्तृविशेषवा चिपदं विनापि शाब्दबोधोपपत्तेः चैत्रेणभुक्त्वा गम्यतइति प्रयोगे बाधकाभा वः । यदित्वस्मिन्पक्षे चैत्रोभुक्त्वा चैत्रोगम्यतइति प्रयोगापत्तिरिति विभाव्यते । तदा मास्तु क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वकालत्वयोश्शक्तिः । किन्तुभाव कृत्त्वात् भावएव । तस्यैवोत्तरक्रियायां समानकर्तृकत्वपूर्वकालत्वसंसर्गेणान्वय इति ।

एवञ्चचैत्रः पक्त्वा चैत्रो भुङ्क्त इत्यपप्रयोगएव । प्रधानक्रियायामुक्तस्य कर्तृकारकस्यैव गुणभूतक्रियायामप्युक्तिरिति नियमांगीकारेण वा तस्य साधुत्वं प्रधानक्रियावाचिनः कर्त्राख्यातत्वे क्त्वाप्रत्ययस्यापि समानकर्तृकत्वादौ लक्ष णेतिवा ध्येयम् ॥

अतएव चैत्रेण पक्त्वा चैत्रो भुङ्क्ते इत्यप्यप्रयोगः ॥

**अतएव मयैव पक्त्वा मयैव भुज्यते** इत्यत्रापि कर्तर्येव तृतीया । पक्त्वौदनोभुज्यत इत्यादौ कर्मकारकाध्याहारएव ॥

ओदनं भुक्त्वा शास्त्रं पठ्यत इत्यादयः प्रयोगाश्च सुखोपपादाः ॥

एवं पचनी स्थाली दानीयो ब्राह्मणः, कुठारः करणमित्यादौ अ विकरणत्वादेः कृदुक्तत्वात्प्रथमोपपत्तिः ॥

नचैवमपि यत्र तिङन्तोपरि पचतितरां पचतिकल्पं पचतःकल्पं पच न्तिकल्पमित्यादौ अतिशयार्थकः ईषदसमाप्त्यर्थकोवा प्रत्ययः कृतस्तस्य तद्धि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्वेन प्रातिपदिकसंज्ञया प्रातिपदिकार्थमात्रविवक्षायां प्रथमान्तत्वात्तत्र प्रथमाप्रयोजकरूपाभावः । तद्वृत्तिकर्तृत्वस्य तिङनुक्तत्वात् । ईषत्त्वाद्याश्रयस्य भेदसंबन्धेन पाकभावनायामेवान्वयादिति वाच्यम् । तादृशस्थले धातोरेव ईषद समाप्तयादौ लक्षणाङ्गीकारात् । कल्पबादिप्रत्ययस्य लक्षणातात्पर्यग्राहकत्वमात्राङ्गीकारेण तदर्थान्वयस्यैवानङ्गीकारे तत्रत्य प्रथमायास्साधुत्वमात्रार्थत्वात् ।

अतएव शाब्दबोधजनकप्रथमाया एवेदं प्रयोजकम् । नतु साधुत्वार्थायाः। तस्यास्तु प्रथमातिक्रमे कारणाभावएव । इदञ्च असंबुद्धिविषये संबोधन प्रथमायाः स्वतन्त्रविधेयत्वात् । .... .... ....

अतएव तद्वृत्तिकर्तृत्वानभिधानेपि चैत्र मैत्रः पचतीति प्रयोगः ।

केचित्तु कृदादिभिरनभिहितत्वमेव तृतीयादिविभाक्ति प्रयोजकम् । प्रथमायान्तु कर्तृत्वाभिधानं, कर्तृत्वाद्यविवक्षाच प्रयोजिका । अतश्च पचाति कल्पमित्यादौ विभक्त्यर्थाविवक्षायां प्रातिपदिकार्थमात्रविवक्षायां प्रथमोत्पत्तावपिबाधकाभावः । अतएवाविवक्षाविरहविशिष्टानभिधानम् तृतीयादिप्रयोजकं तदभावः प्रथमाप्रयोजक इत्येवानुगमः । नचैवमपि प्रकारतया करणत्वाद्यविवक्षायां भवन्मते करणत्वादिसंसर्गेण काष्ठादीनां भावनान्वयापत्तेः "चैत्रः काष्ठानि स्थाली ओदनः पचतीति प्रयोगापत्तिः । परमतेहि तेषां धात्वर्थेन्वयात्तत्रचभेदसंबंधेनैव नामार्थान्वयान्न तथा प्रयोगापत्तिः, तेषामपि दधि पश्यतीत्यादिवत् काष्ठकरणत्वलक्षणया प्रयोगापत्तिरनिवार्यैव । भवन्मतेतु सर्वस्याख्यातार्थएवान्वयात्तत्रच नामार्थस्यापि चैत्रादेर्भेदसंसर्गेणान्वयांगीकारात् काष्ठादीनामप्यन्वयोपपत्तिरिति वाच्यम् । एतादृशप्रयोगापत्तिभयादेव मयापि स्वबोधककृदाद्यभिहितकारकवाचिनामाभिन्ननामार्थस्य तद्गतलिंगसंख्यादेर्वा क्रियासंबंधे सुब्रुपात्तलिंगसंख्याव्यतिरिक्तद्वितीयादिविभक्त्युपस्थितार्थद्वारकत्वं तंत्रमिति नियमस्य कल्पनात् । स्वपदं स्वान्वयिक्रियापरम् । अत्र नामार्थस्यापि चैत्रादेः चैत्रः पचतीत्यादौ साक्षादेव क्रियान्वयाद्भिन्नेत्यन्तम् । पाचकमानयेत्यादौ कृदाद्यभिहितकारकत्ववाचिनोपि पाचकपदस्यानयनानुकूलकृतावन्वये द्वितीयोपस्थापितकर्मत्वद्वारत्वस्यावश्यकत्वात्स्वबोधकेत्युक्तं । पाच

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कः पक्कमित्याद्यावपि लक्षणया भावनाबोधस्य वक्ष्यमाणत्वात्तत्र काष्ठादीना मन्वये करणत्वादिबोधकतृतीयादि आवश्यकम् । अतएवैतन्नियमानुरोधेनैव कौस्तुभादौ प्रातिपदिकार्थस्य सुबुपात्तलिंगसंख्ययोश्च साक्षाद्भावनान्वयोनांगीकृतः । अतः पचतिकल्पमित्यादौ प्रातिपदिकार्थमात्रविवक्षायां प्रथमेत्याहुः ॥

तन्न । एवमपिईषदसमाप्तेः कल्पप्प्रत्ययवाच्यायाः भावनया सह भेदसंबंधविवक्षया षष्ठयापत्तेदुर्वारत्वात् । ईषदसमाप्तेरपि तादृशनामार्थतया निरुक्तक्रियासंबंधे द्वितीयादिविभक्त्यर्थद्वारकत्वाभावात् व्यभिचारापत्तेश्च ॥

अतोन्यत्र व्याकरणस्य वृत्तिबोधकत्वेपि प्रकृते तात्पर्यग्राहकतामात्रपरतेति युक्तमुत्पश्यामः ॥

केचित्तु पचतिकल्पमित्यादौ तिष्ठतीत्यध्याहारात् पाकभावनावृत्तिरीषदसमाप्तिस्तिष्ठतीत्यर्थः । अस्मिंश्च पक्षे पचतीति तिङर्थोपि कल्पप्प्रत्यार्थेन भेदसंबंधेनान्वेति, एकपदोपात्तत्वात् । अतश्च कल्पप्प्रत्ययस्य वाचकत्वेपि तस्यतिष्ठतीत्यत्रैवान्वयात्प्रथमोपपत्तिरित्याहुः ॥

तन्न — बहुत्वविवक्षायां पचंतिकल्पा इत्यस्याप्यापत्तेः ॥

एवंचास्मन्मते सर्वत्र प्रथमाप्रयोजकरूपलाभस्सुलभः, नतु भवन्मत इति सिद्धम् ॥

नन्विदमाख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिध्येत् ; तत्रैवतु प्रमाणाभाव इति चेत् ; पचतीत्युक्ते कीदृग्विधः इति प्रश्नस्यैव तत्र प्रमाणत्वात् । नहि धर्मिज्ञानं विना धर्मविशेषप्रश्नोयुज्यते, नच धर्मिज्ञानं त्वन्मते संभवति, पचतिपदार्थपाकप्रकारकानुकूलतासंसर्गकाख्यातार्थविशेष्यकाखण्डवाक्यार्थबोधस्यैव जननात् प्रथमान्तपदजन्योपस्थितिरूपकारणाभावेन कृतिप्रकारकाश्रयविशेष्य कबोधस्य जनयितुमशक्यत्वात् ॥

यद्यपि भवन्मते कृतिप्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणतास्ति । तथापि तत्कार्यतावच्छेदकं यदि कृतिप्रकारकबोधत्वं तदा-श्रयज्ञानाभावाद्धर्मिज्ञानाभावस्सुलभएव । यदितु कृतिप्रकारकाश्रयविशेष्यक-बोधत्वं तदापि तत्र प्रथमांतपदजन्योपस्थितेरपि दण्डचक्रादिवत् समुचि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यकारणत्वात् तदभावेनाभावस्सुलभः । .... ....

अतोवश्यं प्रश्नोपपादकत्वर्मिज्ञानार्थं प्रथमांतपदाध्याहारार्थं चाश्रयज्ञानं वाच्यम् । तच्च शाब्दं मानसं स्मरणं वेति विप्रतिपत्तिः । तत्र"लःकर्मणिच भावे चाकर्मकेभ्यः„ (३–४–६९) इत्यनुशासनाच्छाब्दमेव। अत्र चकारात् "कर्तरिकृत् „ (३–४--६७) इतिसूत्रीयस्य कर्तरीत्यस्यानुकर्षणात् कर्तर्यपि लकारलाभः। इदंहि न लकारस्य कर्त्रादौ शक्तिरित्येवंपरं,पदार्थे वृत्तौ च तात्पर्यकल्पने गौरवात् । लाघवेन कृतौ शक्तावधारितायां तदनुशासनस्यनिरूढलक्षणयैव व्याख्येयत्वाच्च. कर्तुर्मानसत्वे तत्र संख्यान्वयानुपपत्तेः. पचतीत्येतावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्तेश्च. पचतीति पाचक इत्येवं कृदर्थविवरणाच्च. अत आश्रयज्ञानस्य शाब्दत्वमुक्तं ॥ ....

युक्तंचैतत् - आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति आख्यातपदस्य प्रथमांतपदापेक्षया उपस्थितत्वेनाख्यातपदजन्योपस्थितित्वेन कारणत्वकल्पने लाघवात् . अतो लाघवादनुशासनात् धर्मिज्ञानानुरोधादाख्यातस्य कर्त्रादौ लक्षणा ॥

एतेनैकत्वादेरस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसंबंधेनैव भावनान्वयात्कर्त्रादेः सांसर्गिकविषयितयैव बोधइत्यपास्तम्. पाककर्ता एको नवेत्यस्य संशयस्य पचतीत्यतो व्युदासानुपपत्तेः. धर्मितावच्छेदकविशिष्टधर्मिज्ञानाभावात्पाककर्ता क इति संशयानापत्तेश्च । नच क्वचिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैवपदस्यार्थांतरलक्षकत्वासंभव इत्यत्र प्रमाणमस्ति. मुख्यार्थासंभवस्येवार्थांतरबोधानुपपत्तेरेव लाघवतर्कसहकृतायाः लक्षणातात्पर्यग्राहकत्वात् , तत्रापि शबादिविकरणस्थलेकर्तरि, यगादिविकरणस्थलेच कर्मणीत्येवं व्यवस्थया लक्षणा । लक्ष्यतावच्छेदकञ्चाश्रयत्वं, कर्तृत्वकर्मत्वाद्यखण्डोपाधिर्वा । कर्तृत्वादिकंहिकृत्याश्रयत्वादिसमनियतोऽखण्डधर्मोनुगतव्यवहारसाक्षिकः, नतु कृत्याश्रयत्वादिकमेव. तथात्वे चैत्रेण पाकः क्रियत इत्यत्र चैत्रेण पाकइत्येतावतैव चैत्रनिष्ठकृतिसाध्यः पाक इत्यर्थबोधोपपत्तेः पुनः क्रियतइति कृतिवाचकपदप्रयोगवैय्यर्थ्यापत्तेः. अतः कर्तृत्वादिकमखण्डमेव तृतीयाद्यर्थः. तस्यचाश्रयत्वादिवदेव कृत्यादिनिरूपितत्वादि धर्मकल्पनाच्चैत्रनिष्ठकर्तृत्वनिरूपककृतिसाध्यः पाक इत्यर्थबो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्षोपपत्तेः. इदञ्च परमतेनोक्तं. स्वमते उक्तकृतिसाध्यत्वं पाकवृत्तीत्येवं शाब्दबोधस्य वक्ष्यमाणत्वात् . सर्वथा कर्तृत्वादिकमखण्डोपाधिः. इष्टञ्चैतत्प्राचां दंपत्योर्व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थं, अग्नीषोमयोर्व्यासज्यवृत्तिदेवतात्वसिद्ध्यर्थञ्च. अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यत्वरूपस्यच देवतात्वस्य, आश्रभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धांतानुपपत्तेः. अतः कर्तृत्वं कर्मत्वञ्च लक्ष्यतावच्छेदकीकृत्य कर्तृकर्मणोराख्यातस्यलक्षणा. इदञ्चौत्सर्गिकीं रीतिमनुसृत्योक्तं. यत्र षष्ठोक्तन्यायेनाश्रयानेकत्वग्राहकं प्रमाणांतरमस्ति, यथा-दंपत्योः, तत्र विधिवाक्ये एकवचनश्रवणादाख्याते नाश्रयलक्षणा, एकत्वानन्वयापत्तेः. अतस्तत्र द्वित्वलक्षणायां प्रमाणाभावादाख्यातेनैव लाघवात्कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते. नतदाश्रयोपि. तस्यार्थादेव बोधोपपत्तेः. इष्यतेच कर्तृत्वत्वादिना कर्तृत्वबोधस्तृतीयादौ. सपरं शक्तया तत्र, अत्रतु लक्षणयेत्येतावान् भेदः तत्रैवच साक्षात्संबंधेनैकत्वान्वयः. नत्वाश्रये. तस्यद्वित्वात् . यदपि तत्राख्यातसमानाधिकरणं स्वर्गकामपदं, तदपि न कर्तृपरं अपितु लक्षणयोपस्थितस्वर्गाख्यभाव्यपरमेव. प्रथमाच तत्रत्यालक्षणयाकर्मत्वार्थिकेति न तत्सामानाधिकरण्यबलेनाप्याख्यातेनाश्रयलक्षणा. प्रथमाप्रयोजकंतु सर्वत्राकर्तृत्वोक्तिरेव, सापरं कर्तृत्वप्रकारिका कर्तृत्वविशेष्यिकावेत्यन्यदेतत् . अतस्सिद्धाऽऽख्यातेपि कर्तृत्वादिलक्षणा ॥

तदपिच न भावनां प्रतिविशेष्यम् . किन्तु भावनैव तद्विशेष्या. इतरथा पचति ब्रूतइति प्रयोगापत्तेः. पक्त्वा ब्रूत इतिवत् तस्य योग्यत्वात्. पचति भवतीति भाष्योदाहृतप्रयोगानापत्तेश्च ॥

यत्तु अपाक्षीद्भवति, पक्ष्यति भवतीति तदुदाहृतप्रयोगः. सचभूधातुना युक्तत्वलक्षणया भूतभाविपाकभावनावृत्तिवर्तमानयुक्तत्वाश्रयत्वमिति शाब्दबोधांगीकारान्नायुक्तः. दृश्यतेच युज्यत इत्यर्थे लोके भवतीतिप्रयोगः. एवं पचतिभवतीति प्रयोगोपि कर्तृविशेष्यत्वपक्षेनोपपद्यते. तथात्वे पचंति भवंतीति प्रयोगापत्तेश्च. " भावप्रधानमाख्यातं ,, इति निरुक्तस्मृत्या भावनातिरिक्ताख्यातार्थमात्रं प्रति भावपदवाच्यभावनाया विशेष्यत्वोक्तेश्च. अत्रहि न प्रकृत्यर्थं प्रति भावनायाः प्राधान्यं बोध्यते " प्रकृ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिप्रत्ययौप्रत्ययार्थसहब्रूतः तयोस्तु प्रत्ययः प्राधान्येन ,, इतिस्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थप्राधान्यस्य सुबर्थसाधारण्येन सिद्धेः ॥

नच "धात्वर्थः केवलश्शुद्धोभाव इत्यभिधीयते,,इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थपरत्वावसायात् , तस्यैवाख्यातार्थापेक्षया प्राधान्यमनया स्मृत्या नियम्यते, प्रत्ययार्थप्राधान्यस्मृतिस्तु सामान्यविषयत्वात् सुबर्थाभिप्रायेण व्याख्येयेतिवैयाकरणमतमेव युक्तमिति वाच्यम् . एतस्य परिभाषारूपत्वेन नदीवृद्ध्यादिवदन्यत्राप्रवृत्तेः. अतएव व्याकरणशास्त्रएव तस्य " भावे घञ् ,, (३--३--१८) इत्यादौ प्रवृत्तिः. सापि न सर्वत्र " भावेत्वतला ,, वित्यादावप्रवृत्तेः ' अतश्च निरुक्तभावशब्देन णिजन्तभूधातोरच्प्रत्ययान्तत्वव्युत्पत्त्या भावनानुकूलव्यापाररूपा भावनैवोच्यते न धात्वर्थः ॥

अतएव " सर्वमाख्यातजं नाम ,, इति स्मृत्याऽऽख्यातशब्दस्य धातुपरत्वावसायादनयापि स्मृत्या धातोरेव भावप्राधान्यनियमा द्धात्वर्थमुख्यविशेष्यकत्वोपपत्तिरित्यप्यपास्तम् ' कृदन्ते पाचकपदादौ आख्यातशब्दप्रयोगाभावेन तत्रत्याख्यातशब्दस्य धातौ लाक्षणिकत्वस्य कौस्तुभे व्युत्पादितत्वात् । अतश्चाख्यातार्थानेकत्वे कस्य प्राधान्यं कस्यवा गुणत्वमित्यपेक्षिते " भावप्रधानमाख्यातं,, इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्यमिति नियम्यते ॥

अतएव कालादिसाधारण्येनैकः कार्यकारणभाव इत्यपि लाघवं ॥

कालोपि नञ्समभिव्याहाराभावे कालिकसंबंधेन भावनायामन्वेति, नञ्समभिव्याहारेतु तत्कालीनाभावप्रतियोगित्वसंबंधेन साक्षादेववा तस्यामेव, तथाहि— " वर्तमानेलट् ,, (३--२--१२३ ) इति सूत्रात्पचतीत्यत्र वर्तमानत्वं लडर्थः, तच्च लडुच्चारणकालाभिन्नकालकत्वं । तच्च कालिकवृत्तित्वसंबंधेन कृतावन्वेति विक्लत्युपधायककृतिकूटान्तर्गतयत्किंचित्कृतेस्तदुच्चारणकालीनत्वात्, अत्र सर्वत्र कृतिशब्दो भावनापरः, तेन जानातीत्यादावाश्रयत्वस्य वर्तमानत्वान्न क्षतिः , नश्यतीत्यादौच धातुना नाशस्यैवोक्तिः - प्रत्ययेनच प्रतियोगित्वस्य लक्षणा । वर्तमानकालस्य परमनुभवानुरोधेन स्ववृत्त्युत्पत्तिकनाशीयत्वसंबंधेन

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतियोगित्व एवान्वयः तथाच घटवृत्तिनाशप्रतियोगित्वं वर्तमानकालो त्पत्तिकनाशीयत्वसंबंधेन वर्तमानत्ववदित्येवास्मन्मते शाब्दबोधः । एवञ्च धातुना उत्पत्तिं लक्षयित्वा तस्यां कालस्य कथञ्चिदन्व यइत्यपि न कल्पनीयम्. एवं संबंधभेदसत्त्वेपि वर्तमानकालस्सर्वत्र कृतावे वान्वेतीति न क्वापि तस्य विशेष्यान्तरकल्पना ॥

नचैकविशेष्यत्वलाभेपि संबंधभेदेनसमभिव्याहारज्ञानस्य कार्यकारण भावानन्त्यतादवस्थ्यमिति वाच्यम् । वस्तुत स्संबंधभेदेपि संबंधसामान्येन तत्प्रकारक तद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तादृश समभिव्याहारज्ञानस्य कारणतेत्येवमेकस्यैव तस्योपपत्तौ संबंधाननुगमस्यादोषत्वात् । यथैवहि संयोग समवायकालिकादिसंबंधभेदेपि घटवद्द्रव्यमित्येवंविधवाक्यात्संबंधसामान्यसंसर्गके घटप्रकारके मत्वर्थद्रव्यविशेष्यके शाब्दबोधे जाते पश्चात्संबंधस्य तत्त्वेन जि ज्ञासायां प्रमाणान्तरेण तात्पर्येवधारिते यत्रैकस्मिन्नेव संसर्गे तात्पर्यमवधा रितं तत्र तत्संसर्ग एव शाब्दबोधपर्यवसानम् । यत्रानेकेषु तात्पर्यं तत्राने केषु शाब्दबोधपर्यवसानम् । तत्रचवस्तुतस्तात्पर्यविषयीभूतस्यापि संबंधस्य तत्त्वेन बोधस्य प्रमाणान्तराधीनत्वात्, शाब्दबोधेच संबंधत्वेनैव बोधान्नघ टवद्द्रव्यमित्येवंविधसमभिव्याहारज्ञानस्य कार्यकारणभावानन्त्यम् । पर्यवसितबो धमादायैवच बाधबुद्धिप्रतिबध्यप्रतिबन्धकभावः । अतएव संयोगेन न घ टवद्द्रव्यमितिबुद्धिसत्त्वेपि घटवद्द्रव्यमितिबुद्धिर्जायमाना संबंधान्तरमादाय पर्य वस्यति । संयोगविषयतातु तस्यांआपाततः प्रतीता बाध्यत इति स्वानुभ वसिद्धमेतत् । घटोनास्तीत्यादौ वा संयोगसमवायाद्यवच्छिन्नप्रतियोगितारूप संबंधभेदोनुसंधेयः । अतस्संबन्धभेदेपिनकार्यकारणभावभेदः ॥

एवं विशेष्यप्रकारभेदेपि तदनुगमकधर्मैक्ये न तदानन्त्यं । नहि श्वेतरक्तादिप्रकारभेदे घटपटादिरूपविशेष्यभेदेवा नामार्थयोरभेदान्वयइति व्युत्पत्तिर्भिद्यते ॥

अस्तुवा एवमादिस्थलेसर्वत्र तद्भेदः । तथापि एककार्यकारणभाव कल्पनादशायामुपस्थितस्य विशेष्यस्यैव कार्यकारणभावान्तरे विशेष्यत्वकल्पनौ चित्यात् । नच विनिगमनाविरहः । द्वितीयान्तादिपदानान्तावत्क्रियापदंवि



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ना निराकांक्षत्वाभावस्य उभयवादिसिद्धतया क्रियाप्रतिपादकपदस्य विशेष्यप्रतिपादकत्वावश्यंभावात् । तत्रापि धात्वर्थं प्रति कालादिकंच प्रति विशेष्यभूताया भावनाया एव प्रधानभूतविशेष्यत्वेसंभवति प्रकारविशेष्यत्वस्यान्याय्यत्वादिति न्यायेन विशेष्यत्वोपस्थितिलाघवानुरोधेनच विशेष्यत्वकल्पनौचित्यात् । नच प्रथमान्तस्य क्रियापदसाकांक्षत्वे प्रमाणाभावः । चैत्रइत्येतावन्मात्रस्य शाब्दबोधाजनकत्वेन तस्यापिसाकांक्षत्वात्. नचतथात्वेपिपण्डितादिपदसमभिव्याहारेणापिशाब्दबोधजननात्क्रियापदसांक्षत्वेप्रमाणाभावः "अस्तिर्भवतिपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्ती,,ति कात्यायनस्मरणेन तस्यापि क्रियापदसाकांक्षत्वात् । भवतिपरः लडन्तइत्यर्थः।

नच क्रियापदान्तराध्याहारस्यापि योग्यतानुसारेणावश्यकत्वादेतदनुशासनवैयर्थ्यम् । योग्यतासाधारण्ये वेदादौ तात्पर्यग्रहाभावेच सत्यस्त्यध्याहारनियमार्थत्वात् । प्रथमान्तमुख्यविशेष्यकत्वभ्रमनिरासार्थत्वेनैव सार्थक्याच्च ॥

नचैवं तर्हि प्रथमपुरुषभिन्ने अहंपण्डितस्त्वंपण्डित इत्यादौ तत्साकांक्षत्वे प्रमाणाभावः । तत्रापि प्रातिपदिकार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबंधेन सुबर्थप्रकारकोपस्थितिः कारणं, लिंगसंख्याव्यतिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रतिच क्रियापदजन्योपस्थितिः कारणमितिक्लृप्तकार्यकारणभावयोरेव प्रमाणत्वात् ।

अतएव प्रथमास्थलेपि न प्रातिपदिकोपस्थितस्यैव चैत्रस्य क्रियायामन्वयः । अपितु प्रथमोपस्थितस्यैव । प्रातिपदिकार्थमात्रे प्रथमेत्यनुशासनेन प्रातिपदिकार्थस्यैव प्रथमार्थत्वात् । प्रकृतिप्रत्ययार्थयोश्चाभेदसंबंधेनान्वयान्न क्लृप्तव्युत्पत्तिभङ्गः । प्रातिपदिकंवा तात्पर्यग्राहकमितिवक्ष्यते ।

यदातु अभिहितकारकवाचिनी प्रथमेति मतं तदा सुतरां ।

अतस्सिद्धं लाघवानुरोधेन सर्वत्र भावनैव मुख्यविशेष्यभूतेति ।

नचानुभवानुरोधेन व्युत्पत्तिनानात्वमप्यङ्गीकृत्य योग्यतया साक्षात्संबंधेन तत्तद्विशेष्ये तस्य तस्यान्वयेनायुक्तइतिवाच्यम् । तथात्वे राजपुरुष इत्यादावपि राज्ञस्साक्षात्स्वस्वामिभावसंबंधेनैवान्वयानुभवात्, समासस्थले व्यु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्पत्त्यन्तरमङ्गीकृत्य राज्ञ एव भेदसंबंधेन तत्पुरुषान्वयोपपत्तेः, पूर्वपदे संबंधिल क्षणानापत्तेः । अर्धपिप्पलीत्यादौ उत्तरपदे लक्षणानापत्तेश्च ॥

यजेत स्वर्गकाम इत्यादौ स्वर्गसाधनत्वस्य यागे प्रतीमानस्य मानस बोधविषयत्वमङ्गीकृत्य क्लृप्तव्युत्पत्तित इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्ग काम इत्येवंविधशाब्दबोधस्य भवत्संमतस्यानापत्तेश्च ॥

तस्मादनुभूयमानस्य साक्षात्संबंधस्यपरंपरासंबंधघटकत्वेन मानसबोधवि षयतयावो पपत्तेर्न प्रथमक्लृप्तव्युत्पत्तिभङ्गेन व्युत्पत्त्यन्तरकल्पनं प्रमाणवत् ॥

अतस्सिद्धंसर्वत्र वर्तमानकालस्य कृतावेवान्वयइति ॥

अतस्तत्तत्क्षणेष्वेवलटश्शक्तिः, नतु लडुच्चारणस्य शक्यतावच्छेदककोटिप्रवेशः । तस्य तदादौ बुद्धिस्थत्वस्येव शक्तिग्रहोपलक्षणत्वात् ॥

अथवा लादेर्लट्त्वादिकमेव शक्ततावच्छेदकम् तदवच्छिन्नस्यच कालिकसंबंधेन प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वं कृतौ संबंधः । कृतेराख्यात त्वेन रूपेण लड्बोध्यत्वात् । तेन मैत्रीयप्रयोगकालीनकृतिध्वंसकाले न चैत्र लट्प्रयोगापत्तिः ॥

एवं लिडर्थोपि भूतानद्यतनत्वविशिष्टपारोक्ष्यरूपोभावनायामेवान्वेति । तत्रभूतत्वं-लिडुच्चारणकालीन ध्वंसप्रतियोगिक्षणवत्त्वं । तच्च कालिकसंबंधेन कृता वन्वेति । इदञ्चान्तिमकृतावेव, तेनानेकदिनसाध्यपाकस्थलेप्याद्यकृतिध्वंसकाले न पपाचेति लिट्प्रयोगः । लिडुच्चारणकालीनध्वंसप्रतियोगित्वंवा । तदपि स्वरूपसंबंधेनान्तिमकृतावन्वेति । लिडुच्चारणकालएववा लिडर्थः. लिडेव वा पूर्ववत् । तस्यच स्ववृत्तिध्वंसप्रतियोगित्वादिसंबंधेन तस्यामन्वयः ! न नशेत्यादौ भूतत्वान्वयः पूर्ववत्. अनद्यतनत्वं- लिडुच्चारणदिनभिन्नदिनवृत्तित्वं. परोक्षत्वञ्च- प्रयोक्तृवृत्ति साक्षात्करोमीत्येतादृशविषयताशालि ज्ञानाविषयत्वम् । इदं द्वयमपि कृतावन्वेति । परंत्वाद्यंसाक्षात्संबंधेन । द्वितीयंतु स्वसंबंधि धात्वर्थावच्छिन्नत्वसंबंधेन । चैत्रवृत्तिकृतेः प्रयोक्तृसाक्षात्काराविषयत्वेन तस्या न्तदभावबोधस्य व्यर्थत्वात् । बुद्ध्यतांवा स्वकृतौ प्रसिद्धस्य साक्षात्कारविषय त्वस्य तस्यामभावः । उत्तमपुरुषेप्यनवधानेन पारोक्ष्यंद्रष्टव्यं. शक्तिस्त्वर्थत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ये प्रत्येकं ; विशेषणविशेष्यभावे विनिगमनाविरहात् , अतएवोक्तदिनस्यो क्तक्षणेपि न विशेषणता । विनिगमनाविरहात् ॥

लुडर्थस्तु - पक्ता इत्यादौ अनद्यतनत्वविशिष्टं भावित्वं; तच्च लुडु च्चारणकालीनप्रागभावप्रतियोगिक्षणवत्त्वादिकं पूर्ववदाख्यातत्वेनान्वेति ॥

लृडर्थोपि पक्ष्यतीत्यादौ अद्यतनानद्यतनसाधारणभाविष्यत्त्वसामान्यं तत्रैव ॥

लेड्वेदएव । तदर्थो लिडर्थएव " समिधोयजती " त्यादौ ।

लोडर्थोपि लिडर्थ एव । प्रैषादय: कृत्यप्रत्ययार्थाश्च " प्रैषातिसर्गप्रातकाले पुकृत्याश्च " ( ३-३ - १३६ ) इति सूत्रे चकारेण लोटोप्यनुकर्षणात् ॥

लडर्थस्त्वनद्यतनभूतत्वं, अपच दित्यत्र 'भूत' इत्यनुवृत्तौ " अनद्य तनेलङ् " ( ३-२-१११ ) इतिसूत्रात् ॥

लिडर्थस्तु पूर्वमेव निरूपित: ॥

लुडर्थ:—अपाक्षीदित्यत्र भूतत्वमात्रं ॥

लृडर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्ति: । यथा-यदि-सुवृष्टिरभविष्यत्त दा सुभिक्षमभविष्यदित्यत्र वृष्टिसुभिक्षयोर्हेतुहेतुमद्भावात् , उभयोरनिष्पत्त्याच क्रियातिपत्ति: । अयं भूते भाविनिच — दृष्टोमया भवत: पुत्रोन्नार्थी चंक्रममा ण:, दृष्टश्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टोभविष्यत्ततोऽभोक्ष्यत् , नतु भुक्तवानित्यादौ भूतेपि प्रयोगदर्शनात् . अनयोश्चार्थयोरसाक्षादेव स्वरू पसंबंधेन भावनान्वय: ॥

अत्रच सर्वत्र लकारेषु शक्ततावच्छेदकं तत्तल्लकारत्वं । वक्ष्यमाण रीत्यावा तत्तदादेशविशेषत्वं बोध्यं । सर्वथा तदर्थस्य भावनायामेवान्वय इति सिद्धम् ॥

एवमुपग्रहविशेषरूपस्यात्मनेपदादेरर्थ: कर्तृगामि फलादिरूप: । सो पि कर्मतादिसंबंधेन तस्यामेवान्वेति ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यद्यपि स्वर्गत्वादिरूपेणासौ स्वर्गकामादिपदैरुक्तः । तथापि कर्तृगामित्वादिना तदभिधानमात्मनेपदादिना नानुपपन्नं । अस्तुवा कर्तृगामित्वादिकमेव तदर्थः । सच स्वाश्रयफलकर्मत्वादिसंबंधेन कृत्यन्वयी ॥

एवमेकत्वादिसंख्याया अपि तिबाद्युक्तायास्सामानाधिकरण्यसंबंधेन तस्यामेवान्वयः । नतु साक्षात्संबंधेन कर्त्रादौ । भावप्रधानमिति स्मृतिसंकोचे प्रमाणाभावात् कार्यकारणभावादिकल्पनागौरवापत्तेश्च । तत्रापिकर्त्राख्यातस्थले स्वाश्रयसमवेतत्वसंबंधेन । कर्माख्यातस्थले स्वाश्रयभूतकर्मवृत्तिफलप्रयोजकत्वसंबंधेन । चैत्रेणौदनः पच्यत इत्यत्रहि चैत्रेण पाकेनौदनः क्रियत इति विवरणानुसारात्कृतिरेवाख्यातार्थः । पाकस्य करणत्वं चैत्रस्यच कर्तृत्वं प्रतीयते । आत्मनेपदेनच लक्षणया कर्म । उक्तानुशासनानुरोधात् । फलन्तु विक्लत्यादि न कस्यापि पदस्यार्थः । तस्यान्यलभ्यत्वात् ॥

अतएव फलमात्मनेपदस्यार्थः, कृतिस्तृतीयार्थ इत्यप्यपास्तम् । चैत्रःपचत इत्यादौ कृतावपि शक्तेरावश्यकत्वेनानेकशक्तिकल्पने गौरवात्, चैत्रेणौदनः क्रियत इति तृतीयातः कृतेः प्रथग्विवरणाच्च । अतश्च तत्र कृतेराख्यातार्थत्वात्तस्यामेकत्वान्वयः स्वाश्रयीभूतौदनवृत्तिविक्लतिरूपफलजनकपाकजनकत्वसंबंधेन नानुपपन्नः ॥

एवं भावाख्यातेपि चैत्रेण सुप्यते गगनेन स्थीयत इत्यादावाख्यातेन स्वापःक्रियत इति विवरणाद्भावनैवोच्यते । स्थीयत इत्यत्राप्याश्रयत्वं नच तत्र लक्षणायां प्रमाणाभावः । चैत्रो जानातीत्यादौ विशेषणीभूतधात्वर्थान्वयस्येव गगनेन स्थीयत इत्यादौ विशेषणीभूतधात्वर्थान्वयस्यापि लक्षणाबीजत्वोपपत्तेः । नच तत्र धात्वर्थविशेष्यकएव बोधः भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्याख्यातपदज्ञानत्वेन कारणत्वस्यान्यत्र क्लृप्ततया " समिधोयजती " त्यादौ प्रथमान्तपदाध्याहारस्येव धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्यान्यत्रक्लृप्ततया तन्निर्वाहार्थभावाख्यातेप्याश्रयत्वलक्षणोपपत्तेः । तत्रापि भावप्रधानमिति स्मृत्या प्रत्ययार्थप्राधान्यस्मृत्याच भावनाया एव प्राधान्यम् । अनुशासनबलाच्चाख्यातेन कर्तृकर्मलक्षणावद्भावरूपधात्वर्थस्यापि गुणत्वेन लक्षणा । तथाच गगाननिष्ठं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्थितिमत् स्थित्याश्रयत्वमिति शाब्दबोधः । द्वितीयवारंस्थितिबोधस्त्वनुवा दसाधुत्वार्थः । अतः स्थीयत इत्येकत्वमपि स्वाश्रयीभूतभावरूपधात्वर्थनिरू पितत्वसंबंधेनाश्रयत्वादावेवान्वेति । भावप्रधानमिति स्मृतिसंकोचे प्रमाणाभावात्

नचैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः । प्रयोगा भावसहकृतानुशासनबलेन एकवचनेनैवद्वित्वादिलक्षणात् ॥

अतएव " उष्ट्रासिकाआस्यन्त " इति महाभाष्यकारवचनात् भावे पि बहुवचनं काचित्कम् ।

एवं " कर्मवत्कर्मणातुल्यक्रियः ,, ( ३-२-८७ ) इतिसूत्रात् पच्य ते ओदनस्स्वयमेवेत्यादौ यत्रसकर्मकधातोर्यत्कर्मकारकं तद्धृत्त्यखण्डोपाधिरू पकर्मत्वाविवक्षया कर्तृत्वविवक्षा तत्राख्यातेन तस्यैव गुणत्वेन लक्षणयोपा दानादाख्यातेन विवरणानुसारेण शक्त्यैव कृतेरुपादानात् तस्यामेव क र्तृत्वस्य स्वनिरूपकविक्लितिरूपफलजनकपाकजनकत्वसंबंधेन , ओदनस्यच स्वनिष्ठकर्मत्वनिरूपकफलप्रयोजकत्वसंबंधेनान्वयइति व्यक्तंकौस्तुभे ॥

तत्सिद्धं भावनातिरिक्ताख्यातार्थस्य सर्वस्य भावनायामेव प्रकारतेति तस्या मुख्यविशेष्यत्वं । धात्वर्थं प्रतितु तस्या विशेष्यत्वं , " प्र कृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृतिवशा देवाविवादं । अतएव न तस्यप्रत्ययार्थान्तरम्प्रति प्रकारता , विशेष्य गामित्वे संभवति प्रकारगामित्वस्यान्याय्यत्वात् ॥

अथकोयं धात्वर्थोनाम । यत्र विवदन्ते बहवः । तत्र मण्डनमिश्रा स्तावत् विक्लित्यादिरूपं फलमेवधात्वर्थः, तदनुकूलफूत्कारादिरूपो व्यापारसं घस्तु सर्वोपि व्यापारत्वेन प्रत्ययार्थः, फलस्यच तंप्रति प्रकारत्वमित्याहुः. तन्न, गमनजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेः. संयोगाख्यस्यफलस्य ग मनरूपत्वेन तज्जन्यत्वाभावात्. गमनाश्रयो ग्रामइति प्रयोगापत्तेश्च ॥

नच ल्युटो भावनावाचकेन व्यापाराभिधानान्नैतादृशप्रयोगाद्यापत्तिः . गम्यर्थवान् ग्राम इति प्रयोगस्यैवमप्यापत्तेः . गम्यर्थजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेश्च . स्वत्वध्वंसाख्यस्य फलस्य यजिपदार्थत्वे तस्यैव फलभावना

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करणत्वेन स्वर्गसाधनतापत्तेः , स्थायिनस्तस्मादेव स्वर्गोत्पत्त्युपपत्तावपूर्वक ल्पनानापत्तेश्च । अतोव्यापारमात्रं धात्वर्थः , फलंच द्वितीयार्थ इत्यन्ये, तदपि न– व्यापारत्वेन वाच्यत्वे सर्वधातूनां पर्यायत्वापत्तेः . क्रियात्वादिना विशेषरू पेण वाच्यत्वे त्यजिगम्योःपर्यायतापत्तेश्च. पूर्वदेशविभागानुकूलाक्रिया त्यजेर र्थः. उत्तरदेशसंयोगानुकूला सैव गमेः, तद्यदि क्रियामात्रं धात्वर्थः फलसामान्यञ्च द्वितीयार्थस्तदा तयोः पर्यायतापत्तिः. अत उभयं फलं व्यापारश्च धात्वर्थः । उभय त्रच प्रत्येकं शक्तिः . नात ओदनादिपदार्थस्यैकदेशान्वयशंका. तयोश्च ज न्यजनकभावस्संसर्गः . व्यापारविशेष्यकश्च बोधः. तत्रैव कर्मकारकातिरि क्तसर्वकारकाणामन्वयः . कर्मकारकस्यचफले । व्यापारश्च शरीरनिष्ठः फूत्का रादिरात्मनिष्ठः प्रयत्नादिश्च तत्त्वेन वाच्यः। अनुगतैकधर्मान्तरस्य निर्वक्तुमशक्तेः

नचैवं सर्वकारकव्यापाराणां तत्त्वेन वाच्यत्वे नानार्थकत्वापत्तिः , इष्टा पत्तौत्रासर्वकारकाणां प्रथमान्ततापत्तिः, नानार्थत्वेपि यत्कारकव्यापाराणां यदा विवक्षा तदा तेषामेव बोधस्तदादाविवबुद्धिस्थस्य। तत्कारकस्यैवच तदाप्रथमान्तत्वं. अतएव स्थाली पचतीत्यादिप्रयोगोपिविवक्षायांसङ्गच्छते ॥

अतस्सर्वोपि व्यापारोधात्वर्थः। आख्यातार्थस्तु यगादिविकरणस्थले कर्म . शबादिविकरणस्थले कर्ता . अकर्मकधातूत्तरयगादिविकरणस्थलेचभावरूपो धात्वर्थएव . " लः कर्मणीत्याद्यनुशासनात् . सर्वेषांच धात्वर्थम्प्रति योग्यसंबन्धेन गुणत्वम् . " भावप्रधानमाख्यातमिति स्मृत्या भावपदवाच्यधा त्वर्थस्याख्यातार्थं प्रति प्राधान्योक्तेः . प्रत्ययार्थप्रधान्यस्मृतिस्तु सुबादिविषयेति वैय्याकरणाः . तदपिन–फूत्कारत्वादेः पचतीत्यतोऽप्रतीतेः . अभासमानस्यश क्यतावच्छेदकत्वायोगात् . फूत्कारादिकं विनापि चैत्रनिष्ठक्रियान्तरमादाय स्व तस्सिद्धज्वालया जायमाने ओदने चैत्रः पचतीति प्रयोगाच्च . तत्तद्व्यापार- स्यतत्त्वेन तत्त्वेनानुभवे याग इच्छा ज्ञानं वेतिवादिविप्रतिपत्त्यनुपपत्तेश्च. अतो नुभूयमानं पाकत्वयागत्वादिकमेव तत्तत्फलोपधायकतावद्व्यापार वृत्त्यखण्डो- पाधिरूपसामान्यं पच्यादिपदशक्यतावच्छेदकम् . तत्सत्वे पाकः पाक इत्या द्यनुगतप्रतीतिः प्रमाणम् . फलोपधायकतावच्छेदकतया शक्यतावच्छेदकतयै वचा तत्सिद्धिः . फलोपधायकव्यापारत्वादेः प्रमाणान्तरतो बोधः . ननु शाब्द

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


बोधः अतएव फलस्यापिनद्वितीययाबोधः। अखण्डोपाधिरूपकर्मत्वस्यैव तदर्थतायाः स्थापयिष्यमाणत्वात्. शक्ततावच्छेदकंच तत्तद्धातुत्वम्. पाकत्वादिकंच विक्लित्तिजनकव्यापारवृत्त्येव. नतु तत्प्रयत्नादिवृत्त्यपि. पाकंकरोमीत्यादिना यत्नादेः पाकात्पृथग्विव्रीयमाणत्वात्. .... .... .... ....

नच घञादिसमभिव्याहृतधातोः फलएव शक्तिकल्पनात् पृथग्विवरणोपपत्तिः. अनेकशक्तिकल्पने व्यापारविषयकशक्तिप्रतिबन्ध कल्पने वा गौरवात्. ग्रामो गमनवानिति प्रतीत्यापत्तिभयेन व्यापारप्रतीतेरप्यावश्यकत्वाच्च. .... .... .... ....

अतएव विक्लित्तिजनकव्यापारसमूहएव पाकपदार्थो नतु तज्जनकयत्नादिरपि, तस्य पृथग्विव्रीयमाणत्वेन पच्यर्थत्वाभावात्. .... ....

अतएव तेजस्संयोगमात्रं पच्यर्थः, नतु विक्लित्यनुकूलव्यापारसामान्यमित्यपि प्रत्युक्तं, अग्निसंयोगानुकूलकृत्यभाववत्यपिभक्तविक्लित्यनुकूलावस्थावर्णकर्तरि पचतीतिप्रयोगात्. .... ....

अतएव पाकात्प्रथग्विव्रीयमाणयत्नादेर्भासमानस्य भानकारणजिज्ञासायां पारिशेष्यादाख्यातार्थत्वमेव. तस्मिंश्चपाकादेः प्रकारत्वं प्रकृत्यर्थत्वादेव, एवंच प्रत्ययार्थप्राधान्यस्मृतिरपि नसंकोचिता भवति. अत्रच पकाद्यनुकूलव्यापारसामान्यस्यैव प्रत्ययार्थत्वं, पाकं भावयतीति णिजन्तभूधातुना व्यापारसामान्यवाचकेन विवरणात्. यदपि पाकंकरोतीति विवरणम्, तदपि करोतेर्व्यापारसामान्यवाचकत्वादनुकूलमेव. नहि करोतिर्यत्नार्थकः, तथात्वे करोतेर्यततेरिवाकर्मकतापत्तेः. फलव्यधिकरणव्यापारवाचित्वं हि धातोस्सकर्मकत्वम्. फलसमानाधिकरण व्यापारवाचित्वं चाकर्मकत्वम्. पचेः फलं विक्लित्तिरोदनवृत्तिः. व्यापारश्चैत्रवृत्तिरिति व्यधिकरणत्वात्सकर्मकः. स्वापस्य फलं सुखं, तच्चैत्रएवेति द्वयोस्समानाधिकरणत्वमिति सोकर्मकः. तद्यदि करोतियत्योरेकार्थकत्वम्, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वं फलसमानाधिकरणत्वञ्च विरुद्धम्. अतः करोतिरपि व्यापारसामान्यवाच्येव. ....

अतएव रथोगच्छतीत्यत्र रथो गमनं करोतीति विवरणमपि संगच्छते.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत: करोति भावयतिभ्यां विवरणादाख्यातस्यापि फलोद्देश्यक प्रकृतधात्वर्थातिरिक्तं व्यापारसामान्यं वाच्यम्. तच्च फलं क्वचिद्धात्वर्थ: क्वचित्स्वर्गादीत्यन्यदेतत्. ....

व्यापारसामान्यस्यच विशेषाकांक्षारूपेतिकर्तव्यताकांक्षायां प्रयाजादिवाक्यैर्विशेषसमर्पणमितिपार्थसारथि: ॥

वस्तुतस्तु तत्तत्फलभेदेन तत्तद्व्यापारभेदेन चानुगतैकलघुभूतशक्यतावच्छेदकाभावात् पचति- पाके यतते, पाकं करोतीत्यादि विवरणाच्चाख्यातस्य यत्नत्वमेव शक्यतावच्छेदकम् । नच करोतिस्तदनुकूलव्यापारवाची, वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूल विजातीय वायुसंयोगरूप व्यापारवत्यपि नाहं स्पन्दं करोमि, अपितु वातरोगेण मच्छरीरं स्पन्दत इति प्रतीत्या करोतेर्यत्नार्थकत्वप्रतीतेः । यत्नत्वस्य शक्यतावच्छेदकत्वे लाघवाच्च । एवञ्चरथो गमनं करोतीत्यादौ अनुकूलव्यापारेकृञो लक्षणेति ध्येयं ॥

नच भवत्यर्थ कर्तृ कर्माविशेषात् करोतेर्भावयतिपर्यायत्वं । पर्यायत्वाभावेपि भावयति शक्यतावच्छेदक व्याप्य यत्नत्व शक्यतावच्छेदकत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः ॥

नच करोतेः यत्नार्थकत्वे यततेरिवाकर्मकतापत्तिः । सत्यपि यत्नरूपैकार्थत्वे धात्वर्थतावच्छेदकफलभेदेन सकर्मकत्वाकर्मकत्व व्यवस्थोपपत्तेः । यततेर्हि चैत्रनिष्ठा क्रियैव यत्नसमानाधिकरणं फलं । करोतेस्तु तद्व्यधिकरणम् उत्पत्त्याख्यं धात्वर्थतावच्छेदकं फलं । ततश्च यथैव पचति गच्छत्योः व्यापाररूपक्रियैकत्वेपि फलभेदादेव व्यवस्था , एवमिहापि व्यापाररूपयत्नैकत्वेपि फलभेदादेव सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तिः । तत्फलं पुनरुभयत्रापि प्रमाणान्तरावगतमेव धात्वर्थोपलक्षणम् धातुवाच्यमेव वेत्यन्यदेतत्

वस्तुतस्तु एतल्लक्षणस्य कौस्तुभोक्तरीत्या अव्याप्त्यादि दोषदुष्टत्वात् अविवक्षाविरह विशिष्टकर्माकांक्षधातुत्वमेव सकर्मकत्वं, तदभावश्चाकर्मकत्वमित्येवं कौस्तुभोक्तलक्षणंयुक्तम् । अत्रचाकांक्षा समभिव्याहारात्मिका शब्दधर्मः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तेन सत्यप्यर्थैकत्वे यथा घट.कर्मत्वमित्यादावनाकांक्षत्वं घटमित्यादौ साकांक्षत्वम् , तथैव यततेः कर्मानाकांक्षत्वं करोतेश्च कर्मसाकांक्षत्वमविरुद्धं । पच्यादेश्च स्वरूपेण कर्मसाकांक्षत्वेप्यविवक्षा दशायामकर्मकत्वादविवक्षाविरहे ति । अतएव ओदनस्य पच्यत इति भावेपि प्रयोगः । आसादि धातूनां च स्वरूपेणाकर्मकाणामपि मासादिकालयोगे कर्मसाकांक्षत्वात् सर्कमकत्वाच्चैत्रेणास्य तेमास इति प्रयोगोपपत्तिः । एवमेकस्यैव ग्रथधातोः चैत्रनिष्ठव्यापार वा चित्वरूपधर्मपुरस्कारेण कर्मसाकांक्षत्वात् सकर्मकत्वं, पुष्पनिष्ठव्यापारवाचि त्वेन कर्मानाकांक्षत्वादकर्मकत्वञ्चद्रष्टव्यम् । अतो यत्नार्थकत्वेपि करोतेस्स कर्मत्वाक्षतेस्तेन विव्रीयमाणाख्यातस्यापि यत्नार्थकत्वम् । एवञ्च रथो गच्छति जानाति इच्छति प्रयतते इत्यादौ यत्र यत्नस्य बाधः, तत्रानुकूल व्यापारस्याश्रयत्वस्यवा लक्षणेति द्रष्टव्यं । नश्यतीत्यादौ प्रतियोगित्वे लक्षणा ॥

तत्सिद्धं भाक्तमुख्यसाधारण्येन सर्वत्र धात्वर्थातिरिक्ता भावनाऽख्या तार्थ इति । तस्याश्च शक्ततावच्छेदकं करोतीति विव्रीयमाणाख्यातत्वं, अत श्च भवतीत्यादौ करोतिना विवरणाभावेन भावनाभावात् धात्वर्थएव कारका न्वयः, परंपरासंबंधेनै कत्वान्वयश्चेति प्रांचः ॥

वस्तुतस्तु लाघवादाख्यातत्वमेव शक्ततावच्छेदकं । भवतीत्यादावा श्रयत्वे ल क्षणा । एवंचकारकाद्यन्वये नव्युत्पत्यन्तरकल्पनापि । शक्ततावच्छेदकञ्च नलत्वं, यथाकथंचिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः । नाप्यादेशोपस्थापित लत्वं, शानजाद्यादेशोपस्थापितलकारादपि शक्त्याभावनाबोधापत्तेः । नापि तिबाद्यादे शोपस्थापितलत्वं, तथात्वे तिबादीना मनेकेषां प्रवेशात् शक्ततावच्छेदकानामननुगमे न शक्त्यनेकत्वापत्तेः । तद्वरं तिप्त्वादिनैव प्रत्येकं शक्तिः। अतएवतिप्त्वादिना लकारा नुपस्थितावपि शाब्दबोधः । अन्यथाऽनेकेषु तिबादिषु तावतां शक्तिभ्रमाणां कारणत्वकल्पने गौरवात् ॥

एतेनाख्यातत्वमेवैकं शक्ततावच्छेदकम् । तच्च शक्यत्वसंबंधेनाख्या तपदवत्वं । तद्वत्त्वंच तिबादिष्विति ते शक्ता इत्यप्यपास्तं, तिप्त्वादिषु आ ख्यातपदवाच्यत्वाज्ञानेपि तिप्त्वेन पचतीत्यादौ ज्ञानेपि भावनाबोधात् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतस्सिद्धमाख्यातार्थो भावनेति । तस्याञ्च धात्वर्थस्य प्रकारत्वेनान्वयः । प्रत्ययार्थ प्राधान्यस्मृतेः संकोचे प्रमाणाभावात् । भावप्रधानमित्यस्याख्यातार्थे ष्वनेकेषु कस्यप्राधान्यमित्यपेक्षिते भावपदवाच्यभावना प्राधान्यमित्यपेक्षिता र्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः । अतो निरुक्त स्मृतौ भावपदेन वैयाकरणपरिभावितधात्वर्थस्य न ग्रहणमित्युक्तमेव ।

नच प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिंगसंख्यादेः प्रकृत्यर्थं प्रति प्र कारतया संकोचावश्यकत्वे यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितं तदनुवादमात्रतया भावनाविषयेपि बाधकाभावः, 'प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येने' त्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधि करण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात् सुबाद्यर्थलिंगसंख्यादीनामप्राधान्येपि क्षतिविरहात् ॥

वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकार ता, अपितु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरम्प्रत्येवेतिवक्ष्यते ॥

अतस्सिद्धं धात्वर्थस्य भावनायां प्रकारतेति । धात्वर्थश्च क्वचिच्छक्या र्थएव प्रकारः । यथा -"सोमेनयजेते"त्यादौ । क्वचिल्लक्ष्यार्थएव । यथा-"अग्नीषो मीयं पशुमालभेते"त्यादौ यागः । लक्ष्यार्थोपि क्वचिच्छक्यार्थयुक्तः । यथा -"पृ ष्ठैरुपतिष्ठत " इत्यादौ । आत्मनेपदानुरोधेन समीपस्थितिरूपशक्यार्थविशिष्टम भिधानम् ॥

वस्तुतस्तु "सोमेन यजेते"त्यादि तत्तद्विधिष्वपि विजातीययागत्वादिनै वलक्षणेति शक्यार्थान्वयोन्यत्रानुसंधेयः । तस्यच कृतौ संसर्गोनानुकूलत्वं । पचति पाकं करोतीति पाककर्मत्वस्यैव विवरणबलेन संसर्गत्वप्रतीतेः । अत एवौदनं पचतीत्यादौ पाकेनौदनं करोतीति विवरणात् पाककरणत्वस्यापि प्रतीतेस्तस्यापि संसर्गत्वं । अतश्च कर्मत्व करणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्यान्वयः ॥

यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितं, कृतिसाध्यत्वात्पाकादेः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथापि स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यकत्वसंबंधेन पाकस्य कृतावन्वयात् करणत्वस्यापि संसर्गघटकतया संसर्गत्वोपपत्तिः । अस्तिचौदनस्यापि कृता वुद्देश्यताख्या विषयतेति नैतादृशसंसर्गबाधः । तत्रच यत्र विध्यश्रवणं तत्र द्वितीयान्तपदाद्यश्रवणे पचति चैत्र इत्यादौ धात्वर्थस्येष्टसाधनत्वाज्ञानेपि तस्य कर्मत्वमेव, आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात् । अत एवा कर्मकधातुस्थलेपि आख्यातोपात्तायाभावनायाः सकर्मकत्वमेव । अतएव तस्यास्तदाकांक्षायां स्वास्थ्यकामश्शयीते त्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेनान्वयः । स्वर्गकामपदेनेव लक्षणया स्वर्गादेः । धातुस्त्वकर्मकएव । अतएवात्र न भावना कर्मणिद्वितीया, सातु धात्वर्थकर्मण्येव । सकर्मकधातुस्थले यथा-"व्रीहीनवहन्ती"त्यादौ, तत्र तेषां प्रथमतो भावनायां कर्मत्वेनान्वयेपि पार्ष्ठिकं धात्वर्थेपि कर्मत्वमितितेषां धातूनां सकर्मकत्वोपपत्तिः । अतो भावनाया नित्यसकर्मकत्वात् पचति चैत्र इत्यादिनिरुक्तस्थले भावनायाः कर्माकांक्षायां समानपदश्रुत्याधात्वर्थस्यैव कर्मत्वं । लौकिकवाक्यत्वाच्च तस्य वैय्यर्थ्येपि न दोषः, वेदेतु विध्यन्तरैकवाक्यत्वादिना स्तावकत्वाद्य संभवेन स्वाध्यायविध्यवगत प्रयोजनवत्त्वानुरोधेन लडादेरेव लेट्त्वं लेडर्थकत्वंवा लक्षणया परिकल्प्य भावनाया स्स्वर्गादिभाव्यान्तरपरिकल्पनया धात्वर्थस्य तत्र करणत्वेनान्वयः । विधेः प्रवर्तकत्वान्यथानुपपत्त्या तत्सभिव्याहृतायां भावनायामिष्टभाव्यकत्वावश्यंभावात् । घटं पटञ्चानयेत्यादौ चकारं विना कर्मद्वयान्वयादर्शनात् करोतेरिवाख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्यां कर्मत्वा नुपपत्तेश्च । अतएव यत्र विधिसमभिव्याहारस्य सत्त्वे असत्त्वेवा द्वितीयादिना भाव्यान्तरं निर्दिष्टं,यथा-"व्रीहीनवहन्यात "ओदनं पचतीत्यादौ,तत्र धात्वर्थस्य करणत्वमेव । यत्रातु तादृशस्थलेअप्राप्तकरणान्तर सत्त्वं धात्वर्थस्यच प्रकरणादिना प्राप्तिः, यथा- " गोदोहनेन पशुकामस्य प्रणयेत् ,, " दध्नेन्द्रियकामस्य जुहुया ,,दित्यादौ, तत्राश्रयतया प्रकरणप्राप्त धात्वर्थानुवादमात्रम् । साधुत्वसिद्ध्यर्थं धातुः । नतु तदर्थस्य करणत्वे नान्वयः । नवाश्रयत्वेन, कर्मत्वातिरिक्तस्याश्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनायामिंद्रियरूपकर्मावरुद्धायां होमस्यापि कर्मत्वेनान्वये एककर्म

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कत्वभङ्गापत्तेः । अतएवानेकोद्देश्यनिमित्तवाक्यभेदेपि एककर्मकत्वभङ्गएव दू
षकताबीजमुक्तं कौस्तुभादौ । एककर्मकत्वञ्च-नैककर्मत्वकत्वं एककर्मत्वाश्रयकर्मक
त्वंवा, " सर्वेभ्योदर्शपूर्णमासौ „ घटानानयेत्यादौ तदनापत्तेः। तत्र पुत्रादिवृत्तिकर्म
त्वानां कर्मत्वाश्रयपुत्रादीनांवानेकत्वात् । नाप्येककर्मत्वावच्छेदककत्वं " सर्वेभ्योद
र्शपूर्णमासावि त्यादौ " व्रीहीन्प्रोक्षती „ त्यादौच तदनापत्ते;। तत्र पुत्रत्वपशुत्वा
दीनां तदपूर्वसाधनत्वानांच कर्मतावच्छेदकानां भेदात्. किंत्वेक बोधविषयकर्म
त्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वमित्युक्तं कौस्तुभे । निरुक्तस्थलेषुच सर्वत्र क
र्मत्व पर्याप्त्यधिकरणतावच्छेदक धर्माणामेकेन पदेनैकस्यैव समूहालम्बना
त्मकस्य बोधस्य जननात् एककर्मकत्वोपपत्तिः । "अध्वर्युयजमानौ वाचं
यच्छत„ इत्यत्र चाध्वर्युत्व यजमानत्वयोः कर्मत्वाधिकरणत्वावच्छेदकयोरेकबो
धविषयत्वाभावात् द्विकर्मकत्वापत्ति रतः " पर्याप्तीति „ । तत्र द्वंद्वोत्तरवि
भक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात् तत्पर्याप्त्यधिकर
णतावच्छेदकधर्मस्याध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैकबोधविषयत्वेनैककर्मत्वोप
पत्तेः, उपपादितं चैतत् कौस्तुभादौ । एवं शुक्लंघटमानयेत्यादौ शुक्लस्य
घटे अभेदान्वयात् पदद्वयेन, घटपदेनैववा शुक्लगुणविशिष्ट घटलक्षणादे
ककर्मत्वोपपत्तिः । एवं घटं पटंचानयेत्यादौ इतरेतरयोगार्थक चकाररूप ता
त्पर्यग्राहकानुरोधेन द्वितीयान्तपदद्वये लक्षणया तदुपपत्तिः । यथाचैवंस
ति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकताबीजं एक
कर्मकत्वभङ्गापत्तिः तथा कौस्तुभे व्यक्तं ॥

तत्सिद्धं यत्र द्वितीयादिना भाव्यान्तरं भावनायां अन्वययोग्यमुपात्तं ;
तत्र नधात्वर्थस्य कर्मत्वमिति , यत्रतु तदुपात्तं धात्वर्थस्य चेष्टसाधनत्वं
प्रमाणान्तरेण प्रमितं तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव
यथा - "दध्नाजुहोती" त्यादौ ॥

नचैवं "जुह्वाजुहोती" त्यादौ जुहोतेस्सकर्मकत्वात् कर्मान्तरावश्यंभावे
न भावनायाः द्विकर्मकत्वापत्तिः । सकर्मकस्यापि भावाख्यात इव कर्मा
विवक्षोपपत्तेः । एतादृशेपि विधेयेयदि तृतीयान्तनामधेयश्रवणं तदा करणत्व
मेव, यथा - "समे दर्शपूर्णमासाभ्यांयजेत „ " उच्चैःप्रवर्ग्येण „ त्यादौ । यत्रतु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थमनुवादः, यथा - विद्वद्वाक्ययोः. तदभावेतु "तनूनपातंयजती त्यादौ कर्मान्तरमेव करणत्वेनेत्याद्याकरेव्यक्तं. यत्रतु नेष्टसाधनत्वं प्रमितं, स्ववाक्येचोद्भिदादिवत्तृतीयान्तनामधेयश्रवणं यथा– "सोमेनयजेत,, "अग्निहोत्रंजुहोती,, त्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमेपि विधिबलेन भावनाया इष्टभाव्यकत्वावगमात् इष्ट सामान्यस्यैव तत्रभाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वमेव अग्निहोत्रमित्यत्र द्वितीयापि तत्र करणत्वलक्षणार्थैवेति सांप्रदायिकाः. एतादृशेविषये समानपदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव, सुतराम् अग्निहोत्रमिति द्वितीयान्तश्रवणे । नच इष्टसाधनत्वेनाज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेनान्वयोपपत्तेः. नच विधेः प्रवर्तकत्वव्याघातः, विध्यवगतेष्टभाव्यकत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेपि शाब्दबोधं - प्रत्यकारणत्वात्, तदभावेपि होमकर्मकभावना शाब्दज्ञानोपपत्तेः. नच भाव्यत्वेनान्वितस्य तस्य भाव्यान्तरानाकांक्षत्वात् फलवाक्येपि स्वर्गसाधनत्वबोधानापत्तिः । साधनत्वेनान्वितस्यार्थाद्विध्यनुरोधेन कृतिसाध्यत्वज्ञानवत् कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षानुरोधेनैव इष्टविशेषसाधनताया वाक्यान्तरेण विश्वजिन्नयायेनवा बोधोपपत्तेः. अत उत्पत्तिवाक्ये धात्वर्थस्य-कर्मत्वेनैवान्वय इतिप्रभाकरोक्तमपि युक्तमिति तर्करसिकाः.

सर्वथा सिद्धं धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेण भावनायां प्रकारतेति.

सांप्रदायिकास्तु धातुना स्वार्थवृत्तिकर्मत्वकरणत्वान्यतरत् लक्षणया प्रतिपाद्यते. तस्यैव स्वनिरूपकत्व स्वनिरूपकोद्देश्यकत्वान्यतर संसर्गेण भावनायामन्वयः. नतु कर्मत्वादेरपि संसर्गत्वम्. तथात्वे "प्रकृतिप्रत्ययौ प्रत्यार्थं सह ब्रूत" इति साहित्यरूपान्वयानुशासन वैयर्थ्यापत्तेः. नहि पदार्थानुशासनप्रवृत्तानां तेषामन्वयानुशासकत्वं युज्यते. अतः कर्मत्वकरणत्वादिरूपान्वयोपि वृत्त्यैव पदार्थविधयाभासते. अतएव ज्योतिष्टोमेनेति तृतीयापि पदार्थविधया भासमान करणत्वानुवादिकेति संगच्छते. विशेषणविशेष्ययोः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकारतया भासमानकारकवत्त्वस्यौत्सर्गिकत्वा दित्याहुः. तत्सिद्धं धात्वर्थस्य सर्वत्र भावनायां प्रकारतेति. सा परं आख्यातोपात्ता कृदाद्युपात्ताच लिंगानन्वयिनीति वक्ष्यते. तेन वस्तुपदोपात्तायां भावनायां नान्वयः.

एवं सुबर्थस्यापि लिंगसंख्याभिन्नस्य तस्यामेवान्वयः प्रकारतयेतिज्ञेयं. तथाहि — प्रथमार्थस्तावल्लिंगसंख्याभिन्नः तस्यां प्रकारत्वेनान्वेति . नच तस्याः साधुत्वमात्रार्थमुच्चारणेन तदर्थमानाभावः, संबोधनेभिमुखत्वस्यापि भासमानत्वेन तदसिद्धेः. तच्च प्रकृतशाब्दबोधाश्रयत्व प्रकारक वक्तृभिन्न विशेष्यक वक्त्रिच्छाविषयीभूत शाब्दज्ञानवत्त्वम्. प्रकृतशाब्दबोधनिष्ठ विषयितानिरूपित वक्तृभिन्ननिष्ठ वक्त्रिच्छाविषयतावत्त्वंवा . युष्मत्पदशक्यतावच्छेदकंच तदेव. अस्तिचेदं देवदत्त गामानयेत्यादौ, देवदत्त चैत्रो गामानयतीत्यादौच. तस्य उक्तविधज्ञानवत्त्वात्.

नच यत्र स्नुषां बोधयितुं कन्यासंबोध्यवाक्यप्रयोगः, तत्र स्नुषायामतिव्याप्तिः. तत्र स्नुषाया स्संबोध्यत्वेपि तत्संबोधनस्य शब्दतात्पर्यविषयत्वाभावेन तस्यां संबोधनप्रथमानापत्तेः. तात्पर्यविषयत्वसत्त्वेच भवत्येव सा. अतएव चेतनएव संबोधनं मुख्यम्. अचेतनेतु ज्ञानवत्त्वारोपेण गौणो व्यवहारः. अतएवाद्योदाहरणेऽभिमुखत्वं कर्तृत्वंचेत्युभयं प्रथमार्थः.

तत्र चाधेयत्वंप्रातिपदिकार्थसंसर्गः, तयोश्चविषयत्वनिरूपकत्वाभ्यां भावनायामन्वयः. अन्त्येचाभिमुखत्वस्यैव विषयत्वसंसर्गेण । चैत्रमैत्रः कीदृश इत्यादावपि " अस्तिर्भवती,,त्यादिना क्रियापदाध्याहारस्यावश्यकत्वाच्छाब्दबोधाविवादः । चैत्रमैत्रोग्रामंगच्छतु इत्यादौतु लोडर्थप्रार्थनाविषयीभूतायां भावनायां निरुक्तसंबंधेनसंबोध्यत्वस्य स्वरूपसंबंधेन स्वनिष्ठव्यापारप्रयोज्यत्वस्यचान्वयः. प्रतीत्यनुसारेण तत्तदर्थकलोडादेरेवतात्पर्यग्राहकत्वात् । अत्रच - प्रथमादेशविशेषाणामेव संबोधनेशक्तिः पृथगनुशासनबलात्, हेशब्दादिकंतात्पर्य ग्राहकं, व्यापारप्रयोज्यत्वादौतु लक्षणैव । चैत्रमैत्रोग्रामंगच्छती त्यादौ प्रथमांतेच तार्किकमतेपि भावनाविशेष्यत्वंनास्ति, प्रथमार्थरूपान्यविशेषणत्वात्. तत्राख्यातोपात्तसंख्यान्वयाभावाच्च । अतस्तैरसंबुद्धिभिन्न प्रथमांतपदजन्योपस्थितिवि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावनान्वयप्रयोगोकेतिवाच्यं. नचतदपि वक्तुंशक्यं चैत्रगामानयेत्यादौ तदनापत्तेः ॥

नच तत्रत्वंपदाध्याहारः, तथात्वे भो ब्राह्मणाः त्वंपचेति प्रयोगापत्तिः । नच युष्मदर्थकर्तृसंबुद्ध्योरेकसंख्याकत्वं, व्युत्पत्त्यंतरकल्पनापत्तेः । एतेनाभिमुखत्वादेः सर्वत्रप्रातिपदिकार्थप्रकारत्वमित्यप्यपास्तं. चैत्रमैत्रःपचतीत्यादौ-चैत्रेभावनाद्यन्वयापत्तेः ॥

वस्तुतस्तु अस्मन्मतेपि चैत्र मैत्रः पचतीत्यादौचैत्रस्य कर्तृत्वेनभावनान्वयस्य निवारयितुमशक्यत्वात् सर्वत्र संबोधनमेव संबुद्धिप्रथमाया अर्थः । नतुकर्तृत्वमपि, चैत्र पचेत्यादौ मध्यमपुरुषस्थले आख्यातेन संबोध्ययावद्व्यक्तेरेव कर्तृत्वेन लक्षणान्नसंबोद्ध्यातिरिक्तस्य कर्तृत्वप्रसङ्ग इतिध्येयं। अतो द्वितीयादिसाधारण्येन प्रथमासुबर्थस्यापि प्रकारत्वमेव सर्वत्र युक्तम् ।

नच प्रथमायाः लिङ्गसंख्ययोरिव संबोधनरूपार्थवत्त्वेपि तदतिरिक्तार्थाभावात् चैत्रः पचतीत्यादौ प्रातिपदिकार्थातिरिक्तस्य विशेष्यभूतार्थस्याभावेन कथं द्वितीयादिसाधारण्येन सर्वत्र प्रथमार्थस्य प्रकारत्वमिति वाच्यम् , असंबुद्धिप्रथमाया अपि अनुशासनबलेनलिङ्गसंख्याव्यतिरिक्तार्थवाचित्वावगतेः । तथाहि पाणिनिमतं तावत् "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" ( २-३-४६ ) इतिसूत्रात् प्रातिपदिकार्थ एव, इदंहि लिंगाद्यंशे शक्यत्वानुशासनवत् प्रातिपदिकार्थांशेपि शक्यत्वानुशासनमेव, नतु प्रातिपदिकार्थे प्रातिपदिकेन विवक्षिते प्रथमायास्साधुत्वमित्येवंपरं, वैयर्थ्यापत्तेः । वैरूप्यापत्तेश्च । अतश्च प्रातिपदिकार्थश्चैत्रादिरेव प्रथमार्थः ॥

नचैवमपि तस्य प्रातिपदिकेनैव बोधसिद्धेः प्रथमायास्तदंशे साधुत्वार्थमनुवादकतया न प्रथमार्थस्यान्यत्रप्रकारतेति वाच्यं, प्रातिपदिकस्यैव प्रथमार्थ विशेषतात्पर्यग्राहकत्वांगीकारेण प्रथमार्थस्यान्यत्र प्रकारत्वे बाधकाभावात् । इतरथा सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणमित्येवंविध कार्यकारणभावे प्रथमातिरिक्तत्वप्रवेशेगौरवात् । प्रकृत्यर्थस्य प्रत्ययार्थं प्रति प्रकारत्वे प्रथमान्त प्रातिपदिकातिरिक्तत्वप्रवेशेगौरवाच्च । आख्यातार्थभावनादेः प्रथमान्तार्थं प्रति प्रकारत्वे व्युत्पत्त्यन्तरकल्पनापत्तेश्च।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अतो लाघवात् ुबर्थत्वेन प्रथमार्थस्यापि चैत्रादेराख्यातार्थभावनायामेव प्रकारता । अतएवैतादृशे विषये प्रकृत्यर्थस्य चैत्रादेर्न प्रथमार्थचैत्रादावन्वयः, प्रकृतिप्रत्ययार्थयोर्व्युत्पन्नस्य भेदान्वयस्य बाधात्, अभेदान्वयस्य चाव्युत्पन्नत्वात् । अतः प्रातिपदिकं तत्र प्रथमार्थविशेषतात्पर्यग्राहकमेव । प्रथमोपस्थापितस्तु सएवाख्यातार्थभावनान्वयी । नचैवमाख्यातपदाभावे तस्यानन्वयः। काष्ठैरोदनमित्यादौ क्रियापदाध्याहारेणेव नीलो घट इत्यादावपि अस्तीत्यध्याहारस्यानुशासनाशिष्टतया सुतरामुपपत्तेः । नीलपदस्यापि वक्ष्यमाणरीत्या नीलगुणे नीलत्वजातौवा शक्तस्य लक्षणया लक्षितलक्षणयावा नीलत्वावच्छिन्नगुणविशिष्टद्रव्यपरस्य तात्पर्यग्राहकत्वात्, तदुत्तरप्रत्ययोक्तस्य तद्द्रव्यस्यापि न घटेन सहाभेदेनान्वयः, अपितु घटवदेवास्तीत्याख्यातोपात्तभावनायामेव, एकव्युत्पत्त्यैव शाब्दबोधोपपत्तेः । इतरथा विशेषणवाचकनामार्थस्याभेदसंबंधेन नामार्थान्तरान्वयकल्पनात्तदुत्तरद्वितीयादिविभक्तेरपि साधुत्वार्थकत्वकल्पना, प्रकृत्यर्थस्य प्रत्ययार्थेन्वयव्युत्पत्तेश्च विशेषणवाचकप्रकृतिभिन्नविषयत्वकल्पनेत्येवं गौरवापत्तेः । .... ....

नच नीलघटयोरभेदानुभवानुरोधेन गौरवांगीकरणमपि न दोष इति वाच्यम् । प्रथमाद्वयार्थस्य नीलगुणविशिष्टस्य घटस्यच कर्तृतासंसर्गेण शाब्दबोधे भावनाविशेष्यके जाते पश्चाद्धटस्य परिच्छेदकीभूतगुणापेक्षायां गुणविशिष्टस्यच जात्यपेक्षायां मानसोऽभेदानुभव इति पाष्ठिकबोधमादायानुभवोपपत्तेः ॥ .... .... ....

नच शब्दादभासमानस्याभेदस्य वेदोत्थज्ञानविषयत्वाभावात्, अरुणैकहायनीत्यत्रारुण्यस्यैकहायन्यामन्वयाकरणेपि दोषाभावापत्तिः । वेदापेक्षितार्थविषयकस्य मानसस्यापि ज्ञानस्य वेदतात्पर्य विषयतया वेदार्थत्वात् । नहि वेदपदवृत्तिविषयत्वं वेदजन्यशाब्दबोधविषयत्वमेववा वेदतात्पर्यविषयत्वप्रयोजकं । तथात्वे “ इमामगृह्णन्रशनामृतस्येत्यश्व भिधानीमादत्ते ” इत्यत्र शाब्दबोधे मन्त्राश्वाभिधानीसंबंधमात्रस्यैव विषयीकरणात्, तस्यच लिङ्गकल्प्यश्रुत्यैव सिद्धावेतद्वाक्यवैयर्थ्यापत्तेः, तत्परिहारार्थमनुमीयमानस्य लैङ्गिकश्रु


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्वभावस्यापि वेदतात्पर्यविषयत्वानापत्तेः, परिसंख्याफलकत्वानापत्तिः । अतोवेदापेक्षाशामकज्ञानविषयत्वमेव वेदतात्पर्यविषयत्वप्रयोजकम्, तच्चगुणविशिष्टद्रव्यस्य एकहायन्यादेश्चाभेदेपि अक्षतमेव । आवश्यकं चैतत् परेषामपि, इष्टसामान्यसाधनत्वस्यैव लिङर्थत्वात्, स्वर्गादिपदार्थस्यच कामनाविशेषणत्वेन इष्टे अभेदान्वयानुपपत्तेः, इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति शाब्दबोधस्यावश्यकत्वात् । तदुत्तरमिष्टे स्वर्गाभेदबोधो मानस एव शास्त्रतात्पर्यविषय इति, एतादृशतात्पर्यविषयीभूतबोध एव चेष्टे स्वर्गभेदनिश्चयप्रतिबध्यः नतु शाब्दबोध इति त्वयाप्यङ्गीकार्यमिति न ममैव तच्चोद्यावकाशः । .... .... ....

यदितु त्वया एतादृशदोषभिया स्वर्गादिसाधनत्वमेव शक्त्या लक्षणयावा लिङर्थः, स्वर्गादिपदंच तात्पर्यग्राहकमित्यभ्युपेयते, तदा मयापि नीलपदोत्तरप्रथमार्थस्य गुणविशिष्टद्रव्यस्य स्वाभिन्नघटवृत्तिकर्तृत्वसंसर्गेणभावनान्वयः, घटपदंच संसर्गेपि तात्पर्यग्राहकं, घटपदोत्तरप्रथमार्थस्य स्ववृत्तिकर्तृत्वेनेति शक्यम् वक्तुं, ततश्चाभेदस्यापि शाब्दत्वोपपत्तेः न कश्चिद्दोषः ॥

केचित्तु विशिष्टविध्यादौ विशेषणविध्यादिवाचक पदसमूह कल्पनावदभेदबोधक वाक्यान्तरकल्पनैवेत्याहुः । सर्वथा प्रथमार्थस्य भावनायाः द्वितीयादिसाधारण्येन भेदसंबंधेन प्रकारतेतिसिद्धम् । ....

एतेन चैत्रादे र्नामार्थस्य प्रथमार्थस्यैववाख्यातोपात्त कर्त्रादावभेदान्वय इतिवैय्याकरणमतमप्यपास्तम् । व्युत्पत्त्यन्तरकल्पने प्रमाणाभावात् ।

यत्तु स्तोकं पचतीत्यादौ नामार्थस्य स्तोकस्य पाके अभेदान्वयार्थं अभेदसंबंधेन निरर्थकसुप्समभिव्याहृत नामार्थप्रकारकशाब्दत्वावच्छिन्नम्प्रति निरुक्तनामसमभिव्याहृत पदजन्योपस्थितिः कारणमिति कार्यकारणभावस्यावश्यकत्वात्, तेनैवचैत्रादेः योग्यतया कर्त्रादावभेदेनान्वयोपपत्तिरिति । तन्न- चैत्रपदोत्तरप्रथमायाः निरर्थकत्वस्य पाणिन्यादिविरुद्धत्वात् । स्वलेखन विरुद्धत्वाच्च । स्तोकप्रातिपदिकार्थः स्तोकत्वं, द्वितीयार्थो लक्षणया आ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रयत्वं तस्यच साक्षात् परंपरयावा पाकादौ भावनायांचान्वयान्न निरर्थकसुप्त्वमिति तादृशव्युत्पत्तिकल्पनाया असिद्धेश्च । यस्यापि स्तोकत्वविशिष्टं प्रातिपदिकार्थः, तस्यापि मते अभेदो लक्षणया द्वितीयार्थः, सच स्तोकप्रतियोगिकान्योन्याभावाभावरूपः स्तोकत्वमेव, तस्यचभेदसंबंधेनैव पाकादावन्वयः । द्रव्यत्वावच्छिन्नवृत्तिद्रव्यत्ववान् पट इतिवच्च स्तोकत्वावच्छिन्नवृत्तिस्तोकत्ववान् पाकादिरिति शाब्दबोध इति क्वनामार्थस्याभेदसंबंधेनान्वयः, क्वा द्वितीयाया निरर्थकत्वं ॥ .... ....

नच लक्षणादोषभिया व्युत्पत्त्यन्तरकल्पनम् द्वितीयाया निरर्थकत्वकल्पनञ्च नदोषः । तथात्वे चैत्रो जानातीत्यादौ आश्रयत्व लक्षणायाः शिरोमणिसम्मताया अनापत्तेः । अत्रापि कृत्यविषयीभूतार्थकधात्वर्थस्य व्युत्पत्त्यन्तरेणैव नामार्थप्रकारत्वोपपत्तेः । लक्षणायाः फलमुखत्वाच्च । अन्यथा लक्षणोच्छेदापत्तेः । तस्मायुक्तंप्रथमार्थस्यापि कर्तृत्व कर्मत्व रूपसंसर्गेणाख्यातार्थभावनायामन्वयः, प्रातिपदिकंच तात्पर्यग्राहकम्, लिङ्गसंख्यान्वयश्च प्रथमार्थ एवेति । इति सर्वमनवद्यम् ॥ .... ....

संसर्गश्च आख्यातनिपातोपात्तकर्तृत्वकर्मत्वमेव, नतु कृदाद्युपात्तमपि, तेन पाठकश्चैत्रः पचतीत्यत्र चैत्ररूपप्रथमार्थस्य पाकक्रिया कर्तृत्वसंसर्गेणैवान्वयः, अतएवाख्यातोपात्तभावनायामेव, योग्यत्वात् । नतु लिंगानन्वयित्वेपि कृदुपात्तायां पाठकृतौ, तस्यामाख्यातोपात्त कर्तृत्व संसर्गेणायोग्यत्वात् । एतादृशसंसर्गविवक्षानंगीकारेच चैत्रः पाठकेन पच्यते ओदन इत्यस्याप्यापत्तेः । अतः चैत्रः पाठकर्ताच द्वावपि पाककृतावेव तन्निरूपितकर्तृत्वसंसर्गेणान्वयेते, तयोः परस्पराभेदभानंतु पूर्ववत् । चैत्रस्य पाठकृत्याश्रयत्वभानंतु सर्वमतेमानसमेव । एवं पक्व ओदनो भुज्यत इत्यत्रापि ओदनरूपप्रथमार्थस्य भोजनकृतिनिरूपितकर्मत्वसंसर्गेण भोजनकृतावेवान्वयः, नतु पाककृतिकर्मत्वेन पाककृतौ तदुपात्तायां, तथात्वे ओदनः पक्वं चैत्रो भुङ्क्ते इत्यस्याप्यापत्तेः । अतस्तत्रापि पूर्ववदेवान्वयः । चैत्र इव मैत्रोगायति “ विषवृक्षोपि संवर्द्ध्य स्वयं छेत्तुमसांप्रत ” मित्यत्राख्याता

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पात्तकर्तृत्वकर्मत्वाभावेपि इवादिनिपातोपात्तकर्तृत्वकर्मत्वसंसर्गेण तदुपात्तभावनायां लिंगान्वयरहितायां चैत्रविषयोः प्रथमोपात्तयोरन्वयाच्च, "निपातेति"।

तदेवं पाणिनिमते प्रथमार्थनिष्कर्षः ॥ ....

* कात्यायनस्तु न प्रातिपदिकार्थे प्रथमा । तथात्वे प्रातिपदिकस्य तात्पर्यग्राहकत्वमात्रकल्पनया शाब्दबोधजनकत्वानापत्तेः । अपितु अभिहित कारकत्वमेव प्रथमार्थः । तस्मिंश्च कर्तृत्वादिरूपे प्रथमार्थे प्रातिपदिकार्थश्चैत्रादिर्भेदसंबंधेनैवान्वेति । संख्यादिकंचद्वितियान्त पद इवेति न क्वापि व्यत्पत्त्यन्तरकल्पना । कर्तृत्वादिकंच सुबन्तरार्थवदेव क्रियापदार्थ इति न तत्रापि सा ॥ .... ....

नच कर्तृत्वादेराख्यातावगतस्य भावनायामन्वितत्वात् पुनर्बोधवैयर्थ्यं । चैत्रत्वावच्छिन्नवृत्तित्वेन तस्याख्यातेनानवगमात् सार्थक्योपपत्तेः ॥

नच तथापि आख्यातजन्यस्य सामान्यधर्मप्रकारकबोधस्य वैयर्थ्यं । तस्य प्रथमोत्पत्तिप्रयोजनकत्वात् । इतरथा तृतीयादापत्तेः । नहि कृत्याद्यभिधानमात्रं तत्प्रयोजकं । भावाख्यातेपि चैत्रेण सुप्यत इत्यादौ कृज्ञाविवरणेन कृत्यभिधानात्प्रथमापत्तेः, अतःकर्तृत्वाद्यभिधानमेव प्रथमाप्रयोजकं । तच्च शक्त्या लक्षणया वेत्यन्यदेतत् । तस्मादभिहितकारकत्वं प्रथमार्थः ॥

नच प्रासाद आस्ते पक्वं भुङ्क्ते इत्यादौ कृत्प्रत्ययेनाधिकरणत्वकर्मत्वयोरुक्तत्वात् प्रथमापत्तिः । तिङ्निपाताभिहितकर्तृत्वकर्मत्वयोरेव प्रथमार्थत्वात् । प्रासाद इत्यत्र सदि धातूत्तरघञा अधिकरणत्वाभिधानेपि सप्तम्यविरोधात् । पक्वमित्यत्र क्तप्रत्ययेन कर्मत्वाभिधानेपि द्वितीयाया अविरोधाच्च । तिङ्निपातोदाहरणानि पूर्वमेव प्रदर्शितानि । .... ....

नन्वेवं तिङ्निपाताभिहिते कारके प्रथमा, तदनभिहितेतु तृतीयादिरित्यर्थापत्तेः, तिङर्थान्वयिनि चैत्रादौ प्रथमोपपत्तावपि कर्त्रर्थकक्रुदुपात्तभावनान्वये विवक्षिते तृतीयापत्तेः, चैत्रेण पाचकोभुङ्क्त इति प्रयोगापत्तिः । नहि कृदुपात्तभावनायां कारकाणामनन्वयः । काष्ठै स्स्थाल्यामोदनस्य पाचकोन्नं भुङ्क्त इत्यादौ काष्ठादीनामन्वयदर्शनात् । अतश्च तद्वदेव कर्तृकारकस्यापि अन्वयोपपत्तेः, त

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रच तिङुपात्तक्रियान्वयविवक्षाभावेन प्रथमानुपपत्तेः, कृदुपात्तक्रियान्वयित्वेन विवक्षितस्य चैत्रस्य तिङाद्यनभिहितकर्तृत्वार्थका तृतीया दुर्वारा । एवं ओदनं पक्को भुज्यते चैत्रेणेत्यपि द्वितीयांतप्रयोगापत्तिः, कर्मत्वस्य पाकनिरूपितस्य तिङानुक्तत्वात् । शाब्दबोधश्च तत्र चैत्रकर्तृकपाकानुकूलकृत्याश्रयो भुङ्क्त इति, वाक्यद्वयं कर्तृत्वबोधश्च घटत्ववान् घट इतिवन्नानुपपन्नः । एवं ओदनः पक्को भुज्यत इत्यत्रापि शाब्दबोधो वाक्यद्वयं कर्मत्वबोधश्चानुसंधेय इति चेत् । अनभिहितइत्यस्य स्वान्वयिभिः कृदादिभिः अनभिहित इत्यर्थात्, अतश्च तत्र कृता कर्तृत्व-कर्मत्वयो रुक्तत्वान्नतृतीयाद्यापत्तिः, प्रथमायास्तु तदन्वयविवक्षायां निमित्तभावएव । ....

नचैवमपि तदन्वयविवक्षायां षष्ठ्यापत्तिः, अनभिहितइत्यधिकारस्य प्रथमाविधायकसूत्रेण विच्छेदात् । " कर्तृकर्मणोः कृति ,, इति कर्तृषष्ठीविधायकसूत्रेऽनुवृत्त्यभावादिति वाच्यम् , मण्डूकप्लुतिन्यायेन तत्रापि तदनुवृत्तेः सर्वसम्मतत्वात् । अन्यथा चैत्रः पक्त्वा भुङ्क्त इति वक्तव्ये चैत्रस्य पाचको भुङ्क्त इत्यपि प्रयोगापत्तेः । अतश्चैत्रः पाचक इति प्रथमान्तयोरुभयोरपि भुङ्क्त इति क्रियायामेवान्वयः, परस्परमभेदान्वयबोधस्तु पूर्ववत् । यत्रापि क्रियापदाश्रवणं तत्रापि " अस्तिर्भवन्ति ,, इत्यनेनाध्याहर्तव्यम् ।

नचैवं प्रथमायास्तिङ्निपातान्यतरसामानाधिकरण्यनिमित्तत्वे चैत्रःपचल् इतिस्थितिदशायांतिङोभावात् प्रथमानिमित्ताभावेन अप्रथमासमानाधिकरणपदत्वरूपस्य शतृशानचोर्निमित्तस्यसत्त्वात् "लटश्शतृशानचावप्रथमासमानाधिकरणे" ( ३-२-१२४ ) इत्यनेनविशेषविधिनाशतृशानचोरेव लटिप्राप्तयापत्तेः तिङादेर्लिङादिमात्रविषयत्वेनापि सामान्यविधिवशा दुपपत्तेः लटितिङोभावापत्तिरिति वाच्यम्, एतादृशार्थस्य लटिशतृशानज्विधानमात्रेणैव सिद्धेरप्रथमासमानाधिकरण इतिपदवैयर्थ्यापत्तेः, तत्परिहारार्थं प्रथमायालव्यपि ज्ञापकत्वेन सिद्धेः तस्याश्च प्रयोजकीभूत तिङादिसामानाधिकरण्यं विनानुपपत्तेः लटि तिङ्सिद्ध्युपपत्तेः । अतएव ज्ञापकेन भावितिङादिकंनिमित्तीकृत्य सर्वाएव विभक्तयो लटिभवन्तीति ज्ञाप्यते । तत्रच प्रथमाभिन्नविभक्तिसामानाधिकरण्ये शतृशानचोर्विधा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नेपि न तयोः पूर्वप्रमिततिङादिबाधकत्वं । एवंचाप्रथमासमानाधिकरण इत्यस्य पर्युदासत्वेपि लटितिङाद्युपपत्तिः । प्रसज्यप्रतिषेधत्वपक्षेतु सुतराम् । महाभाष्यकारीयालटितिङाद्यनुपपत्तिपरिहारास्तु दुरुपपादत्वादिहनलिखिताः । सर्वथा तिङ्निपातोभयाभिहितकर्तृत्व कर्मत्वयोः प्रथमेत्याह । * तयोश्च द्वितीयाद्यर्थवदेवाख्यातोपात्तभावनान्वय इति सिद्धम् । .... ....

नचैवमपि प्रथमार्थस्याख्यातार्थादावेवान्वयः, द्वितीयार्थादेस्तु कृदाद्यर्थेपीति कथं कार्यकारणभावैक्यमिति वाच्यम् , सुबर्थप्रकारकशाब्दत्वावच्छिन्नम् प्रति लिंगानन्वयिपदजन्योपस्थितेर्भावनाविशेष्यतासंबंधेन कारणत्वेपि प्रमाणान्तरजन्याभिहितत्वाद्युपस्थितिरूपकारणान्तरवशेन विशेषलाभोपपत्तेरितिदिक् । इतिभाट्टरहस्येप्रथमार्थविचारः ॥ ....

द्वितीयार्थस्तु " कर्मणिद्वितीया ,,(२-३-२) इतिसूत्रात् कर्मत्वम् । तदपि भावनायामेवान्वेति । अत्र विवदन्ते । तत्र नवीनतार्किकास्तावत् धात्वर्थानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वं । पच्यादिधात्वर्थोहि फलावच्छिन्नो व्यापारः, तदवच्छेदकीभूतफलस्य विक्लत्यादेः देवदत्तवृत्तिव्यापारानधिकरणीभूतौदनवृत्तित्वादोदनादेः कर्मत्वमिति लक्षणसमन्वयः । गमनफलस्य संयोगस्य ग्राम इव चैत्रेपि सत्त्वात् धात्वर्थानधिकरणत्वे सतीति, चैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात् । गमनजन्यपूर्वदेशविभागशालिनि पूर्वदेशेगमनानधिकरणत्वविशिष्टधात्वर्थजन्यफलशालित्वस्य सत्त्वादतिव्याप्तिः, एवं वृक्षात् भूमौ पर्णं पततीत्यत्र पतनक्रियाजन्यसंयोगविभागरूपफलाश्रययोर्भूमिवृक्षयोरतिव्याप्तिः, अतो धात्वर्थतावच्छेदकेति फलविशेषणं । एवंच गमेस्संयोगएव । त्यजेर्विभागएव । पततिस्पंदत्यादेः नैव किञ्चित्फलं धात्वर्थतावच्छेदकमिति नोक्तातिव्याप्तिः । फलपदंच क्रियाजन्यफलपरं । तेन धात्वर्थतावच्छेदकव्यापारत्वमादाय व्यापारे अधोदेशमादायाधोदेशावयवेच नातिव्याप्तिः । पततेरधोदेशसंयोगः फलं । अतएव नरकं पततीत्यपि प्रयोग इति केचित् ॥ .... .... ....

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु ग्रामं गमयति चैत्रो मैत्रमित्यत्र मैत्रे कर्मत्वलक्षणस्याव्याप्तिः। मैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। नच "सनाद्यंताधातवः" (३--१--३२) इति वचनात् णिजन्तस्य धातुसंज्ञत्वावगतेः णिजंतगमिधात्वर्थस्य गमनानुकूलव्यापारस्य मैत्रे अभावान्नाव्याप्तिः, तदर्थतावच्छेदकस्य गमनाख्यफलस्य मैत्रे सत्त्वेन विशेष्य दळस्यापि सत्त्वादितिवाच्यम्। तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः। नचणिजंतस्य धातुत्वेपि गमेरपि धातुत्वानपायात् ग्रामस्य तत्कर्मत्वोपपत्तिः। तथात्वे पाचयति चैत्रो मैत्रेणेत्यत्रापि मैत्रस्य कर्मत्वापत्तेः। नचेष्टापत्तिः, द्वितीयांतत्वापत्तेः। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणौ" (१-४-५२) इत्यनेन सूत्रेण गत्यादीनां धातूनामण्यंतानां यः कर्ता स ण्यंतानां कर्मेत्यर्थकेन गत्यादिभिन्नधातुयोगे कर्मसंज्ञानिषेधेन तत्रापीष्टापत्तेः कर्तुमशक्यत्वात्। "हृक्रोरन्यतरस्याम्" (२-४-५३) इति सूत्रेण हारयति कारयति धातुयोगे विकल्पेन कर्मसंज्ञाविधानात् हारयति कारयति कटं भृत्यो हारयति कारयति कटं भृत्यमिति प्रयोगद्वयावगतेः, तत्र भृत्ये धात्वर्थतावच्छेदकीभूतप्रयोज्यव्यापाररूपफलाश्रयत्वस्य सर्वदा सत्त्वेन कर्मत्वतदभावयोर्वक्तुमशक्यत्वात्। .... ....

एतेन स्वप्रकृत्यर्थभिन्नसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यप्यपास्तं, पाचयति चैत्रो मैत्रेणेत्यादावतिव्याप्तेरितिचेत्. तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदान्। इतरथा उभयकर्मजसंयोगस्थले चैत्रस्य स्वभिन्न मैत्रसमवेतकर्मजन्यसंयोगाश्रयत्वाच्चैत्रो मैत्रं गच्छतीत्यत्र चैत्रस्य कर्मत्वापत्तेः। अन्यथा मैत्रस्यापिक्रियासमानाधिकरणफलाश्रयत्वात् कर्मत्वानापत्तेः। अतस्तत्क्रियांतर्भावेनैवलक्षणं निर्वाच्यम्, तथात्वे चैत्रनिष्ठक्रियायाः परसमवेतत्वाभावादेव तत्र नातिव्याप्तिः। ततश्च यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालिसत् यद्यत्क्रियानधिकरणं तत्तत्क्रियाकर्मेति विशिष्यैव कर्मत्वनिरुक्तिः। परसमवेत यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि यत् तत्तत्क्रियाकर्म इतिवा निरुक्तिः. पच्यादिक्रियामादायैव लक्षणसमन्वयः स्पष्ट

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एव, चैत्रो मैत्रं गच्छति मैत्रश्चैत्र मित्यत्र तत्तत्कर्तृनिष्ठक्रियामादाय, गमयतीत्यादौच गमिक्रियामादाय ग्रामस्य, तदनुकूलव्यापाररूपणिजर्थमादाय मैत्रस्य कर्मत्वं निर्वाच्यम् । घटं भावयतीत्यादौ तु णिजर्थमादायैव, भूधातो रकर्मकत्वात् । पाचयतीत्यादौच पच्यर्थमादायैव ओदनस्य, नत्वनुकूलव्यापारमादायमैत्रस्य, उक्तसूत्रानुरोधात् । अतएव तत्राणिजर्थोकर्मकएव ॥

अथवा तस्यापि ओदनएव कर्म; विक्लित्यनुकूलत्वाविशेषात् , एवंच हारयति कारयति निरूपित कर्मत्वनिरुक्तौ तृतीयान्तपदानभिधेयत्वमपि देयं, तेन हरणादिकर्तुः पाक्षिककर्मत्वाविघातः. एवं गमि पतत्यादौ विवक्षा. सप्तम्यन्तपदाभिधेयत्वं वादेयं, तेन ग्रामेगच्छति नरकेपततीत्यादिप्रयोगस्याप्युपपत्तिः ॥

नचैवं तत्तत्कर्मत्वानां भेदात् द्वितीयायाश्शक्तिग्रहानुपपत्तिः, लाघवेन वृत्तित्वे अभावेच द्वितीयायाश्शक्तेः. पदार्थान्तराणामन्यलभ्यत्वेन तत्र शक्तिकल्पनायां गौरवात् . तथाहि - ग्रामं गच्छतीत्यत्र द्वितीयार्थोवृत्तित्वं धात्वर्थतावच्छेदके संयोगेन्वेति . तज्जनकं गमनं धात्वर्थएव . एवं द्वितीयार्थोभावोपि प्रतियोगितासंबन्धेन धात्वर्थ एव . ग्रामादिश्च प्रकृत्यर्थो द्विविधेपि द्वितीयार्थे . एवञ्च ग्रामनिष्ठाभावप्रतियोगि ग्रामवृत्तिसंयोगजनकगमनानुकूलकृतिमानित्यादिश्शाब्दबोधः . .... ....

यदितु गमनात्यन्ताभावोपि चैत्रेकालिकाव्याप्यवृत्तित्वादाशंक्येत, तदा परसमवेतेत्याद्यन्योन्याभावघटितलक्षणमादाय भेदोद्वितीयार्थः, सच प्रतियोगिता समवायोभयघटितसामानाधिकरण्यसंबन्धेन गमनान्वयी . ततश्च ग्रामनिष्ठभेदप्रतियोगि समवेत ग्रामवृत्तिसंयोगजनकगमनवानित्यादिशाब्दबोधः ॥

वस्तुतस्तु भेदाव्याप्यवृत्तित्वमते चैत्रे गमनत्व द्वेदस्य तुल्यत्वात्तद्वारणाय प्रकृत्यर्थो ग्रामो भेदे प्रतियोगितासंबंधेनान्वेति । भेदश्चाभावीयविशेषगतासमवायोभयघटितसामानाधिकरण्यसंबन्धेन गमनेन्वेति . ततश्च ग्राम

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतियोगिकभेदवत्समवेतग्रामवृत्तीत्यादि शाब्दबोधः । अतएवाधेयत्वापरपर्यायवृत्तित्वार्थकसप्तमीतो वृत्तित्वार्थकद्वितीयाया भेदः । भेदाद्यर्थस्याधिकत्वात् । अयंचापरोविशेषः- यद्द्वितीयार्थोवृत्तित्वं धात्वर्थतावच्छेदके फलएवान्वेति, सप्तम्यर्थस्तु वृत्तित्वं धात्वर्थे नामार्थेवेति । एवं ग्रामस्य गन्तेत्यादौ कर्मणिषष्ठीस्थलेपि बोध्यम्। एवञ्च चैत्रेण ग्रामो गम्यते इत्यात्मनेपदेन फलं भेदश्चाभिधीयते । तत्र प्रथमान्तपदोपस्थाप्यो ग्रामः प्रतियोगिताकत्वसंसर्गेण भेदान्वयी । सच धात्वर्थगमने सामानाधिकरण्यसंबन्धेन । सच धात्वर्थोगमनं पुनरात्मनेपदार्थे फलेजन्यत्वसंबन्धेन । तच्चाश्रयत्वेन नामार्थे ग्रामे । ततश्चचैत्रकर्तृकग्रामभिन्नसमवेतसंयोगजनकगमनजन्यसंयोगाश्रयो ग्राम इत्येव शाब्दबोधः। एवं पक्व ओदनइत्यत्र कर्मक्तप्रत्ययस्थलेपि । तत्र त्वयंविशेषः, क्तदर्थः प्रतियोगिभेदः वृत्तित्वं आश्रयश्च; ओदनो भेदेन प्रतियोगिनि, सच भेदे, सचक्रियायां, साचफलद्वारावृत्तित्वे, तच्चाश्रये, सचाभेदेनौदनइति. अनुभवानुसारेण व्युत्पत्तिवैचित्र्यस्यादोषत्वात् । .... ....

नन्वेवं भेदेप्रतियोगिनः प्रतियोगितामात्रेणवान्वयः, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेनवा। नाद्यः-वैशिष्टयव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य चैत्रेपि सत्त्वेन स्वं गच्छति चैत्र इतिप्रयोगापत्तेः । अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभंगापत्तेश्च । नान्त्यः - जलंगच्छति जलमित्यत्र जलत्वावच्छिन्नप्रतियोगिताकभेदस्य जलेऽभावादिति चेत् । धात्वर्थतावच्छेदकफलाश्रयत्वम् यद्व्यक्तेः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेन प्रतियोग्यन्वयस्य वाच्यत्वात् । एवंच व्युत्पत्तिभङ्गभिया जलपदं जलविशेषे लाक्षणिकम् । तत्सिद्धं वृत्तित्वं भेदश्च द्वितीयार्थ इति ॥ .... ....

नचैवं तृतीयान्तपदानभिधेयत्वादेरपि वाच्यत्वापत्तिः, तस्यान्यलभ्यत्वे न वाच्यत्वे गौरवात् । कारयति कटं मैत्र मित्यादि प्रयोगस्येष्टत्वेन वाच्यतया प्रवेशे प्रयोजनविरहात् । भेदस्यावाच्यत्वे स्वं गच्छतीति प्रयोगापत्तिर्बाधिका , नत्वत्र तथा किंचिद्बाधकम् । अतो न तस्य वाच्यत्वमिति दिक् । एवंच यत्र एतादृशकर्मत्व बाधः, तत्र घटं जानाति मैत्र इच्छति

८

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुरुते घटस्य ज्ञातेत्यादौ सविषयपदार्थाभिधायिधातुयोगेद्वितीयाषष्ठयोर्विषयत्वे लक्षणा । घटविषयकज्ञानाश्रयो मैत्र इति शाब्दबोधः । मैत्रेण ज्ञायते इत्यादौतु कर्मप्रत्ययेन विषयत्वम् लक्ष्यते । मैत्राश्रितज्ञानविषयो घट इतिच बोधः । ज्ञातो घट इत्यादिकर्मक्तस्तु विषये लक्षणा, तस्यच घटे अभेदान्वय इति द्रष्टव्यम् । नष्ट इत्यादौ प्रतियोगिनि, नत्वत्र परसमवेतत्वप्रवेशः, वैयर्थ्यात् । स्वात्मानं जानामि "आत्मानमात्मनावेत्सी" त्यादिप्रयोगाच्च । एवं अकथितकर्मादौ कर्मप्रवचनीययोगनिमित्तकद्वितीयायांच लक्षणैवेत्याहुः । .... .... ....

अत्रेदमवधेयं । यदि फलावच्छिन्नो व्यापारो धात्वर्थः, तदा द्वितीयाद्यर्थवृत्तित्वस्य पदार्थैकदेशे संयोगादौ फलेन्वयादेकदेशान्वयनिबन्धनो व्युत्पत्तिभंगः । नच चैत्रस्य नप्ता चैत्रादन्य इत्यादावपि तदाश्रयणम्, षष्ठ्यर्थस्य परंपरासंबन्धस्य विशेष्य एवान्वयोपपत्तेः, पञ्चम्यर्थस्यापि प्रतियोगित्वादेः परंपरासंबन्धेनांगीकाराच्च । किञ्च किमिदं फलस्यावच्छेदकत्वं, नतावत्तत्तद्धातुशक्यतावच्छेदकत्वं, विशिष्टशक्तौ प्रमाणाभावात् । चैत्रो ग्रामं गमयति मैत्रमित्यादिणिजर्थरूपधात्वर्थस्यावच्छेदकीभूते गमनरूपे फलेऽव्याप्तेः ।

अथ फले पृथगेव धातोश्शक्तिः, तस्यच व्यापारे प्रकारत्वमेवावच्छेदकत्वमिति चेत्, तृतीयाद्यर्थकरणत्वादौ पाचयतीत्यत्र णिजर्थविशेषणीभूतपाके चातिव्याप्तेः । अतः स्वरूपसंबन्धात्मकमवच्छेदकत्वं पदार्थान्तरमेव कल्प्यम्, तच्च धर्मिग्राहकप्रमाणेन यदाश्रये द्वितीयाप्रामाणिकी तत्रैव कल्प्यते नान्यत्रेतिवाच्यम् । नच तत्र शाब्दव्यवहारातिरिक्तंकिञ्चित्प्रमाणमस्ति । तद्वदेव वक्ष्यमाणविधया कर्मत्वादिकारकाणां अखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्तेः नाश्रयत्वादेरनेकव्युत्पत्तिकल्पनापादिका वाच्यत्वकल्पनायुक्ता समाश्रयितुम् । तथाहि – द्वितीयायास्तावद्वृत्तित्वे भेदेच शक्तिरित्यनेकशक्तिकल्पना, धातोश्च फलावच्छिन्नव्यापारे एका फले व्यापारेच नानाशक्तिरितिकल्पना । अस्मन्मतेतु पूर्वोक्तविधया तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्वगमनत्वादिकमेव तत्तद्धातुशक्यतावच्छेदकमिति नानेकशक्तिकल्पना । पुनश्च भवन्मते फलस्य त

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वेन बोधे पूर्वदेशविभागस्यापि क्रियाजन्यत्वाविशेषात् पूर्वदेशं गच्छतीति प्रयोगापत्तिः । संयोगत्वादिना बोधे वृक्षस्थितस्यैव सर्पस्य मूलदेशादग्रदेशं गच्छतो वृक्षं गच्छतीति प्रयोगापत्तिः, तत्तदवयवसंयोगनाशेनावयविसंयोगानां नाशात् । तया क्रियया जनिताग्रसंयोगेनाभिनवस्यैवावयविसंयोगस्य उत्पत्तेः । नह्यवयविसंयोगो नधात्वर्थतावच्छेदकः, ग्रामं गच्छतीति प्रयोगानापत्तेः । अतस्तदुत्तरदेशसंयोगस्यैव फलत्वं वाच्यम् । उत्तरत्वञ्च तत्तत्क्रियापूर्वदेशघटितमिति अनन्तशक्तिकल्पना, लक्षणावा । नच तत्तत्फलानुभवबलादेवसानदोषः, अनुभवस्यानुमानादिनापिसम्भवेनशाब्दत्वएवविप्रतिपत्तौ धातुजन्यत्वेसुतरांप्रमाणाभावात् । इतरथाफलस्यधातुवाच्यत्वं द्वितीयावाच्यत्वंवेतिनानापक्षप्रतिपादनानुपपत्तेः । नहि घटमानयेत्यत्र घटो धातुवाच्यः, नामपदवाच्योवेति पक्षान् कश्चित्प्रतिपादयति । अतएव गमनत्वादिनैव क्रियाया धातुतोनुभवाद्वस्तुतस्तत्फलावच्छिन्नक्रियावृत्तिगमनादिकमेव तत्तद्धातुशक्यतावच्छेदकमित्युक्तं प्राक् । तदेवं भवन्मते शक्त्यानन्त्यं तावत्स्फुटमेव । व्युत्पत्त्यानन्त्यमपि - ग्रामं गच्छतीत्यत्र तावत्प्रातिपदिकार्थस्य ग्रामस्य तत्तत्संसर्गभेदेन वृत्तित्वेभेदेचान्वयाद्व्युत्पत्तिद्वयं, पुनश्चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभंगः, तद्भंगायवा ग्रामप्रातिपदिकेन ग्रामविशेषलक्षणेति दोषः, द्वितीयार्थस्यच भेदस्य निरुक्तसामानाधिकरण्यसंबन्धेन क्रियायां वृत्तित्वस्यच साक्षात्संबन्धेन फलइति व्युत्पत्तिद्वयं । स्वं गच्छतीति प्रयोगवारणार्थं भेदोवा द्वितीयार्थः समवायोवा, ग्रामस्यच तस्मिन्समवाये स्वप्रतियोगिकभेदवद्वृत्तित्वं संसर्गः । समवायस्यच साक्षात्संबन्धेन क्रियायामन्वय इत्यस्यापि सुवचत्वेन विनिगमनाविरहश्च ॥ .... .... ....

एतेन फलं भेदश्च द्वितीयार्थः, आधेयत्वं फले प्रकृत्यर्थसंसर्गः । फलस्यच जनकत्वेनावच्छेद्यत्वेनवा व्यापारेन्वयः । व्यापारमात्रं धात्वर्थः । तत्तद्धातुसमभिव्याहाराच्च द्वितीयायाः फलविशेषबोधकत्वमित्यप्यपास्तम् -- अनेकशक्तिकल्पनादेः तदवस्थत्वात् । एवं ग्रामस्य गंतेत्यादिकर्मणिषष्ठीस्थले शक्त्यनेकत्वं व्युत्पत्त्यनेकत्वं विनिगमनाविरहश्चेति बोध्यम् । ग्रामो गम्यत इ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ति कर्माख्यातेचात्मनेपदस्य फलेभेदेच शक्त्यन्तरकल्पनात् , ग्रामस्यप्रथमान्तप दोपस्थाप्यस्यापि आख्यातार्थे भेदेन्वयकल्पनं, तस्य भेदस्य प्रत्ययार्थस्यापि धात्वर्थव्यापारेऽन्वयकल्पनं, तस्यच व्यापारस्य धातूपस्थापितफलं प्रति विशे ष्यभूतस्यापि पुनर्जन्यत्वसंबंधेनात्मनेपदार्थे फलेन्वयकल्पनं, तस्य फलस्य चाश्रयतासंबंधेन प्रथमान्तपदोपस्थाप्ये ग्रामेन्वयकल्पनमिति दोषाः । किंच ग्रामपदस्यात्मनेपदस्यच नतावद्युगपदेव कारकतया विशेष्यतयाच बोध- जनकत्वं , विरोधात् । विशेषणतावच्छेदकप्रकारकविशेषणनिश्चयस्यानुद येन विशिष्टवैशिष्ट्यबोधात्मकस्यानुभूयमानस्यापलापापत्तेश्च । नापि क्रमिक बोधद्वयजनकत्वं, जनितान्वयबोधेनैराकांक्ष्यात् । एकतरशाब्दबोधवेळायामित रशाब्दबोधानुत्पत्तौ प्रतिबन्धकान्तरकल्पनापत्तेश्च । एवं पक्व ओदन इत्यत्र क र्मकर्तृस्थलेपि द्रष्टव्यम् ॥

यत्तु भेदो नद्वितीयार्थः अपितु आधेयत्वादिकमेव। नचैवं चैत्रश्चैत्रंगच्छतीति प्रयोगापात्तिः, "आकडारादेकासंज्ञा,, ( १-४-१ ) इतिसूत्रेण एकसंज्ञाप्रयुक्तकार्य सत्त्वे संज्ञान्तरप्रयुक्तकार्यनिषेधात् । प्रकृतेच परत्वात्कर्तृसंज्ञाप्रयुक्तकार्यस्यावश्यक त्वेन कर्मसंज्ञाप्रयुक्तद्वितीयाद्यनापत्तेः । अतो नतत्प्रयुक्तशक्त्यन्तरकल्पनाद्या पत्तिरिति, तन्न - त्वं जानासि चैत्रोहं स्वात्मानं जानामि " आत्मानमात्म- नावेत्सि " इत्यादावेकसंज्ञावरोधेपि संज्ञान्तरप्रयुक्तकार्यदर्शनात् । नच शरीर मनोरूपावच्छेदकभेदमादाय तत्रासांकर्योपपादनं, तथात्वे स्वपदप्रयोगा- नुपपत्तेः । चैत्रश्चैत्रं गच्छतीति प्रयोगेपि शरीरप्रदेशांतरावच्छिन्नात्मादि भेदकल्पनोपपत्तेश्च । इतरथा चैत्रो मैत्रं गच्छतीति प्रयोगस्याप्यनापत्तेः . वस्तुतः फलाश्रयत्वसत्त्वे चैत्रेपि द्वितीयाप्रसक्तौ सूत्रवशेनापि संज्ञां तरप्रयुक्तकार्योपस्थितेः तत्प्रतिबंधकत्वकल्पने तत्रापि गौरवस्य सत्त्वाच्च । सम- त्वखण्डोपाधिरूपस्य कर्मत्वस्य परसमवेतक्रियाजन्यफलशालित्वसमनियतस्यैव क- ल्पनात् ,चैत्रे तस्याप्रसक्तत्वादेव नप्रतिबध्यप्रतिबंधकभावकल्पनेति विशेषः। अत उक्तयुक्त्या लाघवात् कर्मत्वमखण्डोपाधिरूपमेव द्वितीयार्थः । तच्च उक्त- कर्मत्वलक्षणसमनियतमेव; तत्रैव गोकर्मकमानयनं, ओदनकर्मकः पाकः,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ग्रामकर्मकं गमनमिति व्यवहारात् । तच्च धर्मिग्राहकप्रमाणेन ससम्बंधिकमेव कल्प्यत इति तस्य तत्तद्धात्वर्थनिरूपितत्वसिद्धिः । तत्तद्धात्वर्थस्तु तत्तत्फलावच्छिन्न व्यापारविशेषत्व समनियताखण्डोपाधिरूप पाकत्व गमनत्व रूप शक्यतावच्छेदकधर्मावच्छिन्नोव्यापारविशेष इत्युक्तमेव । तत्तद्धात्वर्थनिरूपिततत्तत्कर्मत्वानां भेदेपि च भवन्मते आधेयत्वत्वस्येव कर्मत्वत्वस्याप्यखण्डस्य स्वीकारात्तस्यैकस्य शक्यतावच्छेदकत्वेन नानेकशक्तिकल्पना । निरूपकीभूतधात्वर्थतावच्छेदकावच्छिन्नगमनाद्यन्वयवशाच्च चैत्रस्य घट इति वत् कर्मत्वविशेषलाभः । अतश्च चैत्र श्चैत्रंगच्छति चैत्रो वाचयति मैत्रमित्यादिप्रयोगापत्तिशंकैव दुर्लभा । ग्रामे गच्छति कारयति चैत्रो मैत्रेणेत्यादौतु कर्मत्वाविवक्षायां अधिकरणत्वादिविवक्षया सप्तम्यादिप्रयोगोप्यविरुद्धः । एवंच द्वितीयायामेकैवशक्तिः । प्रातिपदिकार्थस्यच तृतीयादिसाधारण्येन सुबर्थकर्मत्वादावन्वयादेकैवव्युत्पत्तिः । तस्यच उद्देश्यत्वेनवा स्वनिरूपकधात्वर्थजनकत्वेनैववाख्यातार्थकृतौ अन्वयादपरेति लाघवम् । एवं कर्मणिषष्ठीस्थलेपि । कर्माख्यातस्थलेतु पूर्वोक्तरीत्याख्यातेन कर्मत्वलक्षणायामपि प्रथमार्थस्य पूर्वोक्तविधया प्रातिपदिकार्थस्य स्ववृत्तिकर्मत्वनिरूपकधात्वर्थजनकत्वसंसर्गेण कृतावन्वयः । कर्मत्वस्यप्रथमार्थत्वेतु स्वनिरूपकधात्वर्थजनकत्वसंसर्गेणैव । कर्मकृत्स्थलेतु पक्व ओदन इत्यादौ पाकस्य कृत्प्रत्ययलक्ष्यायां कृतौ, तस्याश्च निरूप्यत्वसंसर्गेण तल्लक्ष्यएव कर्मत्वे , तस्यचाधारत्वसंबंधेन कृत्प्रत्ययार्थे कर्मणि , तस्यचास्तीत्याख्यातार्थे इति वक्ष्यते । कर्मकृत्स्वपि पाककर्मी कृत इति विवरणानुरोधेन कारकान्वयानुरोधेनच कृतिलक्षणाया वक्ष्यमाणत्वात्व । अतश्च लाघवात् द्वितीयार्थकर्मत्वस्योक्तसंबंधेन कृतावेवान्वय इति सिद्धम् ॥

नच द्वितीयार्थकर्मत्वस्य निरूपकतासंबन्धेन धात्वर्थएवान्वयोस्त्विति वाच्यम् । धात्वर्थस्यापि कारकत्वेन भावनान्वयस्य उपपादितत्वात् , तत्साधारण्येन कारकत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबंधेन लिंगानन्वयिपदजन्योपस्थितिः कारणमित्येकेनैवकार्यकारणभावेन कर्मत्वादीनामपि अन्वयोपपत्तौ तदनेकत्वे गौरवात् । धात्वर्थान्वयार्थमुपस्थितस्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावनाविशेष्यत्वस्यैव कर्मत्ववृत्तिप्रकारतानिरूपकत्वकल्पनोपपत्तौ अनुपस्थितस्य धात्वर्थविशेष्यत्वस्य तत्कल्पनानुपपत्तेश्च । काष्ठैरोदनं पचतीत्यस्यकाष्ठैः पाकैरोदनं करोतीति विवरणात् विवरणवाक्येच काष्ठादीनां कृञर्थेन्वयावश्यकत्वेन पचतीत्यत्रापि तत्रैवान्वयप्रतीतेश्च । तत्सिद्धं कर्मत्वाद्यखण्डमेव द्वितीयार्थो भावनान्वयीति ॥ .... .... .... ....

यत्तु न कर्मत्वं आश्रयत्वंवा द्वितीयार्थः, तथात्वे आश्रयत्वादेर्गुरुभूतस्य शक्यतावच्छेदकत्वापत्तेः, कर्मत्वादिरूपाखण्डोपाधिसत्वे प्रमाणाभावाच्च । अपित्वाश्रयस्यैव द्वितीयार्थत्वं, तस्यच धातूपात्ते फलेन्वयः । एवं करणादिरेव तृतीयाद्यर्थः । एवञ्च- " कर्तृकरणयोस्तृतीया " ( २-३-१८ ) " कर्मणिद्वितीया " ( २ - ३ - २ ) इत्याद्यनुशासनमपि संगच्छत इति कैश्चिदुक्तम् . तन्न — संबन्धवाचिषष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थे संबन्धेभेदेनान्वयांगीकारादिहापि व्युत्पत्त्यन्तरकल्पनागौरवपरिहारार्थं भेदसंबन्धबोधाय कर्मत्वादावेव द्वितीयादेश्शक्तिकल्पनात् ॥ .... ....

नचैवं " ऐन्द्रं दधी ,, त्यादौ तद्धितस्य देवताविशिष्टद्रव्यवाचिनोर्थेदेवतायां इन्द्रप्रातिपदिकार्थस्येन्द्रस्याभेदेनाप्यन्वयदर्शनात् - व्युत्पत्त्यन्तरस्याप्यावश्यकत्वं ; तद्धितस्यापि देवतात्वविशिष्टद्रव्य एव शक्त्यंगीकारेण तत्रापीन्द्रस्या धेयतासंबन्धेनैवान्वयांगीकारात् । ....

नचैवं पञ्चम्यादौ सर्वत्र लाघवात् धर्मिण्येव शक्तिकल्पनाद् भेदान्वयेनैव सर्वत्र प्रकृत्यर्थप्रकारतास्त्विति वाच्यम् , तथात्वे ग्रामाभिन्नो यआश्रयत्ववान् तदाधेयसंयोगजनकंगमनमित्यादि शाब्दबोधापत्तेः, आश्रयत्वादिकं किन्निरूपितमिति जिज्ञासाया अपरिहार्यत्वात् । अतो न धर्मीद्वितीयार्थः, अपितु आधेयत्वं, कर्मत्वमेववाखण्डम् । उभयथापि फलस्य व्यापारस्यैववानिरूपकस्यशाब्दबोध एवलब्धत्वान्ननिरूपकजिज्ञासापत्तिः . कर्मत्वस्यापि चाखण्डस्यैकस्यैव शक्यतावच्छेदकत्वाङ्गीकारान्नगौरवम् . आश्रयत्वमेवच तत्तन्निरूपकभेदेन भिन्नमिति तत्रैव गौरवमिति दिक् । अतएव " समर्थःपदविधिः " ( २ - १ - १ ) इतिसूत्रे " क्रियाकारकयोः सुबर्थस्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्वितीयावाचिका भवति,, इति महाभाष्यं संगच्छते । एवंविधकर्मत्वबोधेतु सविषयकधातुसमभिव्याहारे तार्किकरीत्यैव विषयत्वादिकं द्वितीयादिना लक्षयित्वाऽऽख्यातेन चाश्रयत्वं लक्षयित्वा घटविषयकज्ञानाश्रयत्वं चैत्रीयमिति चैत्रो जानाति घटमित्यत्र शाब्दबोधः. एवं कर्मषष्ठीकर्माख्यातकर्मकृत्स्वपिबोध्यम् . नन्विह परसमवेतत्वस्यावश्यकता, अतएव स्वात्मानं जानामीत्यादिप्रयोगः . न ह्यत्र मुख्यं कर्मत्वमस्ति, क्रियाजन्यफलाभावात् . अपितु विषयित्वे लक्षणा, सा पि नानुशासनिकी . येन तदर्थमपि कर्मसंज्ञा प्रसज्येत . अपितुगंगायांघोष इतिवत् सांप्रदायिकी . अतश्च कर्मत्वाभावेन कर्मसंज्ञाया अभावात् न — " आकडारादेकासंज्ञा " ( १ - ४ - १ ) इत्यस्यबाधः ॥

ननु विभक्तौ लोके न लक्षणा, " सुपां कर्मादयोप्यर्थाः संख्याश्चैव तथा तिङाम् । प्रसिद्धोनियमस्तत्र नियमः प्रकृतेषु च ॥ " इति कात्यायनवार्तिकविरोधात् . अत्रहि सुपां तिङाञ्च कर्मत्वादि संख्याचैकत्वादिका येन शास्त्रेणार्थइति प्रतिपाद्यते तत्रार्थनियमः प्रसिद्धः इति तृतीयचरणस्यार्थः । सच - एकत्वे एकवचनमेव, कर्मणि द्वितीयैवेत्याकारकः । चतुर्थचरणेतु प्रकृत्यर्थापेक्षया प्रत्ययनियमः । सच - कर्मण्येव द्वितीया, एकत्वएव एकवचनमित्याकारकः . उभयथापि विभक्तेरर्थान्तरे वारणान्नविभक्तौ लक्षणा . अतएव "छन्दसि सुपां सुपोभवन्ती,,ति लक्षणाप्रतिप्रसवरूपं व्यत्ययानुशासनं छन्दस्युपपद्यते . इतरथा लोकवदेव वेदेपि तदुपपत्तेः व्यत्ययानुशासनवैय्यर्थ्यापत्तिः. एवं "कर्मणि षष्ठी,, त्यादि लक्षणानुशासनस्यापि वैय्यर्थ्यम् , शक्यसंबन्धावगमस्य प्रमाणान्तरेणैव सिद्धेः. अतो न लोके विभक्तौ अनुशासनं विना क्वापि लक्षणेतिचेन्न - प्रातिपदिकादिष्विव विभक्तावपि लक्षणायां बाधकाभावात् , उक्तवार्तिकस्य लक्षणायामप्यविरोधात् । तथाहि—अर्थनियमपक्षे तावत् कर्मणिद्वितीयैव नतु तृतीयादिविभक्त्यन्तरमिति सजातीयशब्दान्तरव्यावृत्तावपि द्वितीयाया अर्थान्तरे निवारणाभावस्य महाभाष्येस्पष्टत्वात् , इतरथा निरसंख्येभ्योऽव्ययेभ्योपि सुपामनापत्तेः . एवञ्च करणत्वादौ तृतीयैवेत्यस्यापि नियमात् विभक्त्यन्तरार्थे विभक्त्यन्तरस्य परं नलोके लक्षणा, नतु विषयत्वादावपि . प्रत्ययनियमपक्षेपि प्रकृतकर्मत्वैकत्वादिरूपसुप्तिङ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थापेक्षयैव तन्नियमकरणात्, अप्रकृतविषयत्वादिलक्षणायां न कोपिदोषः. स्पष्टंचेदमपि तत्रैव. अतएव जानातीत्यादि तिङोप्याश्रयत्वादौ लक्षणेत्युक्तं प्राक्. एवं च छन्दसिव्यत्ययानुशासनमपि प्रकृतविभक्त्यन्तरार्थविषये प्रतिप्रसवरूपतया नासङ्गतम्. कर्मणिषष्ठीत्यादिकंच लोकवेदसाधारण्येन॥

नचैवं लोके अक्षीणि मे प्रदर्शनीयानि पादा मे सुकुमारा, इत्यादि महाभाष्योदाहृतप्रयोगेषु लोके प्रतिप्रसवाभावात् प्रकृतद्वित्वेबहुवचनस्य प्रयोगानुपपत्तिः । तत्र अक्षित्वादिजातिविवक्षायां "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्"(१-२-५८)इतिवचनेन प्रतिप्रसवात्। अतस्सिद्धं विभक्त्यंतरार्थभिन्ने विषयत्वादौ युक्तैव लक्षणेति । यदातु 'सामान्यापेक्षएव प्रत्ययनियम, इति महाभाष्यकारीयं व्याख्यानांतरमभ्युपगम्यते , तदा कात्यायनीयं नियमद्वयमपीदं शक्तिनियामकं निरूढलक्षणा नियामकंच । तस्याश्शक्तितुल्यत्वात् । तथाच प्रकृतेऽप्रकृतेवार्थेनुशासनं विना न शक्ति र्निरूढलक्षणावा, सांप्रतिक लक्षणायास्तु नक्वापि प्रकृते अप्रकृतेवा निषेधः ॥

नचैवमव्ययेभ्योपि संख्याभिन्नेर्थे सांप्रतिकलक्षणया सुबुत्पत्तेः "अव्ययादाप्सुपः" (२-४-८२) इति ज्ञापकबलात् अव्ययेषु सुबुत्पत्तिपक्षो महाभाष्यकारीयो न संगच्छत इति वाच्यम् । तस्यलाक्षणिकार्था विवक्षायामपि शब्दसाधुत्वार्थमपि सुबुत्पत्तिरित्येवं ज्ञापनार्थत्वात् ॥ ....

नचैवं छन्दसिव्यत्ययानुशासनवैयर्थ्यं,तस्यनिरूढलक्षणात्वज्ञापनार्थत्वात्। निषिद्धत्वप्रतिप्रसवार्थत्वाच्च । तथाहि—सांप्रतिकीलक्षणाक्वचिन्नैभवति, अतएव भट्टवार्तिके- यत्रार्थे लाक्षणिकेर्थे प्रयोगानुपपत्तिस्फुरणं विनाप्यर्थस्मरणं; तत्र निरूढलक्षणा,यत्र तत्स्फुरणपूर्वकं काव्याद्याधुनिकप्रयोगः; तत्र सांप्रतिकी लक्षणेति लक्षणाभेदमुपपाद्य 'काश्चिन्नैवा प्रयोगत, इत्यनेन प्रयोगाभावेन लक्षणेत्युक्तं । उदाहृतंच- रूपंवस्त्रमिति, इतरथामत्वर्थलक्षणया प्रयोगः केन वार्येत. अत एव एनां निषिद्धलक्षणेत्याचक्षते. तस्याश्च वेदेपि प्रसक्तौ प्रतिप्रसवार्थं व्यत्ययानुशासनमिति. सर्वथा सिद्धं घटं जानामीत्यादौ विषयित्वे लक्षणेति॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वस्तुतस्तु नात्र लक्षणा, मुख्यकर्मत्वस्यैवोपपत्तेः. तथाहि — ज्ञातो-घट इत्यादिप्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामविषयता फलं, तच्छालित्वंच घट इति मुख्यकर्मत्वोपपत्तिः ॥ .... ....

नच भावकार्यस्य समवायिकारणजन्यत्वनियमात् भूतभाविस्थलेच तदभावात् फलाभावः, ध्वंसस्य प्रामाणिकत्वे भावत्वस्य व्याप्यतावच्छेदककोटिप्रवेशवत् विषयताया अपि प्रामाणिकत्वे लघुना समवेतत्वेनैव कार्यत्वस्य विशेषणात् । अतश्च ध्वंसवदेव विषयताया अपि निमित्तकारणमात्रजन्यत्वमेवेत्यन्यत्रविस्तरः । एवंच परसमवेतत्वसिद्ध्यर्थं स्वं जानातीत्यादौ शरीरमनोभेदकल्पनात् "आकडारादेकासंज्ञा" इत्यस्याप्युपपत्तिः । ....

अथवा परसमवेतत्वादिघटितलक्षणसमनियताखंडोपाधिरूपकर्मत्वे शक्तिः, तद्बाधात्तु स्वंजानातीत्यादौ धात्वर्थतावच्छेदकफलशालित्वमात्रे विषयित्वमात्रेवा लक्षणेति न विरोधः । चैत्रः स्वं गच्छतीत्यादौतु न लक्षणयापि प्रयोगः, अप्रयोगेण निषिद्धलक्षणात्वादिति ध्येयं । तत्सिद्धं "कर्मणिद्वितीये,, तिसूत्रात् कर्मत्वमखंडोपाधिरूपं द्वितीयार्थः आख्यातार्थान्वयीति । उक्तञ्च तन्त्रवार्तिके- " विभक्तयोहि कारकशक्तिं निष्कृष्याभिधायक्रियां विशिषन्ति" इति । न्यायसुधाकारस्तु- "कर्तुरीप्सिततमंकर्म,, तिसूत्रादीप्सितकर्मत्वमेव द्वितायार्थः । "तथायुक्तंचानीप्सितम्,, ( १ -- ४ -- ५० ) इतिसूत्रात् अनीप्सितत्वे निरूढलक्षणेत्याह । तन्न -- ईप्सितानीप्सितत्वरूपविशेषस्य प्रमाणान्तरलभ्यत्वेन लाघवात् कर्मत्व एवशक्तेः । यथाचैवंसति नसूत्रद्वयवैयर्थ्यं तथा कौस्तुभे विस्तरः । तच्च कर्म चतुर्विधं — उत्पाद्यं आप्यम् विकार्यं, संस्कार्यं चेति । घटं करोति, घटं जानाति, व्रीहीनवहन्ति, व्रीहीन्प्रोक्षतीत्युदाहरणानि । पार्थसारथिस्तु - साध्यत्वमेव द्वितीयार्थः । आप्य कर्मादावपि तत्फलोपहितत्वेन साध्यतेत्याह । तदपि जन्यत्वत्वस्य शक्यतावच्छेदकत्वे गौरवादुपेक्षितम् । शक्ततावच्छेदकन्तु द्वितीयात्वं अमादिनिष्ठोव्यापकोधर्मः । एवमग्रेपि । यानित्वन्यानि द्वितीयार्थानुशासनानि तानि प्रचुरप्रयोगाभावाल्लाक्षणिकानुशासनानि । तथाहि - दुहाच् पच् दण्ड रुधि प्रच्छ चीञ् ब्रूञ् शासु



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मथि मुष नीञ् हृञ् कृष् वह् रूप धातु समानार्थकधातूनां यत्कर्मकारकं तत्संबंधिनोपादानादिकारकत्वाविवक्षायां माषाणामश्नीयादितिवद्धात्वर्थसंबंधमात्रविवक्षायां संबंधसामान्यवाचिषष्ठीप्राप्तौ "अकथितंच" ( १ -- ४ -- ५१ ) इत्याद्यनुशासनेन भाक्तकर्मसंज्ञाकरणात् द्वितीयादि । यथा - गान्दोग्धि पय इत्यादौ । अत्रच गोदोहनसंबंध एव द्वितीयार्थः । सच स्वनिरूपकदोहनानुकूलत्वसंसर्गेण भावनायामेवान्वेति , नतु धात्वर्थे, व्युत्पत्त्यन्तरकल्पनापत्तेः । तद्योगप्रतिपादकानुशासनञ्च संसर्गप्रतिपादनपरम् । गोरपादानत्वविवक्षायान्तु गोः पयो दोग्धीति पञ्चम्यन्त प्रयोगः । गोः पयोरूपकर्मकारकसंबंधविवक्षायांतु षष्ठ्यन्तप्रयोगोपि । अत्र पयसस्संबंधसामान्येन धात्वर्थाद्यन्वयविवक्षायां पयसः कर्मत्वाभावात् तत्संबंधिन्या अपि गोर्नकर्मत्वमित्येतदर्थं कर्मसंबंधिन इति विशेषणम् । अतएव गां पयसोदोग्धीति न प्रयेगः । अतस्तदा गोः पयसोदोग्धीत्येव प्रयोगः । ....

नच त्यजनोपसर्जनं त्यजनं दुहेरर्थः, तथाच धात्वर्थतावच्छेदक त्यजनाश्रयत्वान्मुख्यमेव गोः कर्मत्वमिति कथमत्र द्वितीयायास्संबंधे लक्षणेति वाच्यम् । तथाविवक्षायां मुख्यकर्मत्वेपि धात्वर्थ संबंधसामान्यविवक्षायां आनुशासनिकद्वितीयायां संबंधलक्षणोपपत्तेः । अतएव नाकथितश्चेत्याद्यनुशासनवैयर्थ्यं । अतएव वस्तुतोत्रापादनत्वाख्य एव गोस्संबंधस्संबंधत्वेन रूपेण द्वितीयाद्यर्थ इतिध्येयम् ॥ .... .... ....

अन्येतु अकथितं चेति सूत्रवैय्यर्थ्यापत्तिभियैव पाचयतीत्यादिवत् दुहेरपि त्यजनं धात्वर्थतावच्छेदकं नभवत्येवेतिक मुख्यकर्मत्व प्रसक्तिरित्याहुः ।

एवमकर्मकधातुयोगे " देशः कालोभावोगन्तव्योध्वाचकर्मसंज्ञ " इत्यनुशासनात् कुरून् स्वपिति, मासमास्ते, गोदोहमास्ते, क्रोशमास्ते, इत्यादौ द्वितीया । अत्रद्वितीयार्थोवच्छेदकत्वं, तच्चदेशस्याध्वनश्च, कालभावयो स्वाधेयत्वं कालिकं साक्षात् भावनान्वयि ॥ ....

एवं "अधिशीङ्स्थासांकर्म,, ( १-४-४६ )"अभिनिविशश्च,, (१-४

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



४७) "उपान्वध्याङ्वसः,, (१--४--४८) इत्याद्यनुशासनात् अधिशेते अधितिष्ठति अध्यास्तेवा वैकुण्ठं हरिरिति, अत्र द्वितीयादेराधेयत्वमर्थः । अभिनिविशते सन्मार्गमित्यत्रच । क्वचिन्न, पापेभिनिवेशः । उपवसति अधिवसति अनुवसति आवसति वा वैकुण्ठं हरिरित्यत्रच । अभुक्तयर्थस्यन, वने उपवसति । अत्र सर्वत्राधेयत्वस्य स्वाश्रयकर्तृकत्वसंबंधेन भावनायामन्वयः । .... ....

एवं "क्रुधद्रुहोरुपसृष्टयोःकर्म,,(१--४--३८)इतिसूत्रात् शत्रुमभिक्रुध्यति अभिद्रुह्यतीति द्विताया । उपसृष्टयोः -- उपसर्गयुक्तयोः । अत्र उद्देश्यत्वंद्वितीयार्थः, साक्षात् संबंधेन भावनान्वयी । अकर्मकत्वाच्च न मुख्य कर्मत्वं ॥ .... .... ....

एवं "उभसर्वतसोःकार्याधिगुपर्यादिषु त्रिषु । द्वितीया म्रेडिता तेषु" अभितः परितः समया निकषा हाप्रतियोगेपि । "अन्तरान्तरेणयुक्ते,, (२-३-४) इत्यनुशासनात् ,उभयतःकृष्णम् गोपाः,सर्वतःकृष्णंगोपाः,धिक्कृष्णाभक्तं, उपर्युपरि लोकंहरिः, अध्यधिलोकं, अधोधोलोकं, अभितः कृष्णम्, परितः कृष्णम्, ग्रामं समया निकषा , हाकृष्णाभक्तं, बुभुक्षितं नप्रतिभातिकिंचित् , अन्तरात्वां मांहरिः, अन्तरेण हरिं न सुखमित्यादौ उपपदयोगे तत्तल्लाक्षणिकार्थेषु द्वितीया, तत्राद्ययोःप्रतियोगित्वं द्वितीयार्थः । सच साक्षात्संबन्धेन नाम्न्येवान्वेति । उपपदविभक्तित्वादितिवहत्र: ॥ ..... .... ....

वस्तुतस्तु व्युत्पत्त्यन्तरकल्पनापत्तेः तत्रापि भावनायामेवाक्षिप्तायां श्रुतायां वान्वयः । सच स्वनिरूपकोभयपार्श्वस्थित गोपवृत्तित्वेनेति , उपपदार्थस्य संसर्गघटकत्वादुपपदविभक्तित्वम् ॥

एवमभितः कृष्णं, परितः कृष्णमित्यत्रापि द्रष्टव्यम् । धिक्कृष्णाभक्तमित्यत्राधारत्वं तदर्थः, तस्यच स्वनिरूपकधिक्काराश्रयत्वसंसर्गेण तस्यामेवान्वयः ॥

नचैवं धिङ्मूर्खेति प्रथमानापत्तिः , तत्रमूर्खस्य संबोधनद्वारा क्रियान्वयेन धिक्कारघटितत्संसर्गेण क्रियान्वयविरहात् । उपर्युपरि लोकमित्यादौच

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निरूपितत्वं द्वितीयार्थः, लोकनिरूपितोपरितनत्वविशिष्ट देशनिरूपितोपरितनत्वविशिष्ट तत्तद्देशस्थहरिकर्तृकाक्रियेति शाब्दबोधः । ' उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः' इत्यादौ उपर्युपरिबुद्धीनां -- उत्तानबुद्धीनां उपरि, ईश्वरबुद्धयश्चरन्तीति अर्थकरणेन आम्रेडितत्वाभावान्नद्वितीया ।

एवं ग्रामं समया ग्रामं निकषेत्यत्रापि निरूपितत्वं द्वितीयार्थः, तस्यच समयादिपदवाच्यसामीप्यद्वारकोन्वयः । हाकृष्णाभक्तमित्यत्र विषयत्वं तदर्थः, हाशब्दार्थः खेदास्तित्वं - तद्विषयकखेदोस्तीत्यर्थः । बुभुक्षितमित्यत्रचाधेयत्वं द्वितीयार्थः, विषयत्वं चाख्यातार्थः, स्वरूपसंबंधः प्रथमार्थः, तथाच किंचिन्निष्ठप्रतिभाविषयत्वं बुभुक्षितवृत्त्यभावप्रतियोगि प्रतिभानिष्ठविषयतानिरूपितं किंचिन्निष्ठाभावप्रतियोगिवा प्रतिभाविषयकत्वं बुभुक्षितवृत्तिप्रतिभानिष्ठविषयतानिरूपितमिति शाब्दबोधः । अन्तराशब्दस्य मध्यवाचित्वात् त्वां मा मित्यत्र संबंधित्वं द्वितीयार्थः, तत्र ममच मध्य इत्यर्थः । अन्तरेण हरिमित्यत्र प्रतियोगित्वम् द्वितीयार्थः, तत्परं योग्यतत्तत्संबंधावच्छिन्नमितिध्येयम् ॥

एवं कर्मप्रवचनीयसंज्ञकशब्दप्रयोगेपि द्वितीया तत्तदर्थेषु लाक्षणिकी तथाहि -- कर्मप्रवचनीयास्तावत् अनु उप प्रति परि अभि अधि सु अति अपि इत्यादयः । तत्र हेतुत्वसमानाधिकरणम् लक्षणं अनोरर्थः । यथा- जपमनुप्रावर्षत्, जपरूपहेतूपलक्षितम् वर्षणमित्यर्थः । अत्रद्वितीयार्थ आधेयत्वं तस्य हेतुत्वे लक्षणत्वेचान्वयः, तयोश्च निरूपकतासंसर्गेण वर्षणे तस्यच कृताविलेत्वं संसर्गः । एवं तृतीयार्थश्चानोरर्थः, नदीमन्वन्ववसितासेना । अत्र साहित्यरूपस्तृतीयार्थोनोरर्थः, स्थितिर्धात्वर्थः, निरूपितत्वं द्वितीयार्थः, नद्या सह संबध्यस्थितेत्यर्थः । हीनत्वंचानोरर्थः, अनुहरिं सुराः, हरेः हीनाइत्यर्थः । अत्र प्रतियोगित्वं द्वितीयार्थः । हीनत्वमधिकत्वञ्चोपार्थः, उपहरिं सुराः । बोधः प्राग्वत् । अधिकत्वे सप्तमी वक्ष्यते । प्रतिपर्यनूनांच सामान्यतो लक्षणमर्थः । वृक्षं प्रति परि अनुवा विद्योततेचन्द्रमाः । अत्र द्योतकत्वं प्रत्यादेरर्थः, आधेयत्वं द्वितीयार्थः, स्वाश्रयद्योतकत्वनिरूपकद्योतनानुकूलत्वं कृतौ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संसर्गः । वृक्षनिरूपितद्योतनाश्रयत्वं चन्द्र वृत्तीति शाब्दबोधः । पूर्वं हेतुत्व समानाधिकरणम् लक्षणमनोरर्थं इति सामान्यतो लक्षणार्थमनोः प्रथक् ग्रहणं । एवमित्थंभूताख्यानेप्येते त्रयः । भक्तोयं विष्णुं प्रति परि अनुवा, इत्थंभूतइत्यर्थः । विषयत्वं प्रत्याद्यर्थः । निरूपितत्वं द्वितीयार्थः । भागेप्येते, लक्ष्मीः हरिं प्रति परि अनुवा, हरेः भाग इत्यर्थः । भागः-- स्वत्वं प्रत्याद्यर्थः । निरूपितत्वं द्वितीयार्थः । वीप्सायां चैते, वृक्षं वृक्षं प्रति परि अनुवा सिंचति । अत्र मुख्यकर्मत्वं यदाजलादेः, तदाजलं सिंचतीति प्रयोगः । यदातु वृक्षनिरूपित संयोगाश्रयत्वं विवक्षितं,जलनिरूपितसंयोगाश्रयत्वमेव वृक्षेपि विवक्षितं तदा वृक्षं जलेन सिंचतीति । प्रयोगः, तदा तस्य मुख्यमेव कर्मत्वं । यदातु जले मुख्यकर्मत्वं विवक्षित्वा प्रत्यादेश्च लक्षणार्थत्वमंगीक्रियते तदा वृक्ष ग्प्रति जलं सिंचतीत्यपि प्रयोगः । नचैवं वीप्साभावेपि प्रत्यादेः कर्मप्रवचनीयसंज्ञात्वे वीप्सासु " प्रतिपर्यनव ,, इति अनुशासनवैय्यर्थ्यं । प्रत्यादेः लक्षणार्थकत्वाभावेपि आभिमुख्यादिरूपार्थान्तरार्थकत्वे वीप्सायां सत्यामेव कर्मप्रवचनीयसंज्ञेत्येवं परत्वात् । अतएव वीप्साया नप्रत्याद्यर्थत्वं, द्विर्वचनेनैवलाभात् । अतश्च तत्राभिमुख्यादिकं प्रत्याद्यर्थः, निरूपितत्वं द्वितीयार्थः । एवं भागभिन्नेषु लक्षणादिषु अभिरपि कर्मप्रवचनीयसंज्ञस्स्यात् । हरिमभिवर्तते भक्ताः, हरिमभिदेवं देवमभिसिंचति । एवं अधि परि अति सु अपि इत्यादीनामप्युदाहरणानि बोध्यानि ।

एवं कालाध्वनोरत्यन्तसंयोगेपिद्वितीया । मासमधीते क्रोशमास्ते । अत्र निरन्तरसन्निकर्षो द्वितीयार्थः । सच साक्षात्संबंधेनैव भावनान्वयी । तदेवं तत्र तत्र लाक्षणिकानुशासनान्यपि द्रष्टव्यानि । मुख्यस्वकर्मत्वासंभवेतु तदेव द्वितीयार्थः । यत्रतु मुख्यस्या मुख्यस्यवा विशेषणं, शुक्लमोदनं पचति, शुक्लां गां दोग्धि पय इत्यादौ , तत्र पदद्वयेन शुक्लगुणविशिष्टौदनकर्मत्वस्यैव लक्षणात्तस्यच भावनायामन्वयेपि " गुणवचनानामाश्रयतोलिंगवचनानिभवन्तीति ,, अनुशासनादुपस्थितत्वाद्विशेषणविभक्तिः शुक्लपदोत्तराद्वितीयाप्साधुत्वमात्रार्था, नतु अरुणैकहायन्यादिवत् विशेषणस्य प्रथगेव भावना

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्वयः । तस्या एककर्मत्वभंगापत्तेः । नापि शुक्लपदार्थस्या भेदेनौदनान्वयः, नामार्थस्य स्वोत्तरविभक्त्यर्थेन क्लृप्तान्वयस्य नामार्थान्तरेणान्वये व्युत्पत्त्यन्तरकल्पनापत्तेः । अतएव भावनाया एककर्मकत्वभंगभिया द्विकर्मकधातुस्थलेपि एकमेव कर्मत्वेन भावनान्वयि । अपरन्तु द्वितीयालक्षितकरणत्वादिनैव भावनान्वयि । पाश्चात्यधात्वर्थान्वयस्तु कर्मत्वेनैवेति नधातोः द्विकर्मकत्वबाध इति व्यक्तं कौस्तुभे । .... .... ....

तत्सिद्धं सर्वत्र द्वितीयार्थस्य भावनान्वय इति । ....

नन्वेवं मृदु ओदनं पचति स्तोकमोदनं पचतीत्यादौ कर्मकारकविशेषणत्वात् द्वितीयोपपत्तावपि यत्र " क्रियाविशेषणानांनपुसक ,, मित्यनुशासनात् मृदु पचति स्तोकं पचतीत्यादि नपुंसकलिंगनिर्देशस्तत्र क्रियाविशेषणत्वादभेदसंबन्धेन क्रियान्वयेपि द्वितीयोत्पत्तौ प्रमाणाभावः । नहि किंचिदनुशासनं तत्रास्ति । साधुत्वार्थं तत्रद्वितीयेतिचेत् ; साधुत्वार्थं चतुर्थ्यादेरप्यापत्तेः । प्रथमातिक्रमे कारणाभावेन प्रथमाया एवापत्तेश्च । किञ्च नामार्थस्य स्वोत्तरविभक्त्यर्थे क्लृप्तान्वयस्याभेदसंबंधेनापि धात्वर्थान्वयाभ्युपगमे व्युत्पत्त्यन्तरकल्पनापत्तिः । सुखं स्वपिति, सुखमास्ते, सुखं गच्छतीत्यादौ अभेदान्वयानुपपत्तिश्च । नचात्र कर्मणिद्वितीया; धात्वर्थतावच्छेदकफलशालित्वस्य सुखेबाधात , सुखमोदनं पचतीत्यादौ द्विकर्मकतापत्तेश्च । अकर्मक स्वप्यादिकर्मत्वस्यानुक्तिसहत्वाच्च । सुखादेः कर्मत्वे सुखमोदनः पच्यते , स्तोकमोदनः पच्यत इत्यादौ द्वितीयानापत्तेश्च । कृद्योग ओदनस्यैव षष्ठ्यापत्तौ सुखमोदनस्य पक्तेत्यादौ द्वितायानापत्तेश्च । अतः कथंक्रिया विशेषणानामन्वय इति चेत् !

अत्र वैय्याकरणाः -- धात्वर्थीभूतफूत्कारादिव्यापारस्य फलं विक्लृप्तिरपि धात्वर्थः, तद्विशेषणंच स्तोकादिकमिति तस्य कर्मत्वात् तद्विशेषणस्य द्वितीयान्तत्वं ॥ .... .... ....

नच विक्लृप्तयादिफलस्यैव क्रियाजन्यफलाश्रयत्वरूपमुख्यकर्मत्वाभावः, विक्लृप्तेरिव तदुत्पत्तेरपि विक्लृप्तिमुत्पादयंति इति विवरणानुरोधेन धातुवाच्यत्वा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त् क्रियाजन्योत्पत्त्याश्रत्वेन विक्लृप्तेरपि मुख्यकर्मत्वात् , तद्विशेषणे द्वितीयोपपत्तेः । .... .... ....

नचैवं विक्लृप्तिं पचतीति प्रयोगापत्तिः, तस्या धातुनैवोक्ततया उक्तार्थानामप्रयोगात् । अकर्मकधातुस्थलेपि धातुवाच्यफलस्य शरीरलाघवादेः सुखसाधनत्वात् , सुखपदेन सुखसाधनं लक्षणयित्वा तस्य द्वितीयान्तत्वोपपत्तिः ।

नचैवं तस्य धातोरकर्मकत्वानापत्तिः , स्वव्यधिकरणफलाश्रयकव्यापारवाचित्वाभावेना कर्मकत्वोपपत्तेः । अतस्तस्य सकर्मकाकर्मकसाधारण्येन उत्पत्त्याश्रयरूपकर्मसत्त्वेपि नक्षतिः । अतो युक्तैवैतादृशकर्माणि सर्वत्र द्वितीया । अतएव तादृशविषयएव " क्रियाविशेषणानांनपुंसक ,, मित्यादिना नपुंसकत्वं । तच्चानियतलिंगविषयं नियतलिंगानान्तु तत्तल्लिंगत्वेसत्येव द्वितीयान्तत्वं । अतएवादिं पचतीत्यादिप्रयोगः । आदिभूता या विक्लृप्तिस्तज्जनको व्यापारइत्यर्थः ॥ .... ....

नचतादृशकर्मकारकमादाय कर्मणिलकारः कृद्योगनिमित्तका षष्ठीवा आपद्येतेति वाच्यम् । व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव तयोः प्रवृत्तेः । उत्पत्तेरमुख्यफलत्वेन तदाश्रये तयोरप्रवृत्तेः । " लःकर्मणिचभावेचाकर्मकेभ्यः,, ( ३--४--६९ ) "कर्तृकर्मणोः कृति,,( २--३--६५ ) इत्यादिसूत्रेषु कर्मपदेन तादृशकर्मग्रहणस्यैव निर्णीतत्वात् । इतरथासर्वेषामेवसकर्मकत्वेन अकर्मकेभ्य इति पदोपादानानुपपत्तेः । अतश्च स्तोकमोदनः पच्यते स्तोकमोदनस्य पक्तेत्यादौ द्वितीयान्तत्वोपपत्तिः । यत्रतुविधिवशात् धात्वर्थस्य करणत्वं तत्र तद्विशेषणे तृतीया, यथा--ज्योतिष्टोमेन यजेतेति, तत्राति समीचीनं ज्योतिष्टोमेन यजेतेति यद्विशेषणं न तद्धात्वर्थस्य अपितु भावनायाः, तत्रातएव साप्रथमा न द्वितीयेत्याहुः, तन्न -- व्यापारव्यधिकरणधातु वाच्यमुख्यफलाश्रयरूप कर्मण्येव लकारषष्ठयोः प्रवृत्तौ चत्रेणास्यते मासः,सुप्यते रात्रिरिति कर्मलकारानापत्तेः । नहि तत्र तादृशंफलमस्ति, तथात्वे तस्य स्वाभाविका कर्मकत्वानापत्तेः धातूपात्तफलसमानाधिकरणव्यापारवाचित्वंहि भवन्मतेऽकर्मकत्वम् । अतस्तत्र तादृशफलाप्रसिद्धेः नद्वितीयाकर्मलकाराद्यापत्तिः । अतएव नपरसमवेतक्रिया

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जन्यधात्वर्थतावच्छेदकीभूतफलशालित्वं कर्मत्वं, नापितत्सनियतोखण्डोपाधिःकर्मत्वं । तदभावेपि चैत्रोमासमास्ते, आस्यते मास, इत्यादौ कर्मत्वाव इयकत्वेन व्यभिचारात् । अपितु तद्व्यापकं तत्समानाधिकरणमात्रंवा । अथवा किमित्याद्याकांक्षापूरकत्वसमनियतमेवाखण्डोपाधिरूपं कर्मत्वं, तच्च पचतीत्यादौ ओदनस्येवआस्यतइत्यादौ मासादेरप्यविशिष्टमिति युक्तमेवात्राद्वितीयादि । तच्च तत्तद्धातुसमभिव्याहारगम्यमित्युक्तं कौस्तुभे। सुखादिरूपाक्रियाविशेषणानांतु न किमित्याकाराकांक्षापूरकत्वं । अपितु कथमाकांक्षापूरकत्वमेव । अतएव कथं पचति, स्वपितिवा सुखं, कीदृशंपचति, स्तोकं मृदु वेत्यादि प्रश्नोत्तरभावोपि संगच्छते । अतो नतत्रकर्मत्वसंभवः । नापि तदनुरोधेन उत्पत्तेः फलस्यवा धातुवाच्यत्वकल्पनं, अन्यलभ्यत्वात्तयोः । अतएव पाकत्वयागत्वादिनैव धातोः शक्तिरित्युक्तं प्राक् । कथं तर्हि तत्र द्वितीयानियमः । "उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडिता तेषु ततोन्यत्रापि दृश्यते ।" इत्यनुशासनादिति गृहाण । अत्र ततोन्यत्रापि -- प्रतिपदोक्तादन्यक्रियाविशेषणेपीत्यर्थः । अतएव " अन्यत्रापि दृश्यत,,इत्युक्तं । तदेतदाह -- "अभितः परितः समया निकषाहाप्रति,, इति, इत्यग्रिमप्रतिपदोक्तपरतया भाष्यानारूढं व्याख्यानमप्यसंगतं, वैय्यर्थ्यापत्तेः ।

तस्मात् सिद्धंक्रियाविशेषणेषु द्वितीयामात्रानुशासनं ।

अतएवात्र द्वितीयामात्रग्रहणान्न लकारपङ्क्तौ । अतस्तेषामपि तात्पर्यानुरोधेन फलद्वारको धातूपात्तव्यापारद्वारकः साक्षादेववा भावनायामन्वयः । सर्वथैव द्वितीयान्तत्वं । तत्र स्तोकं मृदु समीचीनमित्यादौ द्वितीयार्थो लक्षणया आश्रयत्वं । स्तोकत्वादिकञ्च लक्षणया शक्त्यैववा प्रातिपदिकार्थः। तदाश्रयत्वञ्च यदि फलसंबन्धे तात्पर्यं तदा स्वनिरूपकफलजनकव्यापारानुकूलत्वसंसर्गेण कृतावन्वेति । यदिव्यापारसंबन्धे तदा स्वनिरूपकव्यापारानुकूलत्वसंसर्गेण । यदितु भावनासंबन्धे तदा साक्षादेवेति विवेकः ।

एतेन भावनासंबन्धे प्रथमैवेति परास्तं । भावनायास्संबन्धविवक्षयाऽऽदिः पचतीति प्रयोगापत्तेश्च । नचासाविष्टः, भवद्ग्रन्थेप्यनुल्लेखनात् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिष्टोमेनेत्यत्रापि न क्रियाविशेषणत्वं, अपितु धात्वर्थस्य करणत्वेन भावनान्वय नामार्थस्यापि करणत्वेनैवान्वयः। नामार्थोहि यद्यपि धात्वर्थ एव, तथापि धातुना विजातीययागत्वादिना बोधात्, नाम्नाच ज्योतीरूपस्तोमकत्वादिना-बोधान्न पर्यायत्वम्। अभेदबोधस्तु अरुणैकहायनीविदिति वक्ष्यते। अत एव ज्योतिष्टोमेनेत्यत्राभेदार्थिका तृतीयेति तार्किकमतमपास्तं, अभेदलक्षणायां प्रमाणाभावात्। धान्येन धनीत्यादावपि धनसंबन्धे धान्यस्य करणत्वोपपत्ते रभेदलक्षणायाः क्वाप्यदर्शनाच्च। करणत्वविवक्षाभावएवच क्रियाविशेषणत्वनिमित्तका द्वितीया, स्वाहाकारं यजतीतिवत् लौकिकवाक्ये न विरुद्ध्यते। स्वाहाकारवाक्येतु व्यत्ययानुशासनेन करणत्वलक्षणा। सुखंस्वपितीत्यादावपि जनकत्वं द्वितीयार्थः। सुखजनकः स्वाप इत्यर्थः। यद्वा सुखपदमनायासपरं, द्वितीयार्थः पूर्वकत्वं, आयासाभावपूर्वकस्स्वापादिरित्यर्थः। सर्वथा सिद्धं सर्वत्र द्वितायार्थो भावनान्वयीति। भावनाच लिंगानन्वयिपदोपस्थाप्या। तच्च तिङ् कृन्निपाताद्यपि, नतु प्रथमायामिव तिङाद्येव। अतएव ओदनं पचति, ओदनं करिष्यन्, ओदनं भुङ्क्त इत्यादौ सवत्र द्वितीयाया भावनान्वय इति संक्षेपः॥

एवं —"कर्तृकरणयोस्तृतीया" (२—३—१८) इति सूत्रात् कर्तृत्वं करणत्वञ्च तृतीयार्थः। सोपि तथैव भावनान्वयी। तत्र "स्वतन्त्रः कर्ता" (१ -- ४ -- ५४) इति सूत्रेण कर्तृत्वस्य निर्वचनं। तथाहि- इतरकारकाप्रयोज्यत्वेसति कारकान्तरप्रयोक्तृत्वं कर्तृत्वं। कारकान्तरनिष्ठव्यापारजनकत्वं विशेष्यदळार्थः। अस्तिचेदंकुविन्दादौ तंत्वादिनिष्ठपटजनकसंयोगरूपव्यापारजनकत्वात्। कुठारेपि काष्ठनिष्ठसंयोगजनकत्वेन कर्तृत्वापत्तौ रुत्यन्तम्। तस्य पुरुषजन्यसंयोगाश्रयत्वेन तत्प्रयोज्यत्वादिति सर्वदर्शनानुयायिनः प्राञ्चः। तन्न -- ईश्वरप्रयोज्यजीवेऽव्याप्तेः, दण्डजन्यसंयोगाश्रयत्वेन कुलाले अव्याप्तेश्च। अतो धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति वैय्याकरणनव्याः। चैत्रः पचति घटो भवतीत्यादौ चैत्रघटादौ पाकभवनादिरूप व्यापाराश्रय



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वाल्लक्षणसमन्वयः । व्यापारपदोपादानात् न फलाश्रये कर्मणि ओदनादावति व्याप्तिः । पाचयति चैत्रो मैत्रेणेत्यादौ पाकस्य णिजर्थस्य चोभयोर्धातूपात्त व्यापारत्वा त्तदाश्रययोरुभयोरपि कर्तृत्वोपपत्तिः । परन्तु चैत्रवृत्त्येव कर्तृत्वं तिङुपात्तमिति तस्यैव तदुपात्तसंख्यान्वयो नतु मैत्रस्य ॥

नचैवं चैत्रो मैत्रं गमयतीत्यत्र मैत्रेकर्तृत्वापत्तिः । तस्मिन्नपि तद्व्यवहारसत्त्वेनेष्टत्वात् । तृतीयायास्त्वनुशासनबलात् कर्मसंज्ञाविरोधान्न प्रसङ्गः । एवं स्थाली पचतीत्यादौ स्थालीनिष्ठव्यापारस्यैव धातुनोक्तत्वात् कर्तृत्वाविरोध इत्याहुः । तन्न-- चैत्रौ न पचति, भूतले घटो नास्तीत्यादौ धातूपात्तव्यापाराभावाश्रये चैत्रादावव्याप्तेः । नच तत्र चैत्रवृत्तिः पाकोऽभावप्रतियोगीति, भूतलवृत्तिघटनिष्ठासत्ता अभावप्रतियोगिनीत्येवं शाब्दबोधांगीकारान्नाव्याप्तिः । ह्रदे वह्निर्नास्तीत्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनोऽप्रसिद्ध्याऽव्याप्त्यापत्तेः । नच तत्र वह्निवृत्तिसत्ता ह्रदवृत्त्यभावप्रतियोगिनीत्येवंशाब्दबोधांगीकारात्तन्निवारणं, तथात्वेपि शुक्लोघटोभवतीत्यादौ शुक्लगुणस्यैव भवनाश्रयत्वेन तत्रातिव्याप्तिप्रसंगात् । घटेऽव्याप्तेश्च । अथ तत्र विशेषणविशेष्ययोरुभयोर्भवनाश्रयत्वं; तदाचक्रे घटो भवतीत्यादौ चक्रस्यापि तदापत्तिः । अथ यद्धात्वर्थाश्रयत्वेन योविवक्षितः सतत्कर्तेत्युच्यते, चक्रेच विवक्षाभावान्नातिप्रसंगः; तदा घटः पटोनेत्यादौ अन्योन्याभावप्रतियोगिनि घटादौ धात्वर्थाश्रयत्वाभावात् अव्याप्तिः ।

नच तत्र भवति पदाध्याहारेण घटपटोभयवृत्ति तादात्म्यभवनं भूधातुना लक्षयित्वा तादृशभवनमभावप्रतियोगीति शाब्दबोधांगीकारात् अर्थाच्चान्योन्याभावबोधोपपत्तेः तदात्मत्वेन भवनस्यचोभयवृत्तित्वादुभयकर्तृत्वोपपत्तेरिति वाच्यम् , तथात्वे उभयत्रापि तिङुपात्तसङ्ख्याकत्वापत्तेः । घटोनपटावितिप्रयोगानापत्तेश्च ॥

एतेन घटो न पट इत्यत्र घटपदं घटप्रतियोगिकान्योन्याभावलक्षकं, नञ्पदञ्च तात्पर्यग्राहकं, अन्वयश्चोभयोरपि शुक्लोघटः अघटः पट इतिव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त् पार्ष्ठिकाभेदसंबंधमादाय विशेषणविशेष्यभावेनवा अध्याहृतक्रियायामि त्यपास्तम् , तथात्वे तद्वदेव घटोनपटाविति प्रयोगानापत्तेः । घटोनश्यतीत्या दौ कथमपि कर्तृत्वानुपपत्तेश्च । .... ....

अतो यद्धात्वर्थावच्छिन्नलिंगानन्वयिपदोपस्थाप्यार्थाश्रयत्वं यस्य तस्य तत्कर्तृत्वम् । अस्तिचेदं पच्यते चैत्रेण पचति चैत्र इत्यादौ, चैत्रस्य धात्वर्थाव च्छिन्नकृत्याश्रत्वात् । कर्मलकारेणापि कृतेरुक्तेः । घटो भवतीत्यादौ आख्यातेनाश्रय त्वस्य लक्षणात्, घटो नश्यतीत्यादौ प्रतियोगित्वस्य तेन लक्षणात्, तत्रापि लक्षणस मन्वयः । अवच्छिन्नत्वञ्च स्वरूपसंबंधविशेषः, नतु जनकत्वाद्येव । तेन प्रतियोगित्वादे र्नाशाजनकत्वेपि नक्षतिः । चैत्रः पाचकः पक्तेत्यादौ कृतैव पाकानुकूलकृते र्लिंगानन्वयिन्या उक्तत्वात् तस्य कर्तृत्वोपपत्तिः । चैत्रस्य पाक इत्यादि घञन्ते घञ र्थे लिंगान्वयेपि पचिधातुनोक्तस्य लक्षणया पाकावच्छिन्नव्यापारस्य लिंगानन्वया त्त दाश्रये चैत्रे कर्तृत्वाविरोधः । घञावा लक्षणया कृते श्शक्त्या पाकाख्यस्य भावस्योक्तेः पाकावच्छिन्नकृतिसाध्यः, पाक इति शाब्दबोधः । कृतौ चैत्र स्यान्वयात् कर्तृत्वोपपत्तिः । शेषषष्ठीत्वाद्वा कर्तृत्वाभावेपि न क्षतिः । प्रधा नभूताध्याहृतक्रियायामेवच तस्यान्वयः । चैत्रस्य कृतिरित्यादिप्रयोगोपपत्त्यर्थं चेदमावश्यकम् । चैत्रेण कृत इत्यादिकर्मक्तस्वपि धातुना पाकानुकूलव्यापार स्यैव वस्तुतउक्तेः, तदाश्रयत्वेन चैत्रे कर्तृत्वाविघातः । एवं पाचयति चैत्रो मैत्रेणेत्यादावपि मैत्रस्य धातूक्तपाकानुकूलकृत्याश्रयत्वात् कर्तृत्वं, चैत्रस्यत्वा ख्यातोपात्तकृत्याश्रयत्वादेव । अत्र पाकंकारयतीति विवरणात्, कृत्यनुकूल व्यापारो णिजर्थ इति लक्षणसमन्वयः । कर्मलकारस्थलेच फलस्य संसर्गवि धयैव भानांगीकारेण पदोपस्थाप्यत्वाभावान्न तदाश्रय ओदनेऽ तिव्याप्तिः । विक्लिद्यन्ति तंडुला इत्यादावाख्यातेन धात्वर्थाश्रयत्वलक्षणात् तद्वति तण्डुले नाव्याप्तिः । एवं स्थाली पचतीत्यादावपि धातुना स्थालीनिष्ठस्यैव व्यापार स्योक्तेर्न कर्तृत्वविघातः । कर्मकर्तृस्थलेच फलस्यैवास्मिन् पक्षे अख्यातेन ल क्षणा न्नोदनस्य कर्तृत्वविघातः । ततश्च वस्तुपदाभिधेयभावनाया श्चैत्रान्व यवारणार्थं लिंगानन्वयीति । चैत्रो न पचति भूतले घटो नास्तीत्यादौ चैत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृत्तिपाकभावना भूतलाधिकरणकघडसत्ताश्रयत्वञ्चाभावप्रतियोगीति शाब्दबोधांगीकारा न्न चैत्रादेः कर्तृत्वविघातः । अभावे चैत्रवृत्तित्वं समभिव्याहारात् , नञावा चैत्रवृत्त्यभावलक्षणेति न विरोधः, । वायौ रूपं नास्ति जातौ समवायेन सत्ता नास्ति, ह्रदे वह्निर्नास्तीत्यादौचोक्तविधशाब्दबोधांगीकारे प्रतियोगिप्रसिद्ध्यनापत्तेः अगत्या रूपादिवृत्ति तत्तत्संबंधावच्छिन्न विद्यमानत्वाश्रयत्वं वाय्वादिनिष्ठाभावप्रतियोगीति शाब्दबोधांगीकारा न्न रूपादेः कर्तृत्वविघातः । प्रकारान्तरन्तु सप्तमीप्रकरणे वक्ष्यते । घटः पटोनेत्यादौ भवति क्रियाध्याहारात् घटपदेनच घटप्रतियोगिकान्योन्याभाववल्लक्षणात् नञ्पदस्यच तात्पर्यग्राहकत्वात् शुक्लोघटोस्तीतिवत् पार्ष्ठिकान्वयलभ्याभेदमादायोभयोः क्रियान्वया दभयोरपि कर्तृत्वोपपत्तिः ॥

वस्तुतस्तु घटो नपटौ इत्यादौ विभिन्नसंख्याकत्वानुपपत्त्या नाभाववल्लक्षणा, अपित्वध्याहृतक्रियावाचकाख्यातेन प्रतियोगित्वाश्रयत्वयोरुभयोर्लक्षणा, तयोश्च यथातात्पर्यं घटपटान्वयात् घटपटसंबन्धिनी यथाक्रममन्योन्याभावीये विद्यमानत्वसंबन्धिनी प्रतियोगित्वाश्रयत्वे इतिच शाब्दबोधांगीकारात् उभयोः कर्तृत्वोपपत्तिः । परन्त्वनुयोगिवृत्तिसंख्यावचनमेवाख्याते, नतु प्रतियोगिवृत्तिसंख्यावचनमिति नियमोप्यनुभवानुसारेण प्रकृते कल्प्यत इति, नैतादृशोपि बोधः । अपितु घटो भवति पटौ नभवत इति क्रियापदद्वयाध्याहारेण एकघटवृत्तिभवनाश्रयत्वं पटद्वयवृत्तिभवनाश्रयत्वप्रतियोगिकान्योन्याभाववदित्येवं । नञ्पदस्य तात्पर्यग्राहकत्वमंगीकृत्य द्वयोराख्यातयोः पश्य मृगो धावतीतिवत् स्वप्रतियोगिकान्योन्याभाववत्त्वसंसर्गेणान्वयः । मानसश्च भवनाश्रययोःभेदबोधः । एवंच स्वस्वसंख्यान्वयः कर्तृत्वंचोभयोरुपपन्नमितिध्येयम् । .... .... ....

एवं सत्ता न समवायेन जातिवृत्तिरित्यादिप्रयोगा अपि लक्षणाध्याहारादिना व्याख्येयाः, अयोग्यावेत्यन्यत्र विस्तरः । अत्रचाश्रयत्वमेव तृतीयाप्रथमा तिबादीनामर्थः, अन्यत्तु सर्वं प्रमाणान्तरेण लभ्यमिति ध्येयम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथवा कृत्याश्रयत्वमेव मुख्यं कर्तृत्वं, यत्नवाचिकृञ्धातुघटितत्वात् कर्तृशब्दस्य, अन्यत्र कर्तृत्वव्यवहारोभाक्त एव द्रष्टव्यः। ....

वस्तुतस्तु " धर्मेचार्थेच कामेच नातिचरितव्या त्वयेयं ", " पत्यु र्नोयज्ञसंयोगे " ( ४—२--३३ ) " जायापतीअग्नीनादधीयाताम् " इत्यादि प्रमाणान्तरानुरोधात् स्त्रिया अपि यजमानवदेव कर्तृत्वेवगते " वसन्तेब्राह्म णोग्नीनादधीत " " यजेतस्वर्गकामः " इत्यादौ एकत्वश्रवणं निषादस्थपत्य- धिकरणन्यायेन लक्षणायां प्रमाणाभावात् उभयोर्व्यासज्य वृत्त्येकं कर्तृत्वं गमयति। तच्च न सखण्डोपाधिरूपं, बाधात्। अपितु पूर्वोक्तसखण्डोपाधि- व्यापकं अखण्डोपाधिरूपं कर्तृत्वं, तद्गतमेवचैकत्वादिकमित्युक्तं प्राक्। अस्मिंश्च पक्षे कर्मकर्तृस्थलेपि न फललक्षणा, अपित्वाख्यातलक्ष्यस्याखण्डो पाधिरूपस्य कर्तृत्वस्यैवाख्यातोपात्तकृतावेव स्वसमानाधिकरणफलप्रयोजकत्वसं सर्गेणान्वयइत्युक्तं कौस्तुभे। इदमेवच कर्तृत्वं तृतीयार्थः। तस्यच चैत्रेण पच्यत इत्यत्र स्वनिरूपकपाकानुकूलत्वसंसर्गेण निरूपकत्वेनैववा लिंगानन्व यिभावनायामन्वयः। इदमेवच कात्यायनमते प्रथमार्थः, कर्त्राख्यातलक्ष्यं, कृत्प्रत्ययशक्यतावच्छेदकं कृद्योगनिमित्तकषष्ठीबोध्यंच। ....

करणत्वंच"साधकतमंकरणं"(१-४-४२)इतिसूत्रेणनिरुक्तं, तच्च कारका न्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावेसति क्रियाहेतुत्वं। सत्यन्तेन कर्तृक र्मणोः करणनिष्ठव्यारद्वारा क्रियाहेतुत्वात्, अधिकरणकारकस्य ग्रहे स्था ल्यामोदनं पचतीत्यादौ कर्तृकर्मान्यतरनिष्ठव्यापारद्वाराक्रियाहेतुत्वात्, संप्रदान स्यच स्वानुमतिद्वारक कर्त्रिच्छोत्पादनद्वारा क्रियाहेतुत्वात्, अपादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनहेतुत्वादतिव्याप्तिवारणम्। चरम कारणस्यैव लक्ष्यत्वेन कुठारादेरपि कर्त्रादिनिष्ठव्यापारद्वारा क्रियाहेतुत्वा न्नाव्याप्तिरिति सर्वदर्शनानुयायिनः, प्राञ्चः। तन्न -- कुठारेण छिनत्तीत्या दिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्। अतोयद्व्यापाराव्यवहितोत्तरं यत्क्रि यानिष्पत्तिर्विवक्ष्यते, तत्तत्क्रियाकरणं। अधिकरणादिव्यापारानन्तरमेव य दा पच्यादिक्रियानिष्पत्तिर्विवक्षिता तदा तेषामपि करणत्वमिष्टमेव। पचि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धातोश्च तदा तत्क्रियैव विवक्षिता । अतएव गवा दानं संपादयति, ब्राह्म णेन दानं साधयति, स्थाल्या पचतीत्यादयः प्रयोगा अपि संगच्छन्त इति वैय्याकरणनव्याः । तदपिन -- औषधभोजनेन परंपरया क्रमेण पुष्टिं संपा दय इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात् । अतोव्यापारवदसाधारणका रणत्वं करणत्वं । कर्त्रादीनांच करणत्वेपि नक्षतिः । उपाधिसांकर्यस्यादोष त्वात् । विवक्षातश्च कारकविभक्तय इत्यप्यन्ये । तदपिन -- भ्रम्या घटं करोति पुण्येन स्वर्गं भुङ्क्त इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात् । अतः क रणत्वं करणं करणमित्याद्यनुगतप्रतीत्या अखण्डोपाधिरूपमेव कारणत्वादिवत् । तदेवच तृतीयार्थः । तस्यच कर्त्रादावतिप्रसंगनिरासः पूर्ववत् । तस्यच स्व निरूपकधात्वर्थावच्छिन्नत्वसंसर्गेण भावनान्वयः । पूर्ववदेव एककार्यकारण भावकल्पने लाघवात् । प्रकृत्यर्थान्वयस्त्वाधेयतया तत्र बोध्यः । नवीनतार्कि कास्तु - प्रकृत्यर्थनिरूपितजन्यत्वमेव तृतीयार्थः, तस्यचाश्रयतया धात्वर्थान्व य इत्याहुः । तन्न - अनुशासनबाधे प्रमाणाभावात् । ....

नच परशुना छिनत्ति नदात्रेणेत्यादौ दात्रजन्यत्वाभावस्य क्रियायां बोधानापत्तिः, निरूपकतासंबन्धेन परशुनिष्ठकरणत्वस्य निरूपकतासंबन्धा वच्छिन्नप्रतियोगिताकदात्रनिष्ठकरणत्वाभावस्यच क्रियायां बोधेनार्थो जन्य त्वाभावबोधोपपत्तेः । अतः प्रचुरप्रयोगाविशेषात् कर्तृत्वकरणत्वयोरुभयोरपि तृ तीयायाः शक्तिः । योग्यतादिरूपतात्पर्यग्राहकानुरोधेनच विशेषनिर्णयः ।....

एवं द्वितीयावदेवतृतीयायाअपि अनुशासनानुरोधेन लाक्षणिकार्था अनुसं धेयाः । तथाहि-- " प्रकृत्यादिभ्यउपसंख्यानं " इति वार्तिकात् प्रकृत्या चा रुः, प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, समेनैति,द्विद्रोणेन धान्यं क्रीणाति, सुखेन यातीत्यादौ करणत्वातिरिक्तार्थान्तरलक्षणा । प्रकृतिपदेनहि स्वाभाविकी साम ग्री उच्यते, तज्जन्यचारुत्ववानित्यर्थः । .... ....

नचैवं करणत्वस्यैव तृतीयार्थत्वात्पृथगनुशासनवैय्यर्थ्यं, जन्यत्वस्य- तत्वेन तृतीयार्थत्वमंगीकृत्य तत्सार्थक्यात् । अतएव तृतीयार्थस्यजन्यत्वाश्रय

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चारुत्वाश्रयवृत्तित्व संबन्धेनाक्षिप्तक्रियायामन्वयः । प्रायश्शब्दस्यावच्छेदकावच्छिन्न त्वराहित्यविशिष्टबाहुल्यमर्थः । तृतीयाया अवच्छिन्नत्वमर्थः । तथाच किंचिन्न्यून-बाहुल्यावच्छिन्न यज्ञविद्यासंबन्धवानित्यर्थः । .... ....

एवं गोत्रशब्दस्य संबन्धविशेषवाचित्वेपि गोत्रत्वपरत्वमंगीकृत्य गोत्रत्वावच्छिन्नगर्गसंबन्धवानित्यर्थः । तृतीयायावा अभेदार्थकत्वमंगीकृत्य गोत्राभिन्नसंबन्धवानित्यर्थः । अस्मिश्चपक्षे गोत्रत्वं तृतीयार्थः, अवच्छिन्नत्वं संसर्गः, गोत्रवृत्तिगोत्रत्वावच्छिन्न संबन्धवानित्यर्थः । अनयैवच रीत्या समवायेन रूपवानित्यादिप्रयोगा उपपादनीयाः । धान्येन धनीत्यादौतु तृतीयार्थाभेदस्य धान्यत्वस्य धनेन्वय इति विशेषः । धनसंबन्धं प्रति धान्य स्यकरणत्वादेववा तृतीयेतिकौस्तुभेस्पष्टम् । समेनेत्यत्रावच्छिन्नत्वं तृतीयार्थः, समदेशावच्छिन्नागमनभावनेत्यर्थः । द्वयोः द्रोणयो स्समाहारः द्विद्रोणम्, पात्रादित्वात् स्त्रीत्वाभावः । परिमितत्वं तृतीयार्थः । द्रोणद्वयपरिमितं धान्यं क्रीणातीत्यर्थः । करणत्वेनाप्यन्वयसंभवेपि परिमितत्वेन बोधार्थं पृथगनुशासनं । सुखेन यातीत्यादौ सुखपदं दुःखाभावपरं, तृतीयार्थश्च प्रयोजकत्वं, तच्चप्रतियोग्यनुत्पादकत्वरूपं । तथाच दुःखाजनकं यानमित्यर्थः । एवं " दिवः कर्मच " (१ - ४ - ४३) इतिसूत्रेणदिव्धात्वर्थस्य साधकतमं कर्मसंज्ञं स्यात्, लक्ष्यानुरोधेन स्वरितत्वानुगतेः, पूर्वसूत्रस्थकरणशब्दानुवृत्त्या करणसंज्ञं चेत्यर्थकेन साधकतमस्यैव संज्ञाद्वयकरणात्, अक्षैरक्षान् वा दीव्यतीतिप्रयोगद्वयं । अत्र पणपूर्वकाक्षसाध्यक्रियाया धात्वर्थत्वात् तत्राक्षाणां मुख्यमेव करणत्वम् । तत्र च द्वितीया लाक्षणिकी । .... ....

नच करणसंज्ञायाः देवना अक्षा इत्यत्र ल्युटि सावकाशत्वात्, कर्मसंज्ञायाश्च दीव्यन्ते अक्षा इति कर्मलकारे सावकाशत्वात् दीव्यतीत्यत्र कर्त्राख्यातेसंज्ञाद्वयप्रयुक्तकार्यप्रसंगे संज्ञागतपरत्वा द्वितीयाया एवापत्तौ तृतीयान्तस्य प्रयोगस्य कथं साधुत्वं विभक्तिगतपरत्वाद्वाविपरीत्यमितिवाच्यम् । संज्ञाद्वयविधानबलादेव व्यवस्थितकार्यसिद्धौ चशब्देनैकत्र संज्ञाद्वयप्रयुक्तकार्यद्वयविधानप्रतीत्या तत्सिद्धेः । अतएव कार्ययोरेवानेन समुच्चयो विधी

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यते, संज्ञयो स्समुच्चयस्य संज्ञाद्वयविधानबलादेव सिद्धेः । अतएव चशब्दाभावेपि मनसा देव इत्यादौ करणसंज्ञया तृतीया,कर्मसंज्ञयाच कर्मोपपदत्वलाभेन देवज्ञत्यणूप्रत्ययस्यापि सिद्धिरविकला। अतश्चशब्दस्य द्वितीयासिद्धिरेव प्रयोजनम्॥

नच तथापि दीव्यंतेक्षा इत्यत्र कर्मत्वस्याभिधानेपि करणत्वस्यानभिधाना तृतीयापत्तिः । देवना अक्षा इत्यत्रच करणत्वस्य ल्युटाभिधानेपि कर्मत्वस्यानभिधानात् अक्षानिति द्वितीयापत्तिरिति वाच्यम् । एकस्यैव साधकतमत्वस्य उभयसंज्ञकत्वेन उभयत्राप्युभयाभिधानोपपत्तेः । एवं "अपवर्गे तृतीया" ( २- ३-६ ) इति सूत्रेण फलप्राप्तिरूपापवर्गे द्योत्ये कालाध्वनोरत्यन्तसंयोगे तृतीयास्यात् , अन्यथा द्वितीया, इत्यर्थकेन मासेनाधीतोनुवाक इत्यत्र तृतीयया फलप्राप्तिर्द्योत्या । अर्थस्तु मासमधीतोनायात इतिव द्बोध्यः । एवं "सहयुक्तेऽप्रधाने " (२-३-१९)'एवं साकंसार्द्धं समं योगेपि'इत्यनुशासनेनपुत्रेण सहागतः पितेति तृतीया । अत्रच पुत्रस्याप्राधान्यं न क्रियानन्वयित्वेनैव, " सहैवदशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादिवत् । अपितु यस्य क्रियासंबंधः शाब्दः तत्प्रधानं, यस्यत्वार्थः तस्याप्राधान्यं । अतएव पुत्रेणसहेत्यत्र पुत्रस्याप्यागमनप्रतीतिः । अत्र नसहशब्दयोग एव विवक्षितः, " वृद्धोयूना " इति तदभावेपि तृतीयादर्शनात् । अतएवसहत्वमत्र तृतीयार्थः । सहशब्दः काचित्कः तात्पर्यग्राहकः । तदन्वयस्तु स्वनिरूपकपित्राश्रयकत्वसंबंधेन क्रियायामेव । साहित्यंच " सहैवदशभिःपुत्रैः " इत्यादौ तत्काले विद्यमानत्वं । पुत्रेणसहगतः इत्यादौचैकक्रियान्वयित्वमित्यादियोग्यतानुसारेण बोध्यं । ....

एवं " येनांगविकारः " ( २--३--२० ) इत्यनुशासनात् येनांगेन विकृतेनांगिनोविकारोलक्ष्यते ततस्तृतीया स्यादित्यर्थकात्: अक्ष्णा काण इत्यादौ तृतीया । अत्र चाक्षिपदं चक्षुर्गोळकपरं, वृत्तित्वं तृतीयार्थः, काणपदं चक्षुरुपघातवद्गोळकवत्परं, चक्षुर्गोळकवृत्ति चक्षुरुपघातवद्गोळकवानितिबोधः । तृतीयार्थ वृत्तित्वस्य तेन संबन्धेन भावनायामन्वयात् । तथा " इत्थंभूतलक्षणे " (२--३--२९)इत्यनुशासना जटाभिस्तापस इत्यादौ तृतीया । अत्र लक्षणत्वापरपर्यायं ज्ञाप्यत्वं तृतीयार्थः । जटाज्ञाप्यतापसत्ववानित्यर्थः । लक्षणत्वंच विशेषणोपलक्षणसाधारणम् । तेन, शरेन तापस इत्यपि साधु ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं "संज्ञोन्यतरस्यांकर्मणि" (२-३-२२) इत्यनुशासनात् संपूर्वकस्य जानातेः कर्मणि तृतीया, द्वितीयावा । पित्रा संजानीते, पितरं संजानीते । "हेतौ" (२-३-२३)इतिसूत्रेण हेतुत्वं तृतीयार्थः । तच्च यद्यपि कारणत्वरूपमेव, तथापि द्रव्यादिनिरूपितत्वघटितसंसर्गेण क्रियान्वयि हेतुत्वं । यथा – दण्डेनघट इत्यादौ । धात्वर्थनिरूपितत्वेन संसर्गेण क्रियान्वयितु करणत्वमिति विशेषः । अतएव हेतुत्वे लक्षणा । अथवा अखण्डोपाधिरूप करणत्वे शक्तिः, तत्परिचायके सखण्डोपाधौ लक्षणेतिपृथगनुशासनं । फलादिसाधारणं च तत् । अध्ययनेन वसति । तादर्थ्यमात्रं तृतीयार्थः । एवं "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीयावाच्या" इतिवार्तिकात्तृतीया । यथा – दास्या संयच्छते, ददातीत्यर्थः । शिष्टव्यवहारेतु भार्यायै संयच्छति । अयंच सर्वोपि शक्यलक्ष्यसाधारण स्तृतीयार्थः पूर्ववदेव लिंगानन्वयि पदोपात्तभावनायांश्रुतायांगम्यमानायांवान्वेतीतिबोध्यं । यथा–शतेनवत्सान् पाययति-पयः, शतेन परिच्छिन्नानित्यर्थः । परिच्छेदं प्रति तस्य करणत्वात् । अत्र गम्यमानत्वमध्याहृतपदेन बोध्यत्वं । अलं श्रमेणेत्यत्रतुनानुमेया, अलमिति निपातेनैव साध्यंनास्तीत्यर्थकेन साधनक्रियाया उपात्तत्वात् । अयमर्थश्च विभक्तिमात्रे बोध्यः । .... ....

एवं "चतुर्थी संप्रदाने" (२--३–१३) इति सूत्रात् संप्रदानत्वार्थिका चतुर्थी भावनान्वयिन्येव । तच्च "कर्मणायमभिप्रैतिससम्प्रदानम्" (१--४ -- ३२) इतिसूत्रे निरुक्तं । दानक्रियाकर्मकारकेण यमभिप्रैति -- संबध्नाति, स संप्रदानमिति सूत्रार्थः । सम्प्रदीयते अस्मै इत्यन्वर्थसंज्ञाबलाद्दान क्रियालाभः । .... .... ....

तथाच त्यज्यमानद्रव्योद्देश्यत्वेसति स्वीकारवत्त्वं संप्रदानत्वमिति न्यायसुधाकारादयः । तेषामयमाशयः, स्वीकारो यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः । विप्राय गांददातीत्यत्र लक्षणसमन्वयःस्फुटः । उद्देश्यत्व स्वीकारौच गवा विप्रस्य संबन्धः । तत्रोद्देश्यत्वं त्यागकालीनचतुर्थ्यंतपदोच्चारणजन्यज्ञानविषयत्वं । नच तत्र प्रमाणाभावः, शिष्टाचारस्यैव प्रमाणत्वात् ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



"नाम गोत्रे समुच्चार्य सम्यक् श्रद्धान्वितोददेत् ।
संकीर्त्य देशकालादि तुभ्यं संप्रददे इति ॥
नममेति स्वसत्ताया निवृत्तिमपि कीर्तयेत् ।
दानहोमादिकंकुर्या देवंश्रद्धासमन्वितः ॥"

इति हेमाद्रिधृत वृद्धवसिष्ठवचनाच्च । अतएव पूर्वदळं इन्द्रादि देवतायामतिव्याप्त मतःस्वीकारेति । तत्र प्रतिग्रहस्य नवमे निषेधात् । अतएव त्यज्यमानद्रव्योद्देश्यत्व मुक्तविधं इन्द्रादिरूपेर्थेशब्देच । त्यागकालीन-चतुर्थ्यंतपदोच्चारणकर्मत्वरूपं वा देवतात्वं तद्धितवाच्यं, वृद्धव्यवहारात् । "प्रजापतये जुहोती"त्यादौच तादृशदेवतात्वे लक्षणेति तस्यास्ततो दौर्बल्यमुक्त माकरे । विक्रेत्रादौच स्वीकारसत्त्वेपि पूर्वदळनैयत्याभावात् आद्यदळं । तत्रापि सर्वं त्यागादिकं अन्यलभ्यं । केवळमुद्देश्यत्वं स्वीकारश्च चतुर्थ्यर्थः । तथाचोक्तपरंपरासंबन्धेन विषयताघटितसामानाधिकरण्येनच त्यागद्वारको भावनान्वयः । एवं चैतादृशलक्षणानाक्रांते यत्र यत्र चतुर्थीप्रयोगः, तत्र सर्वत्र लक्षणेति । काशिकावृत्तिकारस्याप्ययमेवाभिप्रायः । ....

वैय्याकरणनव्यास्तु "यत्क्रियाकर्मसंबन्धजन्यफलभागित्वेनोद्देश्यं यत् तत्तक्रियासंप्रदानं । विप्रायं गां ददातीत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यस्स्वत्वाख्यो विप्रस्य संबंधः, तज्जन्यं फलं सुखादि, तद्भागित्वरूपेण उद्देश्यत्वं विप्र इति सदानक्रियासंप्रदानमिति लक्षणसमन्वयः । पितृस्वर्गोद्देशेन ब्राह्मणसंप्रदानकधनदाने पितुः स्वर्गादिरूपफलभागित्वेपि नसंप्रदानत्वं । तत्फलस्य पितरि धनसंबंधाभावेन तत्संबंधजन्यत्वाभावात् । अतएव कर्मकारकजन्यत्वं पितृस्वर्गादावपि कदाचि त्संभाव्येतेति संबंधजन्यत्वानुधावनं । अत्र "कर्मणाय" मिति द्वितीयानिर्देशात् कर्मकारकं प्रति संप्रदानस्य ईप्सितत्वं लभ्यते । तेन फलभागित्वेन ईप्सितत्वं संप्रदानत्वमित्यर्थः । विप्राय गां ददाति स्वर्गकाम इत्यादौच कर्मकारकस्य स्वर्गांगभूतदानांगत्वेपि तत्संबंधस्यानुषंगिक विप्रप्रीतिजनकत्वात् तस्यापि दानसाद्गुण्यजनक

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वेन ईप्सितत्वात् विप्रे संप्रदानत्वाविघातः । अजां ग्रामं नयतीत्यत्र अजासंबंधजन्यफलवत्त्वेन ग्रामस्य ईप्सितत्वाभावात् न ग्रामस्य संप्रदानत्वप्रसंगः । तादृशफलवत्त्वेन ग्रामस्येप्सितत्वेतु अजां ग्रामाय नयतीति प्रयोग इष्टएव । एवमेवच रजकाय वस्त्रं ददाति, रजकस्य वस्त्रं ददातीत्यादयः प्रयोगाअप्युपपादनीयाः । एवमुपाध्यायस्तस्मै चपेटिकां ददातीति महाभाष्यप्रयोगोपि संगच्छते । इतरथा स्वस्वत्वनिवृत्ति परस्वत्वापादनरूपदानघटितसंप्रदानत्वे ईदृशप्रयोगाणां भाक्तत्वापत्तेः । अतो बहुतरप्रयोगसाधारणमिदं संप्रदानत्वं । अत्रच विप्राय गां ददातीत्यत्र फलजनकत्वस्वरूपमुद्देश्यत्वन्निरूपितत्वंच चतुर्थ्यर्थः । प्रकृत्यर्थः चतुर्थ्यर्थे फले निरूपितत्वेच साक्षात्संबंधेनान्वेति । चतुर्थ्यर्थयोश्च परस्वत्वापादकस्वस्वत्वनिवृत्त्यनुकूलक्रियावाचिधात्वर्थतावच्छेदकस्वत्वेन्वयः । द्वितीयार्थवृत्तित्वस्यापि तत्र स्वस्वत्वेयान्वयः । तथाच विप्रवृत्तिसुखजनक विप्रनिरूपितगोवृत्तिस्वत्वजनक गोवृत्तिस्वस्वत्वनिवृत्तिजनकक्रिया चैत्रनिष्ठेति शाब्दबोधः । रजकाय वस्त्रं ददातीत्यादौ सम्पर्कगत्र धात्वर्थतावच्छेदके चतुर्थ्यर्थयोरन्वयः । चपेटांददातीत्यत्रापि चपेटासंयोग एव धात्वर्थतावच्छेदके तयोरन्वयः । वृक्षायोदकं सिंचतीत्यत्रापि वृक्षनिष्ठपुष्टिजनकत्व वृक्षनिरूपितत्वयोर्धात्वर्थतावच्छेदके उदकनिष्ठसंयोगेऽन्वय" इत्याहुः । तन्न, संप्रदानशब्दस्यावयवार्थबाधे न शक्त्यंतरकल्पने प्रमाणाभावात् । ग्रामं गच्छतीत्यत्र चैत्रस्य गमनक्रियाकर्मकारकग्रामजन्यसंयोगजन्यसुखभागित्वेन संप्रदानत्वापत्तेश्च । नचेष्टापत्तिः, ग्रामं गच्छति चैत्रायेति प्रयोगापत्तेः ।

नच "आकडारादेकासंज्ञा" (१-४-१) इत्यनुशासनात् संज्ञाद्वयप्रयुक्तकार्यानुपपत्तेः, "विप्रतिषेधे परं कार्यं" इतिस्मृतिवशात् गच्छतीत्यत्र कर्त्राख्याते कर्तृसंज्ञाया आवश्यकत्वे पूर्वाया स्संप्रदानसंज्ञायाबाधो पपत्तिरिति वाच्यं । तथात्वे चैत्रेण ग्रामो गम्यत इतिवत् चैत्राय ग्रामो गम्यत इति प्रयोगापत्तेः । कर्तृत्वविवक्षायां तृतीयाप्रयोगवत् संप्रदानत्वविवक्षायां चतुर्थीप्रयोगस्य निवारयितुमशक्यत्वात् । इतरथा ग्रामं गच्छ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ति ग्रामे गच्छतीति विवक्षाभेदेन प्रयोगद्वयानापत्तेः नच चै त्रः स्वस्मै गच्छतीतिवत् तादृशप्रयोगे इष्टापत्तिः, स्वस्मै गम्यत इत्यस्य स्वार्थं गम्यत इति विवरणानुरोधेन तादर्थ्यचतुर्थीत्वेन संप्रदानविभक्तित्वानुप पत्तेः । .... .... ....

नचैतद्दोषवारणाय क्रियाकरणत्वं कर्मविशेषणं , ग्रामश्च नगमनकरणं, देयंतु दानक्रियाकरणमिति नासंभव इति वाच्यं । देयस्यापि स्वत्वरूपफलां-शे करणत्वं, नतु तदनुकूलक्रियांश इति गमनेपि तदविशिष्टं । गमनफल स्य संयोगस्यापि ग्रामजन्यत्वाविशेषात् । विप्रनिष्ठफलसामान्याभावेपि विप्राय म या गौर्दत्ता, नतु तस्य कश्चित् भोगो जात इत्यादि व्यवहारानुपपत्ते र्नफलघटितसंप्रदानत्वं युक्तं । यस्तु प्रतिग्रहाभावेपि " मनसापात्रमुद्दिश्य ज लमध्ये जलं क्षिपेत् " इति वचनात् पात्रोद्देश्यकत्यागमात्रेणास्मै म या दत्ता, नत्वनेन गृहीतेति व्यवहारः, स दानस्यैव तत्र परस्वत्वोत्प त्यभावेना जातत्वात् भाक्त एवेति नपूर्वमते तादृशस्थले अव्याप्त्यापत्तिः ।

वस्तुतस्तु मतद्वयेपि पदार्थद्वयेपि शक्तिद्वयकल्पनस्यावश्यकत्वादन्य मतेच पदार्थैकदेशे फले प्रकृत्यर्थस्यान्वयापत्तेः, निरुक्तसंप्रदानत्वाज्ञानेपिच विप्राय गां ददातीति वाक्यात् विप्रसंप्रदानकं गोकर्मकं दानमिति बो धोदयात् देयद्रव्यनिष्ठस्वत्वनिरूपकत्वरूपं तत्समनियतमखण्डोपाधिरूपमेववा संप्रदानत्वं युक्तमाश्रयितुं । तदेवच शाक्तश्चतुर्थ्यर्थः । तत्र प्रकृत्यर्थो विप्रः साक्षादाधेयत्वेनैवान्वेति । तस्यच धर्मिग्राहकप्रमाणेन ससंबंधिकत्वकल्पनात् , निरूपकापेक्षायां " कर्मणायमभिप्रैति " ( १ -- ४ -- ३२ ) इति सूत्रात् कर्म कारकनिरूपकत्वावगतेः स्वनिरूपकदेयद्रव्यकर्मकदानानुकूलत्वसंसर्गेण कृता न्वयः । मुख्यदानातिरिक्तेच सर्वत्र भाक्त स्संप्रदानव्यवहारः । अतएव " प्रजापतये जुहोति " त्यादौ लक्षणयैव देवतात्वं प्रतिपाद्यत इति चतुर्थ्या स्तद्धितापेक्षया दौर्बल्यम् । अतएव दानातिरिक्तयत्किंचित्क्रियाजन्य फलभागित्वरूपभाक्तसंप्रदानत्वेपि चतुर्थीविधानार्थं "क्रियाग्रहणं कर्तव्य" मिति वार्तिकं क्रिययायमभिप्रैति सोपि संप्रदानसंज्ञस्स्यादित्यर्थकं । नचैवं क्रि-याफलशालित्वेन घटं करोतीत्यादौ चतुर्थ्यापत्तिः, परत्वेन द्वितीयया च

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तुर्थ्यां बाधात् । यत्किंचित्क्रियाजन्यफलशालित्वात्मकस्य भाक्तसंप्रदानत्वस्य सकर्मकाकर्मकसाधारणस्य सकर्मकमात्रविषयिण्या द्वितीयया बाधोपपत्तेश्च । अतएव पत्ये शेते इत्यत्र चतुर्थी । अतएवमुख्य दानातिरिक्तसकर्मकधातुस्थलेपि यत्र वृक्षायोदकं सिंचतीत्यादौ कर्मकारकांतरं लब्धं, तत्रापि वृक्षे निरुक्तभाक्तसंप्रदानत्वविवक्षायां चतुर्थी भवत्येव । कर्मांतराभावेतु द्वितीयैव । तत्रापि गत्यादिसकर्मकधातुविशेषस्थले पुनः प्रतिप्रसवार्थं " गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि " ( २ -- ३ -- १२ ) इत्यनुशासनं चेष्टारूपकर्मणि अध्वभिन्ने द्वितीयाचतुर्थ्यौ स्यातामित्यर्थकं । ग्रामं गच्छति ग्रामाय गच्छति, अचेष्टायांतु मनसा हरिं व्रजति, अध्वनितु पन्थानं गच्छति, यत्नाधिष्ठितएव पथ्ययं चतुर्थीपर्युदासः । यदातु उत्पथात् पंथा एव क्रमितुमिष्यते तदा उत्पथेन पथे गच्छतीति भवत्येव चतुर्थी । अत्र सर्वत्र आश्रयत्वं लक्षणया चतुर्थ्यर्थः । तच्च स्वनिरूपकफलजनकक्रियानुकूलत्वसंसर्गेण कृतावन्वेति । .... ....

यत्तु " कर्मणायमभिप्रैति " इति सूत्रस्थ यथाश्रुतभाष्यस्वरसा द्वाक्यपदीयकैय्यटादौ " क्रियाग्रहणंकर्तव्य " मिति वार्तिकप्रत्याख्यानं कृतं । तथाहि, सर्वाहिपाकादिक्रिया ज्ञानेच्छादिक्रियाकर्म, तद्यत्रपत्येशेतइत्यादौ चतुर्थ्यन्तप्रयोगस्तत्रानुमेयां ज्ञानादिक्रियां विवक्षित्वा तत्कर्मत्वेन शयनं विवक्ष्यते, तत्र ज्ञानादिक्रियाकर्म कारकभूत शयनं प्रतीप्सितत्वेन पत्युस्संप्रदानत्वोपपत्तेः नार्थो वार्तिकेन । यत्रतु घटं करोति, ओदनं पचति, हरिं मनसा व्रजति, पंथानं गच्छती, त्यादौ द्वितीयाप्रयोगः, तत्र ज्ञानादिक्रियया अभेदंपाकादिक्रियायां विवक्षित्वा तांप्रति ईप्सिततमस्य ओदनादेः कर्मत्वं, ग्रामं गच्छतीत्यादौ तु द्विविधप्रयोगसत्त्वात् भेदाभेदोभयविवक्षयोभयसंप्रदानस्य दानक्रियामात्रनिरूपितत्वानंगीकाराच्च पत्येशेते इत्यादावपि मुख्यसंप्रदानत्वाविरोध इति ।

तन्न -- पच्यादिधातुभ्यो ज्ञानाद्यनुभवाभावात् नियमेनारोपे प्रमाणाभावाच्च । विभ्रमाभावे कारणाभावेन प्रयोगगतसाधुत्वज्ञानाभावात् , भेदाभे

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दव्यवस्थाप्रतीत्यनुपपत्तेश्च । तस्मात् क्रियाग्रहणं कर्तव्यमिति न प्रत्याख्येयं । अतएव भाष्यकारेणापि " कर्मणे " तिसूत्रे प्रत्याख्यातमपि " गत्यर्थकर्मणी " ति सूत्रे क्रियाग्रहणमपि तत्र चोद्यत इति ग्रन्थेन विधित्वं तस्याश्रितमेव । नचैवं " गत्यर्थ कर्मणी " तिसूत्रप्रत्याख्यानानुपपत्तिः । धात्वर्थतावच्छेदकफलशालित्वरूपे तत्समनियताखण्डोपाधौवा विवक्षितेद्वितीया, तदनवच्छेदकक्रियाजन्यफलभागित्वे विवक्षिते चतुर्थीत्येव उभयोपपत्तेः, सूत्रवैयर्थ्यमित्याशयात् । गमनजन्यस्वास्थ्याद्याश्रयत्वेन ग्रामाय गच्छतीति प्रयोगोपपत्तेः । नचैवमध्वादिरूपापवादविषयेपि प्रयोगद्वयापत्तिः । तदंशे अप्रत्याख्यानस्य भाष्यसिद्धत्वात् । भाष्यकारोहि अध्वादीनां न स्वरूपेणापवादविषयता, स्त्रियं गच्छतीत्यत्र द्वितीयानियमानापत्तेः । अपितु संप्राप्तत्वेन प्राप्तएव पंथाः स्त्रीच, तत्रपंथानं गच्छति स्त्रियं गच्छति इति द्वितीयानियम इति प्रतिपादयन् 'असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इतिवक्तव्य'मित्याह वृत्तिकारोपि अमुमेवार्थमनुमन्यते ॥ .... ....

अतस्सिद्धं धात्वर्थतावच्छेदकं यत्क्रियाफलं तदाश्रयत्वमेव एवमादिस्थले भाक्तसंप्रदानत्वमिति । एवं " रुच्यर्थानां प्रीयमाणः "(१--४--३३)इत्यनुशासनात्, रुच्यर्थधातूनां योगे प्रीयमाणो रुचिविषयीभूतद्रव्यजन्यप्रीतिमानर्थोपि संप्रदानसंज्ञस्स्यादित्यर्थका चैत्राय रोचते मोदक इत्यादौ चतुर्थी । अत्र मोदकेपि धातुयोगस्य सत्त्वात् तद्वारणाय प्रीयमाण इति वास्तवंच विशेषणं । वृत्तित्वं लक्षणया चतुर्थ्यर्थः । स्वनिरूपकरुचिनिरूपकत्वेनाख्यातान्वयि विषयत्वं लक्षणया आख्यातार्थः । अभिलाषो धात्वर्थः । चैत्रवृत्तित्ववद् रुचिविषयत्वं मोदकवृत्तीति शाब्दबोधः । एवं " श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमानः " (१--४--३४) इत्यनुशासनात् एषां धातूनां प्रयोगे बोधयितुमिष्टः संप्रदानसंज्ञः स्यादित्यर्थकात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपतेवा इत्यादौ चतुर्थी । श्लाघा स्तुतिः । ह्नवनं संगोपनं । अत्र वास्तवे ज्ञापयितु मिष्यमाणेसति चतुर्थी । अत्राद्यधातुद्वये सकर्मकत्वात्कर्मत्वं चतुर्थ्यर्थः । द्वितीया बाधेनच चतुर्थी । तृतीयचतुर्थयोस्त्वकर्मकत्वात् षष्ठीबाधेन संबंधश्चतुर्थ्यर्थः । अथवा सर्वत्र श्लाघा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिज्ञापनं लक्षणया धात्वर्थः । तंप्रति कृष्णस्य कर्मत्वेन द्वितीयाप्राप्तौ चतुर्थी । एवं " धारेरुत्तमर्णः " ( १--४--३५ ) इति सूत्रेण धारयतेः योगे उत्तमर्णः उक्तसंज्ञस्स्यादित्यर्थकेन चैत्राय शतं धारयतीत्यत्रचतुर्थी । अत्र चतुर्थ्यर्थः उत्तमर्णत्वापरपर्यायप्रत्यर्पणीयत्वाख्यः सम्बन्धः । तस्यच स्वनिरूपकद्रव्यकर्मकसाधारणानुकूलत्वेन कृतावन्वयः । तथाचचैत्रप्रत्यर्पणीयं शतंधारयतीत्यर्थः । यदातु स्वत्वाख्यसंबंधविवक्षा तदा चैत्रस्य शतं धारयतीति प्रयोगः । नचास्यमुख्यसंप्रदानत्वविवक्षयैव चतुर्थ्युपपत्तेः सूत्रान्तरवैयर्थ्यं, दानक्रियाभावेन तस्याप्राप्तेः, प्रत्यर्पणीयत्वविवक्षयातत्सार्थक्याच । अतएव क्रियाग्रहणं कर्तव्यमित्यनेनापि नवैय्यर्थ्यं ॥ ....

एवं " स्पृहेरीप्सितः " ( १-४-३६ ) इत्यनुशासनात् स्पृहयतियोगइष्टः संप्रदानसंज्ञस्स्यादित्यर्थकात् पुष्पेभ्यःस्पृहयतीत्यत्र चतुर्थी । अत्र चतुर्थ्यर्थः कर्मत्वं,संबंधत्वेन विषयत्वरूपस्संबन्धश्च । तयोश्च तात्पर्यानुरोधेन एकैकशः समुदितयोर्वा बोधः । तेन निरवकाशत्वात् संप्रदानसंज्ञा कर्मसंज्ञाशेषषष्ठ्योर्बाधिकेति वाक्यपदीयप्रभृतयः ॥

वस्तुतस्तु ईप्सितग्रहणात् ईप्सिततमत्वप्रयुक्तकर्मसंज्ञायास्सम्बन्धसामान्यप्रयुक्तशेषषष्ठ्यावा बाधे प्रमाणाभावः । तेन विषयित्वमेव तत्त्वेन चतुर्थ्यर्थः । तस्यच स्वाश्रयस्पृहावत्त्वेनाख्यातार्थाश्रयत्वेन्वयः । कर्मत्वविवक्षायां पुष्पाणि स्पृहयतीति प्रयोगः । शेषत्वविवक्षायांच पुष्पस्य स्पृहयतीति । अतएव स्पृहणीयशोभ इति कर्मत्वार्थकःप्रत्ययः । "कुमार्य इव कांतस्य त्रस्यन्ति स्पृहयंतिचे" ति षष्ठीप्रयोगोपि संगच्छते । हरदत्तादयोप्येवं । " एवं क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः"(१-४-३७) इत्यनुशासनात् क्रुधद्रुहाद्यर्थानां धातूनां योगे यं प्रति कोपः ससंप्रदानसंज्ञस्स्यादित्यर्थकात् शत्रवे क्रुध्यति, द्रुह्यति, ईर्ष्यति असूयतीत्येवं चतुर्थी । अत्र क्रोधोमर्षः, द्रोहोऽ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पकारः । ईर्ष्याऽसहनं । असूयागुणेषुदोषारोपः । अत्राद्ययोरकर्मकत्वात्तद्योगे-षष्ठी प्राप्तौ, अंत्ययोश्च सकर्मकत्वात् द्वितीया प्राप्तौ, चतुर्थीविधिः । तद्वाधेन यं प्रति कोप इत्यनेन यत्संबंधित्वयत्कर्मत्वयोरुपादानात् । अतएवनात्र पूर्ववत् द्वितीयांतादिप्रयोगोपि । चतुर्थ्यर्थोपि सएव । वास्तवो यत्र कोपः तत्र कर्मत्वादौ चतुर्थीत्यर्थः । कोपपदोपादानात् भार्यामीर्ष्यतिमैनामन्योद्राक्षीदित्यत्र नचतुर्थी । अतएव आद्ययोर्धात्वर्थयोरुपसर्गयोगे कर्मसंज्ञाविधिः, शत्रुमभिक्रुध्यति अभिद्रुह्यतीत्यादौ । "क्रुधद्रुहोरुपसृष्टयोः कर्म"( १-४-३८)इत्यनेन । एवं " राधीक्ष्योर्यस्य विप्रश्नः" ( १-४-३९ ) इत्यनेन एतयोर्योगे विविधप्रश्नसंबंधी संप्रदानसंज्ञस्स्यादित्यर्थकेन कृष्णायराध्यति ईक्षतेवा इत्यत्र चतुर्थी, विविधं पृष्ठोगर्गः कृष्णसंबंधिशुभाशुभंपर्यालोचयतीत्यर्थः । अतएव संबंधित्वं चतुर्थ्यर्थः । एवं " प्रत्याङ्भ्यांश्रुवः पूर्वस्यकर्ता " ( २-- ४ -- ४० ) इत्यनुशासनात् आभ्यामुपसर्गाभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्तासंप्रदानसंज्ञस्स्यादित्यर्थकात् विप्रायगांप्रतिश्रुणोतीत्यत्र चतुर्थी ।अत्रान्यदीयप्रवर्तनापूर्वकोभ्युपगमोधात्वर्थः, वृत्तित्वंचतुर्थ्यर्थः । सचस्वाश्रयप्रवर्तनाजन्याभ्युपगमानुकूलत्व संसर्गेण कृतावन्वेति, चैत्रनिष्ठप्रवर्तनाप्रवर्तितः प्रतिजानीतइत्यर्थः । एवं "अनुप्रतिगृणश्च"(१-४-४१)इत्यनेनाभ्यां परस्यगृणाते र्योगेपूर्वव्यापारस्य कर्तृभूतकारकंसंप्रदानसंज्ञंस्यादित्यर्थकेनहोत्रे अनुगृणाति,प्रतिगृणातीत्यत्र चतुर्थी, शंसनपूर्वकप्रोत्साहनंधात्वर्थः,वृत्तित्वरूपस्संबंधः कर्तृत्वञ्च चतुर्थ्यर्थः, तयोश्चक्रमेणशंसनप्रोत्साहनद्वारकोभावनान्वयः । होता प्रथमंशंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः । एवं "परिक्रयणे संप्रदानमन्यतरस्याम्"(१-४-४४)इत्यनेन य न्नियतकालं भृत्यास्वीकरणं परिक्रयणं तस्मिन् साधकतमंकारकं विकल्पेन संप्रदानसंज्ञंस्यादित्यर्थकेन शतायशतेनवा परिक्रीतइत्यत्र विकल्पेन चतुर्थी ।करणत्वं चतुर्थ्यर्थः । एवं "तादर्थ्येचतुर्थी वाच्या " इति वार्तिकादुपकारकापकारकसाधारणं तदुद्देश्यकत्वं लक्षणया चतुर्थ्यर्थः, मुक्तयेहरिं भजति,मशकायधूम इत्यादौ,तच्च जनकत्वादिनाऽनेकप्रकारेण

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेनब्राह्मणाय दधितिष्ठतीत्यादावपि द्रव्यद्वारकक्रियासंबन्धेपि चतुर्थी । अतए वक्रियाग्रहणं कर्तव्यमित्यनेनापि नगतार्थत्वं । एवं "क्लृपिसंपद्यमानेच" इत्य नेन प्रकृतिरूपं कारणं कार्यात्मनायदासंपद्यते तदा कार्यवाचकाच्चतुर्थीस्या त् क्लृनयर्थकधातुयोगे । मृत् घटायकल्पते संपद्यते जायतेवेत्यादौ । मृत् घटाकारेण परिणमतइत्यर्थः । इदंच कार्यकारणयोः भेदविवक्षायाम । पार्ष्ठिकाभेद-विवक्षायां मृद्घटःकल्पतेइतिप्रथमैव । "जनिकर्तुःप्रकृतिः"(१-४-३०)इत्यनेन मृदो पादानत्वविवक्षायान्तु मृदोघटः कल्पतइत्यत्रकारणे पंचमी, कार्येतु अभिहितत्वात्प्र थमैव । नच तादर्थ्ये चतुर्थीत्यनेनगतार्थत्वं, परिणामत्वत्वेन बोधस्यविवक्षितत्वात् । एवमग्रेपि । तथा"उत्पातेनज्ञापितेच"इत्यनेन उत्पातत्वेन ज्ञापनविषयेचतुर्थीत्यर्थकेन वातायकपिलाविद्युद्विद्योततइत्यत्र चतुर्थी । तत्त्वेनज्ञापकत्वंचतुर्थ्यर्थः । एवंहितसु-खादियोगेपि चतुर्थी,ब्राह्मणाय हितंसुखंवेत्यादौ । इदंचतद्योगे चतुर्थीसमासविधा नरूपज्ञापकवशात् । संबन्धित्वं चतुर्थ्यर्थः । ....

एवं"क्रियार्थोपपदस्यकर्मणिस्थानिनः"(२-३-१४)इत्यनेनक्रियावाचि उप पदंयस्य तस्य स्थानिनःतुमुण्ण्वुल्रूपस्याप्रयुज्यमानस्य कर्मणिचतुर्थीस्यादित्यर्थके न फलेभ्योयाति,नमस्कुर्मोनृसिंहायेत्यादौ चतुर्थी । फलान्याहर्तुं नृसिंहमनु-कूलयितुमित्यर्थः । इदंच तुमुनन्तस्याप्रयोगे । ण्वुलन्तस्याप्रयोगेतु फलान्या हारकइत्यर्थः । द्वितीयापवादार्थं कर्मग्रहणं । प्रयुज्यमानेतु द्वितीयैव । अ त्राप्रयुज्यमानाहरणानिरूपितं कर्मत्वं चतुर्थ्यर्थः । तस्यच स्वनिरूपकाहरण-क्रियोद्देश्यक यानानुकूलत्वं कृतौसंसर्गः । संसर्गकोटिप्रविष्टत्वादेवचाहरणस्या शा ब्दत्वेपि नक्षतिः ॥ .... ....

एवं "तुमर्थाच्चभाववचनात्"(२-३-१५)इतिसूत्रेण "भाववचनाश्च" (३-३-१२) इतिसूत्रेण विहितोयस्तुमुनासमानार्थकःप्रत्ययः तदर्थाच्चतुर्थीस्यादि त्यर्थकेन यागाय यातीत्यादौ चतुर्थी । यष्टुंयातीति तदर्थः । सच प्रकृते घञ् । नच तादर्थ्येचतुर्थीत्यनेन गतार्थत्वं, तुमुनेव तादर्थ्यस्यापि घञा उक्ततया साधुत्वार्थं प्रथमातिक्रमे कारणाभावेन प्रथमाप्राप्तौ चतु र्थीविधिसार्थक्यात् । नच शुद्धभावएव घञंव्युत्पाद्य तादर्थ्यचतुर्थ्युपपत्तेः



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भाववचनाश्चेति सूत्रवैयर्थ्यम । क्रियार्थायांक्रियायां विशेषविहितेन तुमुना घञो बाधापत्तेः, तदन्तोपरितादर्थ्यचतुर्थ्यप्रसक्तेः । अतस्तद्बाधार्थं घ ञादेरपि तदर्थेविधानेकृते प्रथमाबाधार्थचतुर्थीविधिसार्थक्यात् ।

एवं " नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च " ( २-३-१६ ) इति शास्त्रेण एभिः शब्दैर्योगे चतुर्थी स्यादित्यर्थ केन हरये नमइत्यादौ चतुर्थी । उद्देश्यत्वं चतुर्थ्यर्थः । तस्यच स्वनिरूपकनमनास्तित्व वैशिष्ट्यमाख्यातार्थे संसर्गः । उपपदस्य संसर्गघटकत्वे तात्पर्यग्राहकत्वाच्चो पपदविभक्तित्वं । नच तादर्थ्यचतुर्थ्यैव ब्राह्मणाय दधीत्यादाविव गतार्थत्वम् । नमःपदयोगे षष्ठीव्यावृत्त्यर्थत्वेन नमनार्थकपदान्तरयोगेवा चतुर्थीव्याव र्तकत्वेनच सार्थक्यात । यदातुनमनस्य धात्वर्थत्वं तदा धातोस्संसर्गघटकत्वे तात्पर्यग्राहकत्वात् कारकविभक्तित्वेन देवान्नमस्करोतीत्यादौ कर्मत्वार्थिकाद्वितीयापि नानुपपन्ना । प्रजाभ्यःस्वस्ति । अग्नयेस्वाहा । पितृभ्यः स्वधा । दैत्येभ्योहरिरलम् । पर्याप्त्यर्थकश्चायमलंशब्दः । उपलक्षणंच प्रभुसमर्थशक्तादिशब्दानां । तस्मैप्रभवतीति प्रयोगः । नत्वत्र षष्ठीव्यावृत्तिः, तेन "प्रभुर्बुभूषु र्भुवनत्रयस्ये " ति नविरोधः । वषट् इन्द्राय । चकारः षष्ठीनिषेधार्थकः ।

एवं " मन्यकर्मण्यनादरेविभाषाप्राणिषु " ( २ - ३ - १७ ) इत्यनेन प्राणिवर्जितमन्यतेः कर्मणितिरस्काररूपानादरेविवक्षिते चतुर्थी वास्यादित्यर्थकेन नत्वांतृणम् तृणायवामन्य इत्यत्र वैकल्पि की चतुर्थी । अत्रकर्मत्वं चतुर्थ्यर्थः । अत्रच तृणपदं तृणसदृशपरं , तथाच तृणसदृशकर्मभिन्नं त्वत्कर्मकं ज्ञानमित्यर्थः । त्वत्कर्मकज्ञाने तृण सदृशकर्मभेदश्चात्र त्वयि तृणसदृशभेदे पर्यवस्यति । तत्र चानादरविव क्षायां त्वां तृणसदृशमपि नमन्य इत्यर्थः फलितः । अतोनोत्कृष्टत्वविव क्षायां चतुर्थीप्रयोगः । अत्र मन्य इत्युपादानात् मन्व इत्यत्रनचतुर्थी, तेन त्वां तृणं मन्व इत्येव प्रयोगः । अत्राप्राणिष्वित्यपनीय नौकाकान्न शुकसृगालवर्ज्येष्वितिवाच्यम । तेनाप्राणित्वेपि नत्वां नावमन्नंवामन्यइत्यादौ नचर्थी । प्राणित्वेपिच नत्वां शुने मन्य इत्यादौ भवत्येव चतुर्थी ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नचैवं मन्यतिकर्मत्वाविशेषाद्युष्मच्छब्दादपि चतुर्थ्यापत्तिः । अनादरइत्यस्य क र्मविशेषणत्वेनानादरव्यञ्जके कर्मणि चतुर्थीविधिप्रतीते स्तदप्रसंगात् । तत्सिद्धं सर्वत्र चतुर्थ्या भावनान्वय इति ।

एवं पञ्चम्यपि तत्रैवान्वेति । तदर्थश्च "अपादानेपञ्चमी" ( २-३-२८) इतिसूत्रादपादानत्वरूपः । तच्च "ध्रुवमपायेपादानम्" ( १-४-२८ ) इतिसूत्रनिरुक्तं । तथाहि - अपाये — विभागे, ध्रुवं — निश्चलं - क्रियानाश्रयं, य त्तदपादानसंज्ञं स्यादिति सूत्रार्थः । तथाच क्रियानाश्रयत्वेसति क्रियाजन्य विभागाश्रयत्वमपादानत्वं । अस्तिचेदं वृक्षात्पर्णं पततीत्यत्र वृक्षेपतनक्रिया नाश्रयत्वात् पतनक्रियाजन्यविभागाश्रयत्वाच्च । अत्रचोसीने घटे पर्णेचातिप्रसं गवारणार्थं दळद्वयम् ।

क्रियानाश्रयत्वञ्च यद्यपि सामान्यतोनाक्रियावन्निष्ठभेदप्रतियोगित्वं । प्र- तियोगितासामान्यप्रवेशे पतनवत्यपि पर्णेद्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्त्वा त्स्वस्मात्पततीति प्रयोगापत्तेः । प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताप्रवे- शेच द्रव्यात्पततीत्यस्यानापत्तेः, पतनवति पर्णे द्रव्यत्वावच्छिन्नभेदाभावा त् । तथापि प्रकृत्यर्थतावच्छेदकाश्रयय त्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगितानि- वेशेनैव क्रियावन्निष्ठभेदप्रतियोगित्वं निर्वाच्यम् । तच्चपतमानपर्णव्यक्तिनिष्ठभे दनिरूपितयत्किञ्चित्पर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वमुदासीने पर्णेपि, अतः क्रियाजन्यविभागाश्रयत्वोपादानमिति नवृक्षात्पततिपर्णे पर्णात्पर्णम्पततीतिप्र योगः । अत्रविभागः परसमेवतत्वंचविभक्तिशक्यम् । तत्रच प्रकृत्यर्थो वृ क्षोविभागे पदार्थैकदेशेभेदेच समवेतत्व प्रकृत्यर्थतावच्छेदकाश्रयविभागाश्रयीभू त व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गाभ्यामन्वेति । विभागः परसमेवत त्वञ्च जनकत्वस्वरूपसम्बन्धाभ्यां पतनाख्यधात्वर्थेन्वेति । तथाच वृक्षसमवेत विभागजनक वृक्षत्वरूप प्रकृत्यर्थतावच्छेदकाश्रय विभागाश्रयीभूतव्यक्तित्वाव च्छिन्नप्रतियोगिताकत्वसंसर्गेण वृक्षवद्भेदाश्रयसमवेतपतनाश्रयः पर्णमितिशाब्द बोधः । अत्र प्रकृत्यर्थतावच्छेदकाश्रय यत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगि ताकत्वस्यैव प्रकृत्यर्थस्य वृक्षस्य पंचम्यर्थे भेदे संसर्गत्वोक्तौवृक्षात्पतति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पर्णे पर्णात्पततीति प्रयोगापत्तिः । तत्पतनस्यापि प्रकृत्यर्थतावच्छेदकपर्णत्वाश्रययत्किञ्चिदुदासीनपर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्पतमानपर्ण वृत्तित्वात् । पतमानपर्णवृत्तिविभागजनकत्वाच्च । अतस्तद्व्यावृत्त्यर्थं प्रकृत्यर्थस्य भेदेन सहान्वये संसर्गघटकव्यक्तौ पतनजन्यविभागाश्रयत्वं विशेषणमिति केचिन्नैयायिकनव्याः ।

अन्येतु गुरुभूतसंसर्गघटितव्युत्पत्तिविशेषकल्पनायां गौरवापत्तेः क्रियानाश्रयत्वं न क्रियावन्निष्ठभेदप्रतियोगित्वं, अपितु क्रियावत्प्रतियोगिकभेदाश्रयत्वम् । तदा क्रिया प्रतियोगितावच्छेदिका । भेदश्चाभावीयविशेषणतासंबंधेनैवापादानवृत्तिः, तच्चोदासीनपर्णादावपीति तद्व्यावृत्त्यर्थविशेष्यदळम् । तथा चास्मिन् पक्षे विभागो भेदश्चपञ्चम्यर्थः । तत्रचाधेयतया प्रकृत्यर्थान्वयः । तयोश्च जनकत्वप्रतियोगितावच्छेदकत्वोभयसंसर्गेण धात्वर्थान्वयः । वृक्षवृत्तिविभागजनक वृक्षनिष्ठभेदप्रतियोगितावच्छेदक पतनेत्यादिशाब्दबोधः । अत्रच ग्रामादागच्छतोऽश्वात्पतति इत्यत्र अश्वग्रामयोः गमनपतनापादानत्वव्यावृत्त्यर्थं लक्षणे क्रियाविशेषविवक्षाद्रष्टव्या । तेनयन्निष्ठविभागजनकत्वेन यन्निष्ठभेदप्रतियोगितावच्छेदकत्वेनच यत्क्रिया विवक्षिता तत्वं तत्क्रियापादानत्वं इतिनिष्कर्षः । ततश्च पतनस्याश्वएव गमनस्यच ग्रामएवापादानात्वमितिसिद्ध्यति । अतएव परस्परस्मान्मेषावपसरतइत्यत्रोभयकर्मजविभागस्थले विभागस्यैकत्वेपित त्क्रियाविशेषानादायैव तदनाश्रयस्य तदपादानत्व निर्वचनीयम् । विवक्षापदोपादानेनच यदानोक्तरूपेण विवक्षा , अपितु अवयवावयविविभागस्यैव विवक्षा , तत्र वृक्षस्य पर्णं पततीत्येव प्रयोग इति ननत्रापादानत्वप्रसङ्गः । यत्पदं च यत्पदाभिधेयपरं, तेन वृक्षात्तस्मिन्नेववृक्षे पर्णं पततीत्यत्र सप्तम्यन्तपदाभिधेयत्वविशिष्टस्यनापादानत्वम् ॥

नचैवमपि वृक्षंत्यजतीत्यत्र स्पन्दतेपर्णमित्यत्रच वृक्षे अपादानत्वापत्तिः, क्रियाजन्यविभागाश्रयत्वात् क्रियानाश्रयत्वाच्चेति वाच्यम् । वृक्षे अपादानत्वसत्त्वेपि बलीयस्या कर्मसंज्ञया फलाश्रयत्वसत्त्वेनत्यागकर्मत्वस्यापि सत्त्वात् द्वितीयोत्पत्तेः पंचम्यप्रयोगात् । स्पन्दतेपर्णमित्यत्र आसनाच्चलितः इत्यादाविव वृक्षात् स्पन्दतइत्यस्यापीष्टत्वात् । अतएव स्पन्दतइत्यत्रा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पादानत्वव्यावृत्त्यर्थं क्रियापदं सकर्मकधातुपरमिति केषांचित्समाधानमपास्तम् । वृक्षंत्यजतीत्यत्रैवमनिवारणाच्च । .... ....

अथवा उभयत्र अपादानत्वव्यावृत्त्यर्थं धात्वर्थतावच्छेदकफलभिन्नत्वं विभागविशेषणंवाच्यम्, त्यजेर्हि विभागानुकूलोव्यापारोवाच्यः, अतो विभागस्य धात्वर्थतावच्छेदकत्वात् तद्भिन्नविभागाश्रयत्वाभावेन न वृक्षेपादानत्वप्रसंगः । स्पन्दतेश्च धात्वर्थतावच्छेदकफलाभावेन तद्भेदस्याप्रसिद्ध्या तादृशविभागाप्रसिद्धेः नापादानत्वप्रसक्तिः । .... .... ....

अथवा यन्निष्ठविभागेत्यपहाय यन्निरूपितेति लक्षणे विवक्षितम्, वृक्षं त्यजतीत्यत्र वृक्षनिष्ठो विभागो विवक्षितः, नतु वृक्षनिरूपितइति नातिप्रसंगः । वृक्षात्पर्णमित्यत्रच प्रकृत्यर्थस्य निरूपितत्वं विभागे संसर्गः । तथाच वृक्षनिरूपित विभागजनकं वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं यत्पतनमित्यादिशाब्दबोधः । स्पन्दतइत्यत्रापादानत्ववारणाय क्रियासकर्मिकैव लक्षणे विवक्षिता । आसनाच्चलितः सार्थाद्धीयतेपशुरित्यादयः प्रयोगास्तु वक्ष्यमाणावधित्वरूप पंचम्यर्थमादाय नेयाइत्याहुः । वैय्याकरणनव्याअपि केचिदेवम् ।

वस्तुतस्तु गुरुभूतशक्यतावच्छेदक भेदेनानेकशक्तिकल्पनापेक्षया प्रकृत्यर्थस्य पंचम्यर्थद्वयान्वयेव्युत्पत्तिद्वयम्, पंचम्यर्थस्यच धात्वर्थद्वयान्वयेव्युत्पत्तिद्वयमितिकल्पनापेक्षया चानुगतव्यवहारसाक्षिकतयापादानत्वमखण्डोपाधिरूपमेकं धर्मं निरुक्तापादानत्वसमव्यापकं कल्पयित्वा तत्रैव पंचम्याश्शक्तिं कल्पयित्वा तस्मिंश्च प्रकृत्यर्थान्वयायैकां, तस्यचाख्यातार्थान्वयायैकां, व्युत्पत्तिं कल्पयितुमुचितम् । प्रकृत्यर्थस्यच तत्राधेयतयान्वयः, तस्यच स्वनिरूपकधात्वर्थानुकूलत्व संसर्गेणकृतावन्वयः । तदेवं प्रचुरप्रयोगादपादानत्वं पंचम्याश्शक्यं । यत्रतु वृक्षाद्विभजतइत्यादौ विभागजन्य विभागाश्रयत्वाभावान्नोक्तापादानत्वसंभवः, तत्र लक्षणया स्वरूपसंबन्धविशेषरूपमवधित्वं पंचम्यर्थः, तत्रापि-अपाये-विभागे, ध्रुवं-अवधिभूतं,अपादानसंज्ञं स्यादिति वाक्यभेदीयादौ सूत्रं व्याख्यातम् । तस्यापि धात्वर्थघटितसंसर्गेण भावनान्वयः । वृक्षनिष्ठावधितानिरूपकविभागानुकूलकृतिः कर्तृवृत्ति रिति शाब्दबोधः । स्वनिष्ठविभागावधित्वस्य स्वस्मिन्न

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावाच्च न स्वस्माद्विभजतइति प्रयोगः। सर्वेष्वपि पूर्वोक्तेषु अवधित्वमेव पंचम्यर्थः, तस्यच क्वचिद्धात्वर्थजन्यविभागद्वारकोन्वयः, क्वचिद्धात्वर्थद्वारकइत्यपि वा सुवचम्। वलाहकाद्विद्योतते विद्युदित्यत्रतु निस्सरणजन्यं विद्योतनं लक्षणयाद्युतेरर्थः। तत्रैकदेशे निस्सरणे पंचम्यर्थान्वयः। एवं कुसूलात् पचतीत्यत्रापि आदानजन्यः पाकः पच्यर्थः। आदानेच पंचम्यर्थान्वय इति-परकीयाः। .... .... ....

स्वमतेतु लक्षणायामेकदेशान्वयेच प्रमाणाभावात् पंचम्यर्थोपादानत्वादिरेव स्वनिरूपकनिस्सरणादिजन्यविद्योतनानुकूलत्वसंसर्गेण कृत्यन्वयी। कुतोभवानित्यादौप्रश्ने पाटलीपुत्रादित्याद्युत्तरेच आगतइत्यध्याहारेणान्वयोबोध्यः।

यत्तु "जुगुप्साविरामप्रमादार्थानामुपसंख्यान" मिति वार्तिकं, एतेषां योगे पंचमीवाच्येत्यर्थकं तल्लाक्षणिकानुशासनं। अतः पापाज्जुगुप्सते विरमति धर्मात्प्रमाद्यतीत्यादौ पंचमी। अत्राद्ये निन्दाधात्वर्थः, तच्च विगानम्। पंचम्यर्थोविषयित्वं। प्रकृत्यर्थश्च निरूपितत्वसंसर्गेणतत्रान्वेति। तच्च स्वाश्रयविगानवत्त्वसंबन्धेनाख्यातार्थे आश्रयत्वे। द्वितीयेकरणानन्तरमकरणं धात्वर्थः। पंचम्यर्थः पूर्ववत्। आख्यातार्थआश्रयत्वं, पंचम्यर्थस्यच कृतिद्वारकोन्वयः। पापविषयककृत्यनन्तरकालीनपापविषयककृत्यभावाश्रयत्व मिति शाब्दबोधः। तृतीये पंचम्यर्थोविषयित्वमेव। अनवधानं धात्वर्थः, आख्यातार्थआश्रयत्वमेव। स्वाश्रयानवधानवत्त्वमाश्रयत्वे पंचम्यर्थस्य संसर्गः। ....

एवं "भीत्रार्थानांभयहेतुः" (१--४--२५) इत्यनुशासनाद्भयार्थानां त्राणार्थानांचधातूनांयोगेभयहेतुरपादानसंज्ञस्स्यादित्यर्थकेन चोराद्बिभेति, चोराद्धनिकस्त्रायते, इत्यत्र पंचमी। अत्र हेतुमत्त्वं पंचम्यर्थः, आद्ये भयं धात्वर्थः। द्वितीये भयाभावानुकूलव्यापारः, नतु भयाभावमात्रं कैश्चिदुक्तं, तथात्वे धनिकस्य त्वन्मते धात्वर्थतावच्छेदकफलाभावेन तदाश्रयत्वरूपकर्मत्वानुपपत्तेः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्मन्मतेतु व्यापारस्य भयाभावएव कर्मेति तदुपपत्तिः । आख्यातार्थआश्रयत्वम् । स्वाश्रयधात्वर्थवत्त्व मुभयत्रसंसर्गः । चोरहेतुकभयाश्रयत्वंचोरहेतुकभयाभावानुकूलव्यापाराश्रयत्वमिति शाब्दबोधः । " कस्यबिभ्यतिदेवाश्च जातरोषस्यसंयुगे " इत्यादौतु कस्यसंयुग इत्येवं संयुगघटितसंबन्धेन भावनान्वयात् षष्ठी । नचैवं संयुगस्यैवापादानत्वापात्तिः, परयाधिकरणसंज्ञयाबाधात् । अधिकरणत्वाविवक्षाया मिष्टापत्तेः ॥

एवं " पराजेरसोढः " ( १-४-२६ ) इति सूत्रात्पराजेर्धातोर्योगे असह्योर्थोपादानसंज्ञस्स्यादित्यर्थकात अध्ययनात्पराजयत इत्यत्र पञ्चमी । अत्रधात्वर्थोरिष्टं, पञ्चम्यर्थोजन्यत्वं, अध्ययनजन्यारिष्टाश्रयत्वमिति शाब्दबोधः । शत्रून्पराजयतइत्यत्रतु शत्रुनिष्ठानिष्टसाधनत्वमिति बोधाद्द्वितीया ॥ केचित्तु असहनंधात्वर्थः, अध्ययनंनसहतइति विवरणात् , इत्याहुः ॥

एवं " वारणार्थानामीप्सितः " ( १-४-२७ ) इतिसूत्रात वारणार्थानां योगे ईप्सितोर्थोपादानसंज्ञःस्यादित्यर्थकात् यवेभ्योगांवारयतीत्यादौ पंचमी । अत्र पंचम्यर्थः प्रतियोगित्वं, द्वितीयार्थोवृत्तित्वं, धात्वर्थश्च विनाशानुकूलव्यापाराभावानुकूलव्यापारः, यत्नश्चाख्यातार्थः, पंचम्यर्थस्यस्वनिरूपकविनाशघटितःसंसर्गः । द्वितीयार्थस्यधात्वर्थतावच्छेदकीभूत व्यापाराभावद्वारकः । तथाच यवप्रतियोगिक विनाशानुकूलो भक्षणादिरूपोयो व्यापारः तस्य गोवृत्तिर्योभावः तदनुकूलव्यापारो देवदत्तवृत्तिरितिबोधः पर्यवसितः । अत्रच यवानांवस्तुत ईप्सितत्वात्पंचमी । नचैवं गोरपीप्सितत्वात्पंचम्यापत्तिः, तस्या ईप्सिततमत्वेनकर्मत्वोपपत्तेः । एतदर्थमेवहि कर्तुरीप्सिततममित्यत्रतमब्ग्रहणमित्युक्तं कौस्तुभे । धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलव्यापारध्वंसस्यगोमात्रवृत्तित्वात् तत्रैवद्वितीया ॥

एवं कूपादन्धंवारयतीत्यत्रवृत्तित्वं पंचम्यर्थः, पतनानुकूलव्यापाराभावानु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कूलोव्यापारोधात्वर्थः । तथाच कूपवृत्ति यदधःप्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपपतनं तदनुकूलोयो अन्धवृत्तिर्व्यापारः तदभावानुकूलोयोव्यापारस्तदनुकूलकृतिश्चैत्रवृत्तिरितिबोधः पर्यवसितः ॥

एवं पुष्पेभ्य आतपंवारयतीत्यत्रापि शुष्कीभावानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः । पुष्पवृत्तिशुष्कीभावानुकूलव्यापाराभावोय आतपनिष्ठः, तदनुकूलेत्यादिः पूर्ववद्बोधः । अग्नेर्माणवकंवारयतीत्यादौ जन्यत्वंपंचम्यर्थः, दाहानुकूलेत्यादिर्धात्वर्थः । नचैवमननुगमः, अनुभवानुरोधेन लक्षणायामननुगमस्यादोषत्वात् । यवेभ्योगांवारयति अन्यथाभक्षयिष्यतीति, कूपादंधंवारयति पतिष्यतीति, पुष्पेभ्यआतपंवारयति शुष्काणिभविष्यंतीति, अग्नेर्माणवकंवारयति दग्धोभविष्यतीति, प्रयोजनस्यभेदेनविवरणात् ॥

अन्येत्वनुगमरसिकाः सर्वत्रसंयोगजनकव्यापाराभावस्य कर्मकारकवृत्तेरनुकूलोयोव्यापारः सएवधात्वर्थः, वृत्तित्वञ्च पञ्चम्यर्थ इत्याहुः । तन्न, यवेभ्योगोसंयोगं वारयति, यवेभ्यः कार्मणिकंवारयतीत्यादावनुगमानुपपत्तेः ॥

ननु " वारणार्थानामीप्सित " इतिसूत्रे नतावदीप्सितेवारयति क्रियायोगएवापादानत्वनियमः, इष्टादन्नादंशंददातीत्यादौ तदभावेपिदर्शनात् । नापिवारयत्यर्थयोग ईप्सितएवेतिनियमः, सर्पाद्वारयति गङ्गास्नानाद्वारयतीत्यादौ अनीप्सितेपि दर्शनादितिचेन्न, निवार्यनिवारकान्यतरस्येप्सितइति तदर्थात् सर्पादयोहि निवारकस्यानिष्टाअपि पुरोवृत्तित्वादिना निवार्यस्येष्टाएव । पुष्पेभ्य आतपंवारयतीत्यादौ निवार्यस्याचेतनत्वान्निवारकग्रहणं । अथवा धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूल व्यापाराभावरूपस्यफलस्य यत्फलं विनाशादि तत्संबन्धित्वेन प्रसक्तस्य यवादेः तद्विपरीतत्वेन निवारकेच्छाविषयइति तदर्थ इति नकश्चिद्विरोधः ॥

वस्तुतस्तु बहुधैतानिसर्वाणिसूत्राणि भाष्यकारेण प्रत्याख्यातानि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्यायमाशयः, "ध्रुवमपाये" इतिसूत्रेहि नवस्तुतएव क्रियाजन्यो विभागोऽभिप्रेतः अपितुतार्किकोऽपि, यदीयं क्रिया नस्यात् तदाकर्मकारकेणापादानस्य सम्बन्धःस्यात् क्रिययातुसनिवारित इति तदभावोज्ञापितइति । तदभिप्रायमेवचापायपदम् । आवश्यकश्चैतादृशंव्याख्यानं असंयुक्तादेवचौरात्पलायितइत्येतदर्थम् । ततश्च तत्सूत्रेणैव यवादेरप्यपादानत्व सिध्यासूत्रांतरवैय्यर्थ्यमिति । नचैवं गवादेरपि तादृशाभावाश्रयत्वा दपादानत्वापत्तिः, ईप्सिततमत्वादिप्रयुक्तकर्मसंज्ञया परत्वेनापादानसंज्ञायाबाधात् । वैपरीत्येन विवक्षायामिष्टापत्तेश्च । नचविवक्षायामुभयोरपादानत्वापत्तिः, वारयतेः सकर्मकत्वेनान्यतरस्य कर्मत्वविवक्षाया आवश्यकत्वात् ।

एवं- "अन्तर्धौयेनादर्शनमिच्छति" (१-४-२८) इत्यनेनान्तर्धौ-व्यवधानेसति, यत्कर्तृकस्यात्मनोदर्शनस्याभावमिच्छति तदपादानंस्यादित्यर्थकेन मातुर्निलीयते कृष्णइत्यादौ पञ्चमी । अत्रच प्रत्यक्षाभावेच्छापूर्वकः प्रत्यक्षविरोधिव्यापारोधात्वर्थः । विरोधित्वंपञ्चम्यर्थः धात्वर्थतावच्छेदके प्रत्यक्षेन्वेति । विरोधित्वं तज्जनकलौकिकसन्निकर्षाभावानुकूलत्वं । कृतिराख्यातार्थः । तथाच मातृवृत्तिस्वविषयक प्रत्यक्षाभावेच्छापूर्वकोयः प्रत्यक्षजनकलौकिकसन्निकर्षाभावानुकूलव्यापारस्तदनुकूलकृतिः कृष्णवृत्तिरितिशाब्दबोधः । व्युत्पत्तिबलेनच प्रत्यक्षेकृष्णविषयत्वस्यबोधः पार्ष्ठिकः ।

एवं- नियमपूर्वक विद्यास्वीकारे वक्ता अपादानसंज्ञः स्यादित्यर्थकेन "आख्यातोपयोगे" (१-४-२९) इतिसूत्रेणोपाध्यायादधीते इत्यत्रपञ्चमी । अत्रोच्चारणोत्तरकालीनमनभ्यस्तोच्चारणन्धात्वर्थः, वृत्तित्वंपञ्चम्यर्थः । इदमपिसूत्रं भाष्यकारेणप्रत्याख्यातम्, उच्चारणक्रियाजन्यशब्दजनकस्वसमानजातीय शब्दानामुपाध्यायमुखनिःसृतत्वेन उपाध्याय क्रियाजन्यविभागाश्रयत्वात् 'ध्रुवमपाये' इतिसूत्रेणैव तत्सिद्धेः । .... .... ....

नचैवं त्रिधस्य विभागस्य मुख्यविभागत्वाभावा न्नैकविधत्वमपादानस्येति वाच्यं । नानाविधानामेवज्ञातीयकानामपादानत्वानां व्यापकीभूताखण्डोपाधिरूपापादानत्व एवतात्पर्यात् । अतएवैवं त्रिधाः प्रयोगाः सर्वेशक्ताएवेत्यपि


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शक्यं वक्तुम् । तज्ज्ञापनमेवच प्रत्याख्यानफलम् । उक्तविधतत्तद्रूपेण निरूढलक्षणया बोधसिद्ध्यर्थं तत्तत्सूत्राणीतिमत्वास्माभिरन्यैश्च तत्तत्सूत्राणिव्याख्यायन्ते । .... .... ....

एवं - जायमानस्य हेतुरपादानसंज्ञः स्यादित्यर्थकेन "जनिकर्तुः प्रकृतिः" ( १--४--३० ) इतिसूत्रेण ब्रह्मणः प्रजाः प्रजायन्त इत्यत्र पञ्चमी। अत्रजन्यत्वम्पचम्यर्थः सचस्वाश्रवृत्त्युत्पत्तिकत्वसम्बन्धेनाख्यातार्थे आश्रयत्वेन्वेति । अत्रहेतुत्व मुपादाननिमित्तोभय साधारण्येन विवक्षितं । तेनपुत्रात्प्रमोदोजायते, मृदोघटोजायते इत्यादौ पंचमी । ब्रह्मणस्तूभयरूपत्वात्पंचमी।

एवं-- "भुवःप्रभवः" ( १--४--३१ ) इत्यनेनभवनस्यप्रकर्षविशिष्टस्ययः कर्ता तस्ययः प्रभवनप्रतियोगी सोपादानसंज्ञस्स्यादित्यर्थकेन हिमवतो गङ्गाप्रभवतीत्यत्र पंचमी। अत्र प्रकर्षः संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम् । धात्वर्थश्चैतत्सर्गीयभारत वर्षस्थभूसंयोगध्वंसासमानकालीनस्तादृशभूसंयोगः । प्रतियोगित्वं पंचम्यर्थः। तस्यच प्रकर्षार्थसंयोगद्वारकआख्यातार्थान्वयः । आख्यातार्थ आश्रयत्वं । धातूपसर्गार्थभूतसर्वसंयोगेषु गंगावृत्तित्वंच व्युत्पत्तिबललभ्यम्। तथाच हिमवत्प्रतियोगिक गंगासंयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्त्येतत्सर्गीयभारतवर्षस्थभूगंगासंयोगध्वंसासमानकालीन तादृशभूसंयोगाश्रयत्वं गंगावृत्तीतिबोधः पर्यवसितः । अत्र वैकुण्ठसंयोगध्वंसक्षणोत्तरं तादृशभूगंगासंयोगस्याद्यस्यजायमानतया वैकुण्ठात् भुविप्रभवतिगंगेति प्रयोगापत्तिः, अतोऽव्यवहितेति । काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे उक्तविधभूगंगासंयोगानांकेषांचिज्जायमानत्वात् काशीतोगंगाभुवि प्रभवतीति योगापत्ते स्तादृशसंयोगध्वंसासमानकालीनेति । एवं चाद्यस्यापि तादृशसंयोगस्य तदव्यवहित पूर्वक्षणवृत्तिवैकुण्ठसंयोगध्वंसाद्यव्यवहितोत्तरत्वा द्वैकुण्ठात्प्रभवतीति प्रयोगापत्तेरनिवारणात्, प्रकर्षार्थसंयोगध्वंसक्षणस्या प्याद्यत्व विशेषणं देयम् ॥ ....

वस्तुतस्तु वैकुण्ठात् भुविप्रभवतीति प्रयोगस्येष्टापत्त्यैव परिहर्तुंशक्यत्वात् नतन्निवारणाय पदद्वयदानम् । .... ....

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


एवं -- "ल्यब्लोपेकर्मण्यधिकरणेच" ( वार्तिकम् ) इत्यनेन अर्थाध्याहारादिना गम्यमाने ल्यबन्तकर्मणि अधिकरणेवा पंचमीस्यादित्यर्थकेन प्रासादात्प्रेक्षते इत्यादौ पंचमी । प्रासादमारुह्य प्रेक्षते प्रासादेस्थित्वा प्रेक्षत इत्यर्थः । अत्र कर्मत्व मधिकरणत्वंवा पंचम्यर्थः । तस्यच स्वनिरूपकारोहणादिभावनोत्तरकालिकत्वादिसंसर्गेण प्रेक्षणभावनायामन्वयः । नच गम्यमान क्रियायाः कथं संसर्गघटकत्वं, कस्मात्त्वं नद्याइत्यादौ आगतादि पदाध्याहारेण गम्यमान क्रियादेर्विशेष्यत्वाद्युपपत्तौ संसर्गघटकत्वस्य सुतरामुपपत्तेः ॥ .... .... ....

एवं--"यतश्चाध्वकालनिर्माणं तत्र पंचमी" "तद्युक्तादध्वनःप्रथमासप्तम्यौ" "कालात्सप्तमीच वक्तव्या" इत्यादिवार्तिकात्, वनाद्ग्रामोयोजनं योजनेवा, कार्तिक्या आग्रहायणीमासे इत्यादौ पंचमी । अत्रावधित्वम्पंचम्यर्थः, वनावधिकयोजनपरिमितदेशवृत्तिर्ग्रामइतिबोधः फलितः । प्रथमार्थोप्यधिकरणत्वमेव ।

एवं-- "अन्यारादितरर्तेदिक्शब्दांचूत्तरपदाजाहियुक्ते" ( २-३--२९ ) इत्यनेन एभिश्शब्दैर्योगेपंचमीत्यर्थकेन कृष्णादन्यइत्यादौ पंचमी । प्रतियोगित्वंचात्रपंचम्यर्थः । तस्यच स्वनिरूपकान्योन्याभावद्वारकपरम्परयाऽध्याहृताख्यातार्थेन्वयः । अन्यइत्यर्थग्रहणमितिसूचनार्थं पृथगितरपदोपन्यासः । अत एव कृष्णादितरः कृष्णात्पृथगित्यपि द्रष्टव्यम् ।

नचैवं-- घटः पटोन, घटस्यान्योन्याभावः, घटस्य संयोगाभावः, घटस्य तादात्म्याभावइत्यादावपि पंचम्यापत्तिः, घटाद्विभागोघटाद्भेदः पटस्येत्यादावित्रधर्म मात्रवाचित्वेपि पंचम्यापत्ते र्दुर्वारत्वात् । धर्मित्रिवक्षायामपि घटस्यान्योन्याभाववानित्यादौ तदापत्ते र्दुर्वारत्वाच्चेतिवाच्यम । पंचम्यर्थोहि प्रतियोगित्वं स्वनिरूपकभेदादिघटितसंसर्गेणास्मन्मते आख्यातार्थान्वयी । तत्रचान्यादिपदं संसर्गतात्पर्यग्राहकं । परमतेतु तदुपस्थापिते भेदादावेवान्वय इति विशेषः । तदिहान्यादिपदैर्भेदादेर्विशिष्यभेदत्वादिनोपस्थितत्वाद्युक्ता तद्योगेपञ्चमी । अन्योन्याभावादिपदैस्त्वन्योन्यादिपदवाच्यतादात्म्याद्यभावत्वेन बोधान्नतद्योगे पञ्चमी । नञोपि लाघवेनाभावत्वेनैववाचकता,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु भेदत्वादिना, अनेकशक्तिकल्पनापत्तेः । अतएव 'तदन्यतद्विरुद्धतदभावेषु नञ्' इत्यनुशासनमपि न वृत्तिपरं, अन्यलभ्यत्वात् । अतोविशेषबोधः समभिव्याहारविशेषादिनेति न तत्रापि पंचमीप्रसक्तिः । अतएव घटात् पृथक्त्वमित्यादिप्रयोगा निरपवादाः । .... ....

नचैवं -- घटः पटोनेत्यादौ पंचम्यनापत्तावपिषष्ठयापत्ति दुर्वारेतिवाच्यम् " नियतप्रयोगाहिकेचिदव्यया " इत्यनुशासनांतरेण तदनापत्तेः । 'नेयं विभाषा' इत्यादिभाष्यप्रयोगाच्च । वनादारात् ग्रामः, ऋते कृष्णान्नकिंचित्, अत्रापि प्रतियोगित्वं पचम्यर्थः । यस्तु "पुरुषाराधनमृते"इति प्रयोगः"सऋते द्वितीया"इति चान्द्रसूत्रादवगन्तव्यः । दिशिदृष्टः शब्दो दिक्शब्दः, तेनात्रलक्षणया देशकालवाचिनायोगे पंचमीत्यर्थः । पूर्वोग्रामाद्देशः,चैत्रात्पूर्वः फाल्गुनः, इत्यादौ । अतएवावयववाचिनायोगे न,पूर्वं कायस्य । अञ्चूत्तरपदयोगेपि प्राक् प्रत्यग्वाग्रामात् । आच् योगेपि दक्षिणाग्रामात् । आहियोगेपि दक्षिणाहिग्रामात् ।

एवं-- कार्तिक्याः प्रभृतीतिभाष्ये प्रयोगात् प्रभृत्यर्थयोगेपि पंचमी, भवात् प्रभृतिसेव्योहरिः । .... .... ....

एवं--"अपपरिबहिरञ्चवः पञ्चम्या" ( २ - १ - १२ ) इति समासविधिसामर्थ्यात् वहिर्योगेपि सा, ग्रामाद्बहिः ।

एवं-- "पञ्चम्यपाङ् परिभिः" ( २ - ३ - १० ) इतिसूत्रात् एतैः कर्म प्रवचनीय संज्ञकैर्योगेपंचमीत्यर्थकात् अपहरेः संसारः, परिहरेः संसारः, आमुक्तेः संसारः, इत्यादौ पंचमी । "अत्र अपपरीवर्जने" (१ - ४ - ८८ )इतिसूत्रादनयोः कर्मप्रवचनीयसंज्ञा । अतएव वर्जनार्थकापपरियोगएव पंचमी ,लक्षणाद्यर्थयोगेतु द्वितीयैवेत्युक्तम् । आङस्तु "आङ्मर्यादावचने" (२ -३ - ८९) इत्यनेन कर्मप्रवचनीयसंज्ञा । वचन ग्रहणादभिविधावपि ।

एवं-- "प्रतिनिधि प्रतिदानेच यस्मात" (२ -३ - ११) इति सूत्रादेतदर्थककर्मप्रवचनीय योगेपंचमीत्यर्थकात् पंचमी । सच" प्रतिः प्रतिनिधि प्रतिदानयोः"(१ - ४ - ९२) इति सूत्रात प्रतिरेव, प्रद्युम्नः कृष्णात्प्रति, कृ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ष्णप्रतिनिधिरित्यर्थः । मुख्याभावे यस्तत्सदृशउपादीयते सप्रतिनिधिः । प्रतियोगित्वं चात्रपंचम्यर्थः । प्रतिदानं दत्तस्यप्रतिनिर्यातनं, दानजन्योपकार प्रत्युपकार इतियावत्, तिलेभ्यः प्रतियच्छतिमाषान् । अत्र कर्मत्वं पंचम्यर्थः, तस्यच निपातोपात्तदानभावनायामन्वयः । तथाच तिलकर्मकदानभावनाजन्योपकार प्रत्युपकार जनकीभूता माषकर्मिका दानभावना चैत्रवृत्तिरिति शाब्दबोधः । .... .... ....

एवं - "अकर्तर्यृणेपंचमी" (२ - ३ - २४) इतिसूत्रात् कर्तृवर्जितं यदृणं हेतुभूतं ततः पंचमीत्यर्थकात् ऋणाद्बद्धः, शतात् बद्धः, इत्यादौ पंचमी । अत्र हेतुत्वं पंचम्यर्थः , शतमिह उत्तमर्णायधार्यमाणत्वादृणरूपमेव । तस्य कर्तृत्वेतु शतेनबन्धितइत्येवं तृतीयैव । अत्रहिणिजन्तत्वात् बन्धनप्रयोजके ऋणेहेतुत्ववत् "तत्प्रयोजकोहेतुश्च" ( १ - ४ - ५५ ) इति चकारेण कर्तृसंज्ञाया अपिकरणात् कर्तृत्वावश्यकतया तृतीयांतत्वमेव । .... .... ....

एवं - " विभाषागुणेस्त्रियाम् " ( २ — ३ — २५ ) इति सूत्रात् गुणेहेतौ अस्त्रीलिंगे पंचमीवास्यादित्यर्थकात् जाड्यात् जाड्येनवाबद्धइत्यत्र विकल्पेन पंचमी । गुणत्वाभावे स्त्रीलिंगेवा धनेनकुलम्बुध्यायुक्त, इत्यादौतृतीयैव"हेता" वितिपूर्वोदाहृतसूत्रात् । गुणत्वं चेहपरतन्त्रत्वमात्रं, तेनवन्हिमान् धूमादित्यादौ पंचमी । नास्तीहघटोऽनुपलब्धेरित्यादौस्त्रीलिंगेतु पंचमीबाहुळक प्रकृतेस्तदनुदृष्टेरितिवार्तिक प्रयोगादनुसन्धेयम् । .... .... ....

एवं- " पृथग्विनानानाभिस्तृतीयान्यतरस्याम् " ( २ - ३ - ३२) इति सूत्रादेभिर्योगेतृतीयास्यात्पंचमी द्वितीयेचेत्यर्थकात् पृथग्रामात् , रामेण राममित्यादौ तृतीयाभ्यां विकल्पेन पंचमी । एवं विनानानायोगेपि । अत्रप्रातियोगिताकत्वं सर्वविभक्तयर्थः । तत्र द्वितीयासंनिहितत्वादेवानुवर्तते, पंचमीतुमण्डूकप्लुत्यानुवर्तनीया, भाष्यकृतातथैवव्याख्यातत्वात् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं " करणेचस्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य " ( २—३—३३ ) इति सूत्रादेभ्यः करणे तृतीयापञ्चम्यौ स्यातामित्यर्थकात् स्तोकेन स्तोकाद्वामुक्त इत्यादौ तृतीययासपहञ्चमी । करणत्वं पंचम्यर्थः । द्रव्यरूपसत्त्ववचनेतु स्तोकेन विषेणहतइत्यादौ तृतीयैव ।

एवं "दूरांतिकार्थेभ्योद्वितीयाच"(२-३-३५)इतिसूत्रादेभ्योद्वितीया, चात्पंचमीतृतीये, इत्यर्थकात् ग्रामस्य दूरंदूरात् दूरेणवेत्यादौ द्वितीयातृतीयाभ्यां सहपंचमी। प्रातिपदिकमात्रार्थेविधिरयं,नत्वत्र विभक्त्यर्थोन्यः कश्चित् । इहसप्तम्यपि,"सप्तम्यधिकरणेच" (२-३-३६) इतिसूत्रेचकारेण दूरांतिकार्थेभ्य इत्यनुकर्षणात् । तेनग्रामस्य दूरेस्तीति प्रयोगोपिनानुपपन्नः । अत्रासत्त्ववचनस्यानुवर्तनात् सत्त्ववचनत्वे नैतद्विभक्तिचतुष्टयनियमः । सत्त्ववचनत्वंचेहसामानाधिकरण्येन प्रातिपदिकार्थविशेषणत्वं, तेन दूरः पन्थाः इत्यादौ दूरशब्दस्य पथोविशेषणत्वेन तद्विभक्त्यैवविभक्तिः।

यद्यपि चास्मन्मते विशेषणानामप्याख्यातेनैवान्वयः, तथापि यत्रदूरत्वविशिष्टभेदः संसर्गघटकस्तत्रप्रथमा, यत्रदूरत्वाधारता संसर्गघटिकातत्र विभक्तिचतुष्टयमिति नकोपिविरोधः । तत्सिद्धं पंचम्यर्थः सर्वत्रभावनान्वयीति । .... .... ....

एवं- षष्ठ्यर्थोपि तत्रैवान्वेति । सच-"षष्ठीशेषे" ( २— ३ —) इति सूत्रानुशिष्टः । तथाहि - उक्तादन्यः शेषः, उक्तानिचपूर्वं कर्मत्वादीनि, तद्भिन्नाश्च सजातीयत्वात् स्वस्वामिभावादयः सम्बन्धाः, तेषुषष्ठीस्यादितिसूत्रार्थः । तेषुच न प्रत्येकं शक्तिः, अनेकशक्तिकल्पनापत्तेः । अपितु सम्बन्धत्वेन । संबंधत्वंच सम्बद्धाविति प्रतीतिसाक्षिको धर्मविशेषः । एवंच शक्यतावच्छेदकस्यसंबंधत्वस्य कर्तृत्वकर्मत्वादिष्वपिसत्त्वात् तेषामपि संबंधत्वेन रूपेण षष्ठ्यर्थतास्त्येव । अतएव सतांगतम्, सर्पिषोजानीते, मातुः स्मरति, एधोदकस्योपस्कुरुते । शंभोर्भजेचरणयोः, फलानां तृप्तः,इत्यादयः प्रयोगाः । अतएवोक्तशक्यतावच्छेदकातिरिक्त शक्यतावच्छेदकावच्छिन्न संबंधा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एव शेषपदार्थः । सचयथैव राज्ञःपुरुषइत्यादौ स्वस्वामिभावस्तथैव सतांगत मित्यादौ कर्तृत्वादिकमपि । संबंधत्वं च सर्वत्र शक्यतावच्छेदकम्, अतएव कर्तृत्वत्वादिना तद्बोधे लक्षणेति वक्ष्यते । नचैवं सम्बन्धत्वेन रूपेण संबंधानां शक्यत्वे "एकशतं षष्ठ्यर्था"इतिमहाभाष्यकारीयवचनानुपपत्तिः, पार्थ शब्दस्यार्जुन एव प्रचुरप्रयोगेण तत्सम्बन्धग्रहणे संभवति अन्यसम्बन्ध ग्रहणस्यान्याय्यत्वमितिसूचनार्थत्वात् । तदिह राज्ञःपुरुषइत्यत्र सेवकत्वं षष्ठ्यर्थः । तत्र निरूपकता संसर्गेण राज्ञोन्वयः । आधेयत्व संसर्गेणच तस्य पुरुषेन्वयः । सर्पिषोजानीत इत्यत्र वक्ष्यमाणरीत्या संबन्धत्वेन करणत्वं षष्ठ्यर्थः, तस्य धात्वर्थे, इत्येवं तत्रतत्र योग्यतानुसारेण समभिव्याहृतमात्र एवान्वय इति । नात्रकारकविभक्तिवत् क्रियान्वय इति तार्किकाः शाब्दिकामीमांसकाश्च ।

वस्तुतस्तु - योग्यताद्यनुसारेण साक्षात्परम्परासाधारण्येन लिंगानन्वयि पदजन्योपस्थितिः कारणमित्येव कार्यकारणभावेनान्वयोपपत्तेः । इतरथा षष्ठीभिन्नसुबर्थस्थल एकाव्युत्पत्तिः षष्ठीस्थलेचान्येतिव्युत्पत्ति द्वयकल्पनापत्तेः । इष्यते च परैरपि स्थाल्यांतण्डुलं पचति, गृहेचैत्रः पचतीत्यादौ सप्तम्यर्थस्य तण्डुलचैत्रद्वारकः क्रियान्वयो नतु तण्डुलादावेव । ततश्च राज्ञः षष्ठ्यर्थे, तस्यच पुरुषद्वारकोस्त्यादि क्रियायां, इत्येव युक्तमुत्पश्यामः ।

एवं - करणत्वादिकमपि यत्र सम्बन्धत्वेन षष्ठ्यर्थः तत्र धात्वर्थद्वारकः, अतएव तत्प्रतिपादकम् "ज्ञोविदर्थस्यकरणे" (२ -- ३ -- ५१) इतिसूत्रम् । अत्र भाष्यव्याख्यानात् शेषइत्यनुवर्तते । तेनज्ञानभिन्नार्थस्य जानातेर्धातोः करणे शेषत्वेन विवक्षिते षष्ठीस्यादितिसूत्रार्थः । सर्पिषोजानीते सर्पिषोज्ञानं । अत्रलक्षणया ज्ञानपूर्विकाप्रवृत्तिर्धात्वर्थः । तस्यां यत्र सर्पिषः करणत्वमेव शेषत्वेन विवक्षितं तदा सर्पिष इति षष्ठी । करणत्वत्वेन करणत्वविवक्षायां तृतीयैव । ज्ञानार्थकेतु विषयत्वार्थिका द्वितीया । तस्य सम्बन्धत्वेन बोधेतु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



षष्ठ्येव । नचैवं "शेषेषष्ठी" त्यनेनैवसिद्धेः प्रथक् सूत्रवैय्यर्ध्यं; षष्ठीपुन र्विधिः षष्ठ्येव नतुलुक् इत्येवंपरः । तेन तद्व्याप्य:समासोनिवर्तते । ततश्च सम्बन्धत्वेन उक्तधात्वर्थकरणत्व विवक्षायां न षष्ठीसमासः । एवं उत्तरेष्वपि सप्तसु सूत्रेषु षष्ठीपुनर्विधिः मातुस्स्मरणमित्यादौ शेषषष्ठीसमासनिषेधार्थ एव। तत्रहि-- "अधीगर्थदयेशांकर्मणि" (२--३--५१) इतिसूत्रादेषांकर्मणि शेषत्वेन विवक्षिते षष्ठीस्यादित्यर्थकात् मातुरध्येति, मातुस्स्मरति, मातुस्स्मरणं, सर्पिषोदयते सर्पिषोदयनं, जगतामीष्टे, जगतामीशानमित्यादौ षष्ठीविहिता। अधीगर्था:स्मृत्यर्थाः । अत्रशेषत्वादेव षष्ठी प्राप्तौ पुनःषष्ठीविधिः षष्ठीसमास प्रतिषेधार्थः ।

नचैवं--हरिस्मरणमिति प्रयोगानुपपत्तिः, तस्य कृद्योगेकर्मत्वत्वेन कर्मत्व बोधक षष्ठीसमासत्वेनोपपत्तेः । तत्फलंच कारकपूर्वकत्वात् कृदुत्तर पदप्रकृतिस्वरः । शेषषष्ठीसमासत्वे अन्तोदात्तत्वापत्तेः । तथाच स्वरार्थेयमष्ट सूत्रीति फलितम् ।

किंच-- यत्र मातुः स्मृतमित्यादौ "न लोकाव्यये" त्यनेन कर्मषष्ठीप्रति षिद्धा तत्र शेषषष्ठ्या समासप्रसक्तौ तन्निषेधार्थं षष्ठीपुनर्विधिः ।

एवं - "कृञः प्रतियत्ने"(२--३--५१) इति सूत्रात् गुणाधाने वि द्यमानस्य करोतेः कर्मणि शेषत्वेन विवक्षिते षष्ठीस्यादित्यर्थकात् एधोदक स्योपस्कुरुते, एधोकस्योपस्करणमित्यत्र षष्ठी । प्रयोजनं पूर्ववत्।

एवं-"रुजार्थानांभाववचनानामज्वरेः"(२-३-५४)इतिसूत्रात् रुजाव्याधि स्तदर्थानां भावएव यत्र कर्ता तेषांज्वरिवर्जितानां कर्मणिशेषत्वेनविवक्षिते षष्ठीस्या दित्यर्थकात् चोरस्यरुजति रोगः, चोरस्य रोगस्य रुजा, इत्यादौ चोरेषष्ठी । अत्ररो गाख्यव्याधेरेव व्याध्यन्तरंप्रतिकर्तृत्वात् भावकर्तृत्वम् । तस्य कर्मणिचोरे सम्बन्धित्वेन विवक्षिते कर्मत्वेषष्ठी । कर्मत्वत्वेन विवाक्षिते तुतिन्ङते द्वितीयैव, कृदन्तेतु षष्ठीसमासोपि । सम्बन्धत्वेन विवक्षायां: नषष्ठीसमास इत्यादिपूर्ववत् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अत्र "अज्वरिसन्ताप्योरितिवाच्य"मितिवार्तिकात् रोगस्य चौरज्वरः, चौरसन्ताप, इत्यादौ समासोभवत्येव । भावकर्तृकत्वग्रहणाच्च नद्याःकूलरुजा, नदीकूलं रुजती, त्यादिप्रयोगः ।

एवं -"आशिषिनाथ" ( २ --३-- ५५ ) इतिसूत्रात् अशीरर्थकस्य नाथतेः कर्मणिशेषत्वेन विवक्षिते षष्ठीस्यादित्यर्थकात् सर्पिषोनाथते, सर्पिषोनाथन मित्यादौ षष्ठी । सर्पिस्तेबहुळं भूयादित्याशास्तइत्यर्थः । आशीरर्थकत्वाभावेतु माणवकनाथनमितिसमासः ।

एवं "जासि निप्रहणनाटक्राथपिषांहिंसायां" ( २ - ३ - ५६ ) इतिसूत्रात् हिंसार्थाना मेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात्, चौरस्यो ज्जासनं, निप्राभ्या मुपसर्गाभ्यां समस्ताभ्यां व्यस्ताभ्यां वा युक्तो हनः - निप्रहणः, चौरस्य निप्रहणनं, प्रणिहननं, निहननं वा, चौरस्यो न्नाटनं, चौरस्यक्राथनं, चौरस्यपेषणं, इत्यादौ षष्ठी । हिंसात्वाभावेतु धानापेषणमितिसमासः पूर्ववत ॥

एवं "व्यवहृ पणो स्समर्थयोः" ( २ - ३ - ५७ ) इतिसूत्रात्, एकार्थयो रनयोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्या दित्यर्थकात् शतस्य व्यवहरणम्, शतस्य पण, मित्यादौ षष्ठी । अत्रहिव्यवहृधातोः पणनापरपर्यायं द्यूतमप्यर्थः । पणधातोश्च क्रय विक्रय रूपव्यवहारोपि । अतोद्वयो स्तुल्यार्थकत्वं । अर्थांतरत्वेतु षष्ठीविध्यभावा न्न समासप्रतिषेधः । शलाकाव्यवहारः - गणनेत्यर्थः । ब्राह्मणपणनं - स्तुतिरित्यर्थः ।

एवं "कृत्वोर्थप्रयोगेकालेऽधिकरणे" ( २ - ३ - ६४ ) इति सूत्रात कृत्वोऽर्थानां शब्दानां प्रयोगे कालवाचि न्यधिकरणे शेषत्वेन विवक्षिते षष्ठी स्या दित्यर्थकात, पंच कृत्वोऽह्नो भुङ्क्ते, पंचकृत्वोऽह्नोभोजनं, द्विरह्नो भोजन, मित्यत्र षष्ठी । अत्र षट्सूत्र्या विच्छिन्नमपि शेषग्रहणं व्याख्यानतो मण्डूकप्लुत्याऽनुवर्तते । अधिकरणत्वत्वेन विवक्षायां तु द्विरहनि-


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भुङ्क्तइति सप्तम्येव । तत्सिद्धमिय मप्तसूत्री शेषत्वविवक्षायां समासप्रतिषे-धार्थेति । .... .... ....

यानितु षष्टी हेतुप्रयोग इत्यादीन्यनुशासनानि; तानिलाक्षणिकानुशासनानि । तथाहि । " षष्ठीहेतुप्रयोगे " ( २—३—२६ )इतिसूत्रात् हेतुशब्दप्रयोगे हेतुत्वेन हेतौ बोध्ये षष्ठी स्या दित्यर्थकात्, अन्नस्यहेतो र्वसतीत्यत्र षष्ठी । अत्रहेतुत्वत्वेन हेतुत्वं लक्षणयाषष्ठ्यर्थः, तच्च पूर्वनिरुक्तं, हेतुशब्दप्रयोगस्तात्पर्यग्राहकः, तदुत्तरषष्ठ्यास्सामानाधिकरण्यसिद्ध्यर्थं सएवार्थः, अन्नहेतुक वासाश्रयत्वं, इत्यादिः शाब्दबोधः । अत्र हेतुप्रयोगाभावे तत्वेन हेतुत्व विवक्षायां पूर्वोक्तविधया तृतीयैव, शेषत्वेन हेतुत्वविवक्षायां तु हेतुशब्दप्रयोगाभावेपि शक्त्यैव षष्ठ्यन्तः प्रयोगः । सर्वनाम्नस्तु हेतुशब्दप्रयोगेहेतुत्वत्वेन हेतुत्व विवक्षायां षष्ठी वैकल्पिकी "सर्वनाम्नस्तृतीयाच" ( २ - ३ - २७ ) इतिसूत्रात्, केन हेतुना वसति, कस्य हेतो र्वसति । तृतीयेत्युपलक्षणम्, "निमित्तकारणहेतुषु सर्वासांप्रायदर्शन" मितिवार्तिकात् । तेन कोहेतु र्वसति चैत्रः, कंहेतुं वसति, कस्मै हेतवे वसति, कस्माद्धेतो र्वसति, कस्मिन् हेतौवसतीत्यादयोपि प्रयोगा स्साधवः । अत्र सर्वत्र हेतुत्व मेव विभक्त्यर्थः, अनुशासनबलात् । कीदृशहेतुकंवासाश्रयत्व मित्यादि रेवच शाब्दबोधः । वसति चैत्र इत्यत्र कोहेतुः, कंहेतुमुररीकृत्यवसती त्यादि योग्यपदांतरा ध्याहारेण व्याख्याने तु विभक्तीनां तत्तदर्थकत्वमेवेति ध्येयम् । .... .... ....

एवं किन्निमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्तायै, त्यादि । किं कारणंवसति, केनकारणेनेत्यादि । निमित्तादिशब्दाना मेकार्थकत्वेपि प्रथगुपादानं उपलक्षणार्थं । तेन प्रयोजनादि पद प्रयोगेपि सर्वाविभक्तयो भवन्ति । असर्वनाम्नोपि हेत्वादिशब्दप्रयोगे सर्वाविभक्तयः । अन्नाद्धेतोर्वसति, अन्नेनकारणेनवसति । वृत्तिकारेण " सर्वनाम्नस्तृतीयाच ( २ - ३ २७ ) इतिसूत्रे पठितस्याप्यस्य वार्तिकस्य हेताविति सूत्रेभा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ष्यकारेण पाठात् , प्रायग्रहणं असर्वनाम्नः प्रथमा द्वितीये नस्त्वित्येत दर्थकं । तेनान्नकारणंवसती त्यप्रयोगः । .... ....

एवं "षष्ठ्यतसर्थप्रत्ययेन" ( २—३—३० ) इतिसूत्रात् अतस र्थ प्रत्यय,अतसुच् प्रत्ययादिः, "दक्षिणोत्तराभ्यामतसुच् "( ५ - ३ - २८ ) इत्यादिसूत्रविहितः, तेनयोगे षष्ठीत्यर्थकात्, ग्रामस्य दक्षिणतः , ग्राम— स्योत्तरतः, ग्रामस्योपरि, ग्रामस्योपरिष्टात् , इत्यादौ षष्ठी । अत्र प्रति- योगित्वं षष्ठ्यर्थः । तत्वेन बोधार्थ प्रथगनुशासनं । नतु—पंचम्यपवादा- र्थं, विंध्यात् दक्षिणत इत्यादि प्रयोगस्य दृष्टत्वात् ।

अतएव ततः पश्चात् स्रंसतइत्यादिः भाष्यप्रयोगः सामान्येनज्ञापक- इतिकेचित् । तन्न । प्रकृतायाः पंचम्याः द्वितीयाषष्ठ्यौ बाधिके भवि- ष्यत इति"प्रथग्विने"तिसूत्रभाष्यविरोधात् । अतः पंचम्यपवादार्थ म प्येत- दनुशासनं विंध्यादित्यादिप्रयोग स्त्वपप्रयोगः । ज्ञापकंच पश्चाद्योगमात्रविष यम् । श्रुतस्यैव चात्रातसुच् प्रत्ययस्यनिमित्तता । नतुलुप्तस्य । प्राग्ग्रामादित्यादौ प्रत्ययलोपे षष्ठ्यभावस्य भाष्यकैयटसिद्धत्वात् ।

एवं "एनपाद्वितीया" (२ - ३ - ३१) इतिसूत्रा देनबन्तेन योगे- द्वितीया, योगविभागात् षष्ठीच, इत्यर्थकात्, दक्षिणेन ग्रामं ग्रामस्य वेत्यत्रषष्ठी । प्रतियोगित्वं विभक्तिद्वयार्थः । पंचम्यपवादः पूर्वलिखितभाष्यात् । अतएव तत्रागारंधनपति गृहादुत्तरेणास्मदीयामित्यादि रपप्रयोगः । हरदत्ताद- योप्येवम् । .... .... ....

एवं " दूरांतिकार्थैष्षष्ठ्यन्यतरस्यां " ( २ - ३ - ३४ ) इति सूत्रादेतैर्योगे षष्ठी वास्यात् पंचमीवेत्यर्थकात् , दूरमन्तिकंवा ग्रामस्य ग्रा माद्वा, इत्यत्र पंचम्यासह वैकल्पिकीषष्ठी, अत्र प्रतियोगित्वमेव तदर्थः ।

एवं " दिवस्तदर्थस्य " ( २ - ३-५८ ) इति सूत्रात्, "व्यवहृपणो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्समर्थयो" रिति पूर्वसूत्रोक्तपरामर्शितच्छन्दबलेन द्यूताद्यर्थस्य क्रयविक्रय रूपव्यवहारार्थस्यच दिवः कर्मणि कर्मत्वत्वेन विवक्षिते षष्ठीस्यादित्यर्थकात् शतस्य दीव्यतीत्यादौ षष्ठी। स्तुत्यादिरूपार्थान्तरपरत्वेतु ब्राह्मणं दीव्य तीति, द्वितीयैव। अत्र न शेषत्वेन कर्मत्वविवक्षा। अन्यथा, दिवेः पूर्वसूत्रएव पाठापत्तौ पृथक् सूत्रारंभवैयर्थ्यात्॥ दिवे रुपसर्गयोगेतु वि कल्पेन षष्ठी, "विभाषोपसर्गे" (२-३-५९) इति सूत्रात्। शत स्य शतं वा प्रतिदीव्यति, इदंचलोके। ब्राह्मणेतु "द्वितीयाब्राह्मणे" (२-३-६०) इति सूत्रात् छन्दसि उपसर्गयोगाभावेपि द्वितीयैव। ग्रामस्य तदहस्सभायां दीव्येयुरित्यादौ।

एवं - "प्रेष्यब्रुवोर्हविषोदेवतासंप्रदाने" (२-३-६१) इतिसू त्राद्देवतासंप्रदानेर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्यवाचकात्, षष्ठीत्यर्थकात्, अग्नयेछागस्य हविषो वपाया मेदसोनुब्रूहि प्रेष्यवा इत्यत्र - कर्मत्वत्वेन विवक्षिते षष्ठी। अत्र शेषग्रहणं न संबध्यते। प्रेष्येति लो ट्तेन समासस्या प्रसक्तत्वेन तन्निषेधार्थत्वानुपपत्तेः, हविषः 'प्रस्थितत्वे न विशेषणे प्रतिषेधोवक्तव्य' इति वार्तिकात् प्रस्थितत्वेन विशेषणे द्वि तीयैव। अतएव इन्द्राग्निभ्यांछागस्य हविर्वपां मेदः प्रस्थितं प्रेष्येति प्रयोगः।

इदंच लोकवेदसाधारणं, उत्तरत्र छन्दोग्रहणात्। यत्तु "चतुर्थ्य र्थेबहुलंछन्दसि"(२-३-६२)इत्यनुशासनं दार्वाघाटस्तेवनस्पतीनामित्यादौ वनस्प तिभ्यइत्यर्थे षष्ठीविधायकं तत् व्यत्ययवचनादेवसिद्धेः प्रत्याख्यातं। एवं"करणे यजः" (२-२-८५) इति सूत्रमपि छन्दसिबहुलमित्यनुवृत्त्या घृ तस्य घृतेनवा यजेतेत्यादौ षष्ठीविधायकं प्रत्याख्यातमेव।

एवं "कर्तृकर्मणोः कृति" (२-३-६५) इति सूत्रात् कृ द्योगे कर्तरि कर्मणिच षष्ठीस्यादित्यर्थकात् कृष्णस्य कृतिः, जगतःकर्ता

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृष्ण, इत्यादौषष्ठी । अत्रकर्तृत्ववत्त्वेन कर्तृत्वं कर्मत्ववत्त्वेन कर्मत्वं च लक्षणया षष्ठ्यर्थः । नतु शेषत्वेन । व्याख्यानवशेन शेष इत्यस्य निवृत्ति प्रतीतेः । अत्रोभयत्रकर्तृत्वकर्मत्वयोः कृदुपात्तकृतावेवान्वयः । ओदनस्य पक्तेत्यादिवत् । नतुधात्वर्थे, प्रधानक्रियायांवा । एतच्चानुपदमेव स्पष्टीकरिष्यते । धातुस्तु साधुत्वार्थः । ओदनस्यपाकइत्यादौतु धात्वर्थस्य कृदर्थकृतावेवान्वयइत्यपिवक्ष्यते । नचैवमपि सूत्रे कृत् ग्रहण वैयर्थ्यं, "नलोकाव्यये"ति वक्ष्यमाणसूत्रेण लादेशरूपतिङादियोगे षष्ठीनिषेधेन परिशेषादेव कृद्योगे षष्ठीविधि प्राप्तेरितिवाच्यम् । कृतपूर्वीकटं इत्यादौ पूर्वीति तद्धितयोगे षष्ठीव्यावृत्त्यर्थं तदुपपत्तेः । अत्र कृतःपूर्वंकटोनेनेति कृतपूर्वी देवदत्तः । "सपूर्वाच्च"(५-२-८७) इतिसूत्रेण सोपपदात् पूर्वशब्दात् कर्त्रर्थेइनिप्रत्ययविधानात् । अतस्तत्रषष्ठी व्यावृत्त्यर्थं कृद्ग्रहण मर्थवत् ।

नन्वेवं-नतत्र द्वितीयापि, निष्ठाप्रत्ययेनैव कर्मकारकस्याभिहितत्वेन तस्याप्राप्तेः । अतएवानभिहिताधिकारविहितषष्ठ्या अपि तत्राप्रसक्तत्वेन न तद्व्यावृत्त्यर्थं कृत् ग्रहणम्, वैयर्थ्याच्च । किञ्च - कृतादिशब्दस्य कटादिरूप विशेषणवत्त्वेन पूर्वशब्देन समासानुपपत्तिः सविशेषणानांवृत्तिर्नेष्यत इतिनिषेधा दितिचेत् ॥ अत्रवैयाकरणनव्याः ॥ पूर्वं कृतशब्दः कर्मविशेषरूपकटान्वय मप्रतिपाद्यमानएव कर्मसामान्यवाचि क्तप्रत्ययांततया भावार्थकक्तप्रत्ययांततयावा व्युत्पादितः पूर्वपदेनसमस्यत इतिनतावत्समासानुपपत्तिः । पश्चाच्च कटं कृतवानितिवत् कटं कृतपूर्वीत्यत्रापि द्वितीयांतस्य कृदर्थेन्वयः । कृत्प्रत्ययेनतस्यानभिधानाच्च द्वितीयोपपत्तिरिति । तन्न । तथात्वे राजपदस्यापि ऋद्धपदापेक्षस्य पुरुषपदेन समासेकृते पश्चादेव तस्मिन् ऋद्धपदान्वयापत्तेः - क्तप्रत्ययस्य कर्मसामान्याभिधानमात्रेण कटानभिधाना द्वितीयांतत्वोपपादने, ओदनः पच्यतेतमां गुरुर्धरित्रीक्रियतेतरांत्वये त्यादावपि द्वितीयांतत्वापत्तेश्च । क्तप्रत्ययस्य भावार्थकत्वे कृञोऽविवक्षितकर्मकतया पश्चादपि कर्मान्वयानुपपत्तेश्च । इतरथा ओदनःपच्यत इति भावाख्याते द्वितीयापत्तेः । अनयैवदिशा ओदनं पाचकतमः ओदनं पाकगृहमित्यादि प्रयोगा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



णामप्याप्तेश्च । सविशेषणत्वेन षष्ठयन्तप्रयोगस्या प्यनापत्तेश्च । अतः कट मित्यस्य कथमपि न धात्वर्थान्वयः सम्भवी ।

एतेन कारकाणां धात्वर्थान्वय वादिनोनैय्यायिका अपि परास्ताः ।

अतोत्रैवंसमाधेयम् । न कटस्य कृत्यर्थेऽन्वयः । धात्वर्थान्वयस्य कारकाणा मव्युत्पन्नत्वात् । नापि क्ताद्यर्थे, प्रथमांतत्वापत्तेः, असमर्थसमासापत्तेश्च । अपितु तद्धितार्थएव । कर्तृत्वं हि अत्र तद्धितार्थः । अतश्च पाचकादिकृत्स्विव विशेषणत्वेन स्वातंत्र्येणवा लक्षणया कृतिरपि तद्धितार्थः । तस्यांच लिङ्गानन्वयिन्यांविशेष्यवाचकपदोपस्थाप्यायांवा न्वयः । व्युत्पत्त्यन्तराभावेन गौरवाभावात् । तद्वाचकपदे कर्मकारकस्यानुक्तत्वेन प्रथमाया अप्रसक्तेः । विशेष्यवाचकपदोपस्थाप्यायामन्वयाच्च ओदनस्यपाचकइतिवत्, न समासभङ्गः । यत्रत्वोदनः पच्यतेतरामित्यादौ तद्धितेन अतिशयमात्राभिधानात् नकृतेरभिधानं, तत्रलकारार्थकृताविव कारकान्वयात्, तेन च कर्मत्वस्योक्तत्वेन न द्वितीयापत्तिः । पचतिकल्पमित्यादिवच्च तरामित्यस्य तात्पर्यग्राहकत्वांगीकारात् , पचधातुनैव विशिष्टपाकलक्षणात्, तरा मित्यस्य निरर्थकत्वेन विशेषण सापक्षेस्यापि तेन सह वृत्त्युपपत्तिः । अस्माकं गुरुकुल मितिवद्वा नित्यसापेक्षत्वा त्तदुपपत्तिः । एव मोदनस्य पाचक तम इत्यत्रापि द्रष्टव्यं । कृतपूर्वीकट मित्यादौतकर्तृत्वस्य इनिप्रत्ययेनैवोक्तेस्तदुक्त कृतौ कटमित्यस्यान्वयात् द्वितीयोपपत्तिः । एवं व्याकरणम्प्राज्ञ इत्यत्रापि , तद्धितेन स्वार्थविहितेन कृदर्थकृतरेप्यु - पादानेन तत्रान्वयोपपत्तेः । अतएवोक्तंहरिणा "ततः क्रियावता कर्त्रायो गोभवतिकर्मणां । अविग्रहागतादिस्थायथाग्रामादिकर्मभिः । क्रियासम्बध्यतेतद्वत्कृतपूर्व्यादिषुस्थिते"ति । अविग्रहा-विशेष्यत्वेन अनुपस्थीतापीत्यर्थः । गतादिस्था- गतमित्यादिकृत्पदस्था । धात्वर्थान्वयमादाय तच्छाब्दबोधोपपादनंवैयाकरण नव्यानामसंगतमेव । कारकाणांधात्वर्थान्वयस्य क्वाप्यव्युत्पन्नत्वात् ।

नन्वेवमोदनस्य पाकः कृष्णस्य कृतिरित्यादौ ककारकान्वयः, न तावत् धात्वर्थे पाके, तस्मिन् तवाप्य व्युत्पन्नत्वात् । नापि घञर्थे तस्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लिंगान्वयित्वात् । लिंगान्वयिन्यामप्यन्वये वस्तुपदाभिधेयायामप्यन्वयापत्तेरिति चेत्, पक्तेत्यादिवत् तत्रापि कारकान्वयार्थं घञैव कृतिविशिष्टपाकस्य- स्वातन्त्र्येण शक्तितलक्षणाभ्यां कृतिपाकयोर्वा भिधानेन कृतौ कारका न्वयोपपत्तेः पाकानुकूलकृतिसाध्यः पाकइतिच बोधः ॥

केचित्तु न घञा कृतेर्लक्षणा, तद्योगेषष्ठीच न कारकपरा, अपितु शेषप ष्ठयेव। तस्या अपि अध्याहृतास्तिरूपप्रधानक्रियायामन्वयः परम्परासम्बन्धेनेति न कश्चित् दोषः । एवंच कृष्णस्य कृतिरित्यत्रापि बोधाञ्जस्यं । नचैवं कृद्योगनिमि त्तक षष्ठीविधिवैय्यर्थ्यम् , तस्य कृजादिकृद्विषयत्वेनाप्युपपत्तेरित्याहुः ॥

अतस्सिद्धं कृद्योगएव कर्तृकर्मणोःषष्ठी । नतु सार्थकतद्धितयोगे कारकवाचितद्धितयोगे वेत्येतदर्थकं कृद्ग्रहणमिति ।

अतएव कृतपूर्वीत्यत्र सापेक्षत्वात् प्रत्ययार्थेनान्वयमङ्गीकृत्य कृत पूर्विकटइत्यस्याप्यापत्तिरपास्ता । उक्ततद्धितयोगे कारकाणां कृतावनन्वय इत्येवंविधज्ञापन प्रयोजनकत्वात कृद् ग्रहणस्य । अतस्सिद्धं तादृशतद्धितासम- भिव्याहृत कृद्योगएव षष्ठी, नतु - तादृशतद्धितयोगेपीति ।

कर्तृत्वंच स्वतंत्रकर्तृत्वं प्रयोजककर्तृत्वंचेति उभयं विवक्षितं तेन राज्ञोयाजकः चैत्रस्यपचनीस्थलीं त्यादावुभयत्रषष्ठी । द्विकर्मकेतुमुख्यकर्मणि षष्ठी नियता । द्वितीये गुणभूतेत्वनियता । अतएव नेताश्वस्यग्रामं ग्रामस्य- वेत्युभयथापि प्रयोगइत्यन्यत्रविस्तरः ।

अयं च षष्ठीविधिरनित्यः, तदर्हं मिति निर्देशात् । अतएव " धर्मैरामोदमुत्तम " मितिभट्टि रितिकेचित् ।

एवं "उभयप्राप्तौकर्मणि" (२-३-६६) इतिसूत्रात् यस्मिन् कृति उभयोः प्रा प्तिः तद्योगे कर्मण्येव षष्ठीस्यात् कर्तरितु तृतीयै वेत्यर्थकात् आश्चर्योगवांदोहोऽगो पेनेत्यादौ कर्तरिनषष्ठी। अत्रदोहइत्ययंभावेकृत सच सकर्मकाकर्मकधातुसाधारणः। नतु लकारनिष्ठादिव दकर्मकधातुपरएवेति तत्रोभयप्राप्तिः । अत स्तत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वोक्त प्रकारेणैव कृतिबोधोऽनुसंधेयः। शेषषष्ठीप्रकारस्तु कृष्णस्य कृति रित्यादावेवेतिध्येयम्।

अथवा सर्वत्रैव घञन्ते धात्वर्थेनैव कर्माद्यन्वयः। नचैवं व्युत्पत्त्यन्तरकल्पनाभियासर्वत्रैव तदापत्तिः। कृतपूर्वीकट मित्यादौ तत्रतदन्वयस्योपपादितत्वात्। नचैवं व्युत्पत्त्यन्तरकल्पना। सुबर्थधात्वर्थाद्यनेकसाधारण्येन लिंगानन्वयिभावनाविशेष्यता संबन्धेन पदजन्योपस्थिते र्हेतुत्व मित्येकयैव तत्सिद्धेः। तत् पदञ्च यथा ख्यात कृन्निपात तद्धितादि, तथा घञंतो धातुरपीति, युक्तस्तस्यामपि तत्रकर्माद्यन्वयः। अत्रहि भावनापदं फलप्रयोजक कारकभिन्नव्यापारपरम्; नातोलडाद्यर्थेलिङाद्यर्थेवा विशेष्यत्वापत्तिः। सचाख्यातादौ कृत्यादिरूपाभावना घञंतादौतु धात्वर्थएव, उभयोः फलप्रयोजकत्वात्। कारकभिन्नेत्युपादानात् यत्र घञंतभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वं विवरणसिद्धं तत्र धात्वर्थे कारकान्वय निवारणं। तत्रानन्वयेच पचत्योदनमित्यस्य पाकेनोदनंकरोतीति विवरणे द्वीतियांतौदनपदस्य करोत्यर्थान्वय एव बीजं। करोत्यर्थस्या ख्यातार्थत्वेन स्थापितत्वात्। अत्रापि धात्वर्थान्वये ओदनंपचतीत्यस्य ओदनस्य पाकंकरोतीत्येव नियमेन विवरणापत्तिः, घञंतस्थलेच धात्वर्थस्याकारकत्वात् लिंगानन्वयाच्च। सत्यपि घञा अभिहितस्य तस्योभयरूपत्वे धात्वभिहिते तस्मिन् कारकान्वयोनविरुद्धः। धातुप्रत्ययाभ्यां पाकाभिन्नः पाक इति, बोधात्। अतश्चानुभवानुरोधेनैकयैव व्युत्पत्यातत्रतत्राख्याताद्यर्थे धात्वर्थेवा, व्यवस्थया कारकान्वयोपपत्तेः, आश्चर्योगवांदोहोऽगोपे नेत्यत्रापि धात्वर्थेकारकान्वयोनिराबाधः। .... .... ....

वस्तुतस्तु लिंगानन्वयित्वं नकारणतावच्छेदककोटिप्रविष्टं; अपितु, प्रत्ययजन्योपस्थितित्वं, अतश्च घञर्थकृतावे वान्वयः। वस्तुपदाभिधेयायांचान्वयः कारकाणामिति नकोपि विरोधः। अयंचोभयप्राप्तौकर्तरिषष्ठयानिषेधः, अकप्रत्यय अकारप्रत्ययरूपयोः स्त्रीप्रत्यययोर्योगे न भवति। "अकाकारयोः प्रयोगे प्रतिषेधो नेतिवक्तव्य" मितिवचनात्। भेदिका बिभित्सावा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुद्रस्यजगतः । भेदिका-भेदने । भावेअकः । त्रिभत्सेत्यत्र भावेअकारः । यातु सुटासुटोवाबाधानेति- काशिका । तस्यां सुटेति करणत्वेतृतीया । उक्तविधप्रत्य यभिन्नकृतितु उभयप्राप्तौतु विकल्पः "कर्तरिशेषेविभाषे" तिवचनात् । शोभना व्याकरणस्यकृतिः पाणिनेः पाणिनिनावा । स्त्रीप्रत्ययविषयमेवेदं । केचि दविशेषेणविकल्पमिच्छन्ति । शब्दानामनुशासनमाचार्यस्याचार्येणवा । तन्म- ते आश्चर्यो गवांदोहोऽगोपेनागोपस्येत्यपि भवतीति ध्येयम् ।

एवं "क्तस्यच वर्तमाने" ( २ - ३ - ६७ ) इतिसूत्रात्, वर्तमानार्थकक्तस्ययोगे षष्ठीस्या दित्यर्थकात्, राज्ञां मतः बुद्धः पूजितो वेत्यत्र षष्ठी । अत्र "मतिबुद्धिपूजार्थेभ्यश्च" ( ३ - २ - १८८ ) इत्य नेनवर्तमानेक्तः, तद्योगात् राज्ञा मिति कर्तरि षष्ठी । कर्मणः क्तप्रत्ययेना भिहितत्वात् । राज्ञोमत मित्येवं नपुंसकेभावेपिच अनेनैवसूत्रेणषष्ठी।

नच कर्तृकर्मणोः कृतीत्यनेनगतार्थत्वं । नलोकाव्ययनिष्ठेति वक्ष्यमाणव- चनेननिष्ठाविषयेपर्युदस्तायाः निष्ठाविशेषप्रतिप्रसवार्थत्वात । नचैवं-पूजितोयस्सु रासुरैरिति तृतीयानापत्तिः । तत्रत्यक्तप्रत्ययस्य भूतार्थकत्वेनोपपत्तेः । नहि मतिबुद्धिपूजार्थेभ्यो वर्तमानएवक्तः । अतीतार्थे धात्वर्थे उक्तधातूनां क्तां तानां लोकेप्रयोगदर्शनेन तद्वचनस्य भूतार्थकक्तबाधकत्वायोगात्।

नचैवं - वर्तमानार्थकमत्यादिधातूत्तर क्तप्रत्ययभिन्न क्तप्रत्यय- योगे छात्रस्य हसित मित्यादौषष्ठ्यनापत्तिः । तस्याश्शेषषष्ठीत्वेनोपप- त्तेः । अतएव कर्तृत्वत्वेन कर्तृत्व विवक्षायां तृतीयैव । भूतार्थक क्त प्र- त्ययस्या प्यधिकरणवाचित्वे पूर्ववत षष्ठीप्रतिप्रसवः, "अधिकरणवाचि नश्च" ( २ - ३ - ६८ ) इतिसूत्रात । तत्राप्यकर्मकेभ्यः कर्तर्येव- षष्ठी, इदमेषांशायितमिति । शयितं - शयनाधिकरणं । क्तप्रत्ययेनोक्त- त्वात् इदमितिप्रथमा । सकर्मकेभ्यस्तु अधिकरणेक्तप्रत्यये कृते कर्तृकर्म णोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्, इदमेषां भुक्तमोदनस्य । भुक्तं-भो- जनस्थानं । नतु - कर्मण्येव । उभयप्राप्तौकर्मणीत्यस्य कर्तृकर्मणोः कृ-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तोत्यतदुत्तरपाठेन तत्सूत्रविहितषष्ठ्याएव तेन नियमात्, तदेवं कृद्योगेसर्वत्र "कर्तृकर्मणोः कृती" त्यनेना षष्ठीप्राप्तौ "नलोकाव्ययनिष्ठाखलर्थतृनां" ( २ - ३ - ६९ ) इति सूत्रेण तत्पर्युदासः । लः — तदादेशाः- तेच कृत्संज्ञकाः शतृशानजादय एवेह गृह्यन्ते, तिङःकृद्ग्रहणेनैव निवृत्तत्वात् । तेन ओदनं पचन् पचमानइत्यादौ न षष्ठी । अपितु द्वितीयैव । अत्र च लकारग्रहणेन तत्कार्यापन्नानामपि ग्रहणम् । तेन किकिनो- र्लादेशत्वाभावेपि लिट्कार्यापन्नत्वात् विशेषातिदेशेच सामान्यातिदेशस्यावश्यकत्वात् तयोरपि ग्रहणम् । अतएवच बभ्रिर्वज्रमित्यादिप्रयोगा अपि संगच्छंते । उ - कटं चिकीर्षुः कन्यामलंकारिष्णुः । उक - दैत्यान्घातुकः । "कमेर्भाषायामनिषेध" इति वचनात्तु लक्ष्म्याः कामुको हरिरित्यत्र षष्ठी । अव्ययः—कटंकृत्वा । "तोसुन्कसुनो रप्रतिषेध" इति वचनाच्च पुरावत्सानामुपाकर्तोः, पुरा क्रूरस्य विसृपो विरप्सम् इत्यादौ षष्ठी । निष्ठा - ओदनं भुक्तवान् चैत्रेण कृतम् । खलर्थः - सुकरः प्रपंचो हरिणा । तृन्निति— प्रत्याहारः, सच - शतृशानचाविति तृशब्दादारभ्या तृनोनकरात् । तेन शानन्प्रभृतीनामपि ग्रहणम् । शानन् - सोमं पवमानः। चानश् - आत्मानं मण्डयमानः । शतृ - वेदमधीयन् । तृन् - लोकान् कर्ता । द्विषधातूत्तरशतृयोगेतु विकल्पेन षष्ठी । "द्विषश्शतुर्वे" ति वचनात् । मुरस्य मुरंवा द्विषन् । सर्वश्चायंकारकषष्ठ्याः पर्युदासो नतु शेषषष्ठ्याः, आनंतर्येण तदेकवाक्यतायाएव न्याय्यत्वात् । अतएव ब्राह्मणस्य कुर्वन्, नरकस्य जिष्णुः, छात्रस्य हसितमित्यादि प्रयोगा अपि संगच्छन्ते ।

एवं "अकेनोर्भविष्यदाधमर्ण्ययोः" ( २ - ३ - ७० ) इति सूत्रात् भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यादित्यर्थकात् एनःहरकोव्रजति, व्रजं गामी, शतं दायीत्यादौ द्वितीयैव- न षष्ठी । अत्र - भविष्यत्कालविहिताकस्यैव ग्रहणा न्नकालसामान्यविहिताके ओदनस्य पाचक इत्यादावद्वितीया । अत्रच - व्याख्यानवशात् न यथासंख्यमन्वयः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपितु -अकस्य भविष्यत्येव । इनस्तु - उभयोः । तेन गामीत्ययं भविष्य तीनिः-दायीत्ययमाधमर्ण्ये णिनिः ।

एवं - "कृत्यानांकर्तरिवा" ( २ - ३ - ७१)इति सूत्रे भाष्यकारेण योगविभागकरणात् कृत्यानामित्यस्य भिन्नसूत्रत्वप्रतीतेः तत्रचोभयप्राप्तौ नेति पूर्वसूत्रस्थपदद्वयानुकर्षणात् उभयोः कर्तृकर्मणोरनभिधानप्रयुक्तषष्ठीप्रसक्तौ कृत्यानां योगेषष्ठीनेत्यर्थकात् , नेतव्याव्रजं गावः कृष्णेनेति प्रतिषेधः । अपितु - द्वितीयातृतीयेच । अत्रहि नयते र्द्विकर्मकत्वात्मुख्यकर्मणः कृत्येनाभिधानात् गोषु प्रथमा । अमुख्यकर्मणो व्रजस्य त्वनभिधानात् द्वितीया । यत्रतु कर्तृकर्मणोर्मध्ये न्यतरस्य कृत्प्रत्ययेनाभिधानान्नोभयत्र प्राप्तिः । तादृशकृत्यस्य योगे कृद्योग निमित्तकषष्ठ्या नियमेनप्रसक्तौ "कृत्यानां कर्तरिवे"ति सूत्रेण कर्तृषष्ठ्याविकल्पविधानं, कर्तव्यमिदं कृष्णेन कृष्णस्यवा । नच-भावकर्मणोरेव कृत्यविधानात् तत्रच कर्मणः कृत्येनाभिधानादेव तत्र षष्ठ्यप्राप्तेः परिशेषात् कर्तर्येव विकल्पविध्युपपत्तेः कर्तृग्रहणवैयर्थ्यम् । "भव्यगेये"(३-४-६८)ति सूत्रेण कर्तर्यपि यत्प्रत्ययाख्यकृत्यविधानात् तद्योगे कर्मण्यनभिहितत्वेन षष्ठीप्राप्तेः, तत्र विकल्पव्यावृत्त्यर्थं कर्तृग्रहणोपपत्तेः । यथा - गेयो माणवकः साम्नां । अत्र गेय इति कर्तरिकृत्यः सामकर्मक गानकर्ता माणवकइति शाब्दबोधः ।

एवं - "तुल्यार्थैरतुलोमपाभ्यां तृतीयान्यतरस्या" ( २ - ३ - ७२ ) इतिसूत्रात् तुल्यार्थकै स्तुलोपमाशब्दभिन्नैश्शब्दै र्योगे तृतीया स्यात् पक्षे षष्ठीत्यर्थकात् , तुल्य स्सदृश स्समोवा कृष्णेन कृष्णस्य वेत्यत्रपक्षेषष्ठी । अत्र तुलोमपाभ्यामिति द्विवचनं छान्दसम् । अन्यथा — विशेषणविभक्तित्वेन बहुवचनापत्तेः । अयंच - मण्डूकप्लुत्या शेषषष्ठ्याएव पाक्षिकत्वकल्पको विधिः , ननु कारकषष्ठ्याः । तुल्यशब्दस्य तद्धितान्तत्वेन कारकषष्ठ्या अप्राप्तेः । तुलोपमाशब्दयोगेतु शेषषष्ठ्येव । अतएव तुलोपमा वा कृष्णस्य नास्तीत्यत्रशेषेतृतीयायाअविधानात् नतृतीया । कथं तर्हि - "तुलां यदारोहति दन्तवाससा स्फुटोपमंभूतिसितेन शंभुना" इत्यादिकाव्ये तुल्यादि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शब्दयोगे तृतीयेतिचेत् ; तस्याः तोलनोपमानादिरूपधात्वर्थं प्रति करण त्वेनोपपत्तेः । सहयोगनिमित्तिकावेयं तृतीया । साहित्यञ्च - निरूपकत्वं-तस्यच तत्त्वेन तृतीयातो बोधः । प्रकृतेतु शेषत्वार्थकतृतीयायाः पर्युदासइति न कश्चिद्विरोधः ।

अत्र बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणोपपत्तौ अर्थग्रहणं व । अ रनैरपेक्ष्येण बोधकपरम् । तेन गौरिव गवयः, यथागौः तथागवय र्देशादौ न षष्ठ्यादि । प्रथमोत्पत्तिप्रयोजकन्तु पूर्वमेवोक्तम् ।

क

ग एवं " चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" (२-३-७३) इति सूत्रादायुष्याद्यर्थक शब्द योगे आशिषि शेषेचतुर्थीस्या त्पक्षे षष्ठी स्यादित्यर्थकात आयुष्याद्यस्मै, भूयादितिचतुर्थी पक्षेषष्ठी । आयुष्यं -चिरं जीवितं, मद्रं - भद्रमेव, उभयोः पर्यायत्वेपि आयुष्यादिपदानामर्थपरत्वख्यापनाय उभयोपादानम् । यत्तु - व्याख्यानात सर्वत्रार्थग्रहणोपपत्ते र्मद्रभद्रयो न्यतर न पठनीयमिति कैश्चिदुक्तम् । तद्भाष्यकारेण एतत्सूत्रस्याव्याख्याना दुपेक्षितम् । कुशलं - निरामयं, सुखं - शं, अर्थः - प्रयोजनं, हितं-पथ्यं । नच - "हितयोगे चतुर्थीवक्तव्ये" ति वार्तिकादेव तत्सिद्धेः हितग्रहणवैय्यर्थ्यं । अनाशिषि तेन तन्नियमेपि एतस्याशिषिविकल्प विधायकत्वोपपत्तेः । अतएव आयुष्यादौ अनाशिषिष्ठ्येव । चैत्रस्य आयुष्यमस्तीति ।

सर्वथा षष्ठ्यर्थस्सर्वोप्याख्यातार्थेन्वेतीति सिद्धम् ।

एवं - सप्तम्यर्थोपि तत्रैवान्वेति । सच " सप्तम्यधिकरणेचेति " ( २ - ३ - ३६ ) सूत्रानुशिष्टमधिकरणत्वम् । तच्च "आधारोधिकरण" ( १ - ४ - ४५ ) मिति सूत्रनिरुक्तम् । ननु - अधिकरणत्वन्नाम न येनकेनचित्संबन्धेन सम्बन्धित्वं । रूपरसादीनामपि परस्पराश्रयत्वापत्तेः । नापि स्वाधेयसम्बन्धित्वं । आधयत्वस्यैव निर्वक्तुमशक्तेः । तस्य स्वाश्रयसंबन्धित्वरूपत्वे अन्योन्याश्रयप्रसंगाच्च । नापि कारणत्वं । निमित्त

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कारणादावव्याप्तेः । नापि समवायिकारणत्वम् । संयोगेन घटाद्याश्रये जात्याश्रये समवायाश्रयेच भूतलादावव्याप्तेः ।

यत्तु - तद्भिन्नत्वेसति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं - पतनवन्निरूपिताधिकरणत्वं । पतमानपर्णादावाश्रयत्ववारणाय सत्यन्तं । ब्रह्माण्डादिधारक संयोगाश्रयेश्वरवारणाय मूर्तपदोपादानम् । वस्तुतस्तु " यस्मिन्सर्वं प्रतिष्ठितं" "येनेदं धार्यते जग" दित्यादिवचनात् ईश्वरेऽप्यस्त्येवाधिकरणत्वम् । इतरथा ब्रह्माण्डादिधारकत्वस्यैवानुपपत्तेः । अतो मूर्तपदं नैवदेयम् । लक्ष्यं द्रव्यनिरूपिताधिकरणत्वं, आकाशादीनान्तु प्रमाणाभावादेव न द्रव्याधारत्वं , आधेयत्वात् । ईश्वरेतु उक्तवचनादाधारत्ववदाधेयत्वेपि " यःपृथिव्यां तिष्ठन् पृथिवीमन्तरोयमयति " " इश्वरस्सर्वभूतानां हृद्देशेर्जुन तिष्ठती"त्यादि श्रुतिस्मृतिवशान्नक्षतिः । गुणादिनिरूपिताधिकरणत्वं समवायित्वम् । समवायादिनिरूपितंचतत्तत्स्वरूपसंबन्धित्वमितिमतं, तदपिन-अननुगमात् सप्तम्यानानार्थकत्वापात्तेश्चेतिचेत् ।

न अनुगताकारप्रतीत्या प्रतियोगित्वादिवत् अधिकरणत्वाधेयत्वयोश्चाखण्डोपाधित्वस्यैव स्वीकारात् । शक्यतावच्छेदकैक्यानुरोधेनापि करणत्वत्वादिवत्पदार्थान्तरकल्पनेबाधकाभावाच्च । यत्रहि सखण्डपदार्थस्यैव शक्यतावच्छेदकविधया प्रतीतिरानुभाविकी, न तत्र कल्पनम् । यथा विश्वादिपदेषु । यत्रतु तद्घटकपदार्थाप्रतीतावपि तत्प्रतीतिः , तत्र शाब्दव्यवहारानुरोधादपि तत्कल्पनमसकृदावेदितम् । "तत्राधेयत्वमेवाधेयत्वत्वेन सप्तम्यर्थः , तत्रच निरूपकतासंबन्धेन प्रातिपदिकार्थस्य भूतलादेरन्वयः , तस्यचानुयोगितासंबन्धेन घटादावन्वयः" तेन भूतलेघटइत्यत्र भूतलवृत्तिर्घटइत्येवं शाब्दबोध, इति तार्किकाः । तन्न, सप्तम्यधिकरणेचे त्यनुशासनविरोधात् । भूतले घटः, गृहेपचतीत्यादौ सर्वत्रैकरूप्येणान्वयानंगीकारेणानेकव्युत्पत्तिकल्पनापत्तेश्च । अतोधिकरणत्वमेव सप्तम्यर्थः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यद्यपिच संयोगसमवायाद्यवच्छिन्नाधिकरणत्वानिनाना । तथाप्यधिकरणत्वत्वस्य शक्यतावच्छेदकस्य एकत्वान्न नानार्थकत्वं । तत्रचाधेयत्वसंसर्गेण प्रातिपदिकार्थस्यान्वयः । तस्यच निरूपकत्वघटितसंसर्गेण आख्याता र्थभावनाया मन्वयः । तत्र भूतले घटइत्यत्रास्तीति अध्याहारात् सप्तम्यर्थाधिकरणत्वस्य स्वनिरूपकघटवृत्तित्वसंसर्गेणाख्यातार्थे सत्ताश्रयत्वेन्वयः। भूतलनिष्ठाधिकरणत्वनिरूपक घटवृत्तिवर्तमानसत्ताश्रयत्वं घटवृत्तीतिच शाब्दबोधः। नच पूर्वं घटे भूतलस्थे संप्रतिचाधिकरणान्तरस्थे भूतले घटोस्तीति प्रयोगापत्तिः । यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वान्वयः, तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्याबोधनात् । गृहे चैत्रः पचतीत्यत्र स्वनिरूपकचैत्रवृत्तित्वसंसर्गेणाख्यातार्थकृतौ । स्थाल्यामोदनं पचतीत्यत्र स्वनिरूपकौदनकर्मत्वसंसर्गेण तस्यामेव । अतएव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्यतर द्वारकएवाख्यातार्थान्वयः । नतु कारकान्तरद्वारकः साक्षाद्वा । काश्यां ब्राह्मणेभ्यः प्रयच्छतीत्युक्ते कर्तु रेव झटिति काशिस्थत्वप्रतीतिः। यत्रतु - पाटलीपुत्रे स्थितोराजा काश्यां ब्राह्मणेभ्यः प्रयच्छतीत्यादौ ब्राह्मणेषु काशीवृत्तित्वप्रतीतिः, तत्रस्थितेभ्यइति पदाध्याहारेण स्थितिकर्तृद्वारैवेति न विरोधः । अतएव भूभृतिवृक्षात्पर्णं पततीत्यत्र स्थितादिति पदाध्याहारं विना न झटिति भूभृद्वृत्तित्वप्रतीतिः । साक्षात्तु सप्तम्यर्थस्य भावनान्वयो ग्रहणादौ बाधितएव । चैत्रादौतु परया कर्तृसंज्ञया बाधितः। अतोसिद्धं कर्तृकर्मान्यतरद्वारकएव सप्तम्यर्थान्वय इति ।

नन्वेवं - कर्माविवक्षायां, ग्रामे गच्छति ग्रामे गम्यतइति प्रयोगानापत्तिः, ग्रामाधिकरणत्वस्य कर्तृकर्मद्वार-कत्वासंभवात - लक्षणया उद्देश्यत्वं तत्र सप्तम्यर्थइति चेत् ओदने पचतीत्यपि प्रयोगापत्तिः । अतएव धात्वर्थतावच्छेदकफलद्वारकएवान्वयइत्यप्यपास्तम् , ओदनस्यापि तदापत्तेरिति चेत् । तत्रापि कर्तृद्वारकत्वस्य संभवात । ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्वस्य चैत्रेसंभवात् अन्यावच्छेदेन ग्रामप्राप्तिफलकक्रियात्वादि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चैत्रे ग्रामाधिकरणत्वस्य भावित्वात् ग्रामाधिकरणचैत्रवृत्तिगमनानुकूलकृतिमत्वस्य चैत्रे नानुपपत्तिः । पाककर्तुस्तु ओदनाधिकरणत्वाभावात् न तथा प्रयोगः । नन्वेवमपि अग्नौ पचति आतपे तिष्ठति आकाशे पक्षीगच्छति आकाशे तिष्ठन्नाकाशमन्तरीयमयतीत्यादि प्रयोगानुपपत्तिः- अग्न्याद्यधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकत्वायोगात् , नचाग्नौ पचतीति प्रयोगो नास्त्येवेति केषांचिदुक्तं युक्तम् , यस्मिन्नग्नौपचेदन्नं तस्मिन्होमो विधीयतइति बहुतरप्रयोगदर्शनात् , नहि वृत्तिनियामकसंयुक्तसंयोगादिसंबन्धस्याधिकरणतानिरूपकत्वं सम्भवति । अन्यथा आकाशे मनुष्यस्तिष्ठति चैत्रः मैत्रात्मनि तिष्ठतीत्यादिप्रयोगापत्तेरितिचेत् ; तादृशस्थले गङ्गायां घोषइतिव दग्न्यादिपदे तत्संबन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारान्वयोपपत्तेः । तेन अग्नौ पचतीत्यादेरग्निसंयुक्तस्थाल्यां पचति आतपसंयुक्ते गृहे तिष्ठतीत्यर्थः । आकाशपदेन गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशो लक्ष्यते । य मन्तरिक्षमिति व्यवहरन्ति । सप्तम्याअवच्छेदकत्वम् विषयत्वादिवत् । तस्य विभक्त्या लक्षणायामपि न दोषः । तस्योद्देश्यत्वादिवत्सप्तम्यर्थस्यापि साक्षात्सम्बन्धेनैव गमनसंबन्धित्वम् । नहि सप्तम्यर्थमात्रे तन्नियम; । अपितु सप्तमीवाच्यएव । तच्च प्रचुरप्रयोगादधिकरणत्वमेवेति तत्रैवायं नियमः । धातुनाच निराधारं गमनं । तथाच - उक्तविधनभूप्रदेशा वच्छिन्ननिराधारगमनानुकूलकृतिः पक्षिनिष्ठेति शाब्दबोधः । आकाशेतिष्ठन्नित्यादौ संयुक्तसंयोगावच्छिन्न सम्बन्धित्वं लक्षणया सप्तम्यर्थः । षष्ठ्यर्थस्यापि सुपां सुलुक् इत्येवं लक्षणा । तस्यापि पूर्ववद्धात्वर्थद्वारकः कर्तृद्वारकएव वा संसर्गः । वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वात् उपादानत्वमेव सप्तम्यर्थः उपादानकर्तृद्वारकोन्वेति । आकाशे उपादानकारणत्वादनुगतः तिष्ठन्नित्यर्थः ।अस्तुवा एतद्वचनबलादेवाकाशेपि शब्दनिरूपिताधारत्ववदन्तर्यामिनिरूपिताधारत्वमपीति नतत्रलक्षणापि ।

नचैवमग्नौपचतीत्यादिप्रयोगाणां लक्षणयोपपादने आकाशे मनुष्यस्तिष्ठतीत्यादिप्रयोगापत्तिः । तथात्वे गंगायां घोष इत्यादौ गंगापदेन गंगा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्बन्धितीरलक्षणायास्सर्वसम्मतत्वेन भवदुक्तप्रयोगापत्तेरनिवारणात् । अत-स्सिद्धं सप्तम्यर्थाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकोन्वयइति । यस्तु गृहाद्बहिः स्थितेन कर्त्रा दीर्घदण्डादिना काष्ठचलनद्वारागृहमध्ये पाककरणे गृहे पचतीति प्रयोगः, सकर्मककारकस्य तण्डुलादेःपरम्परया गृहाधिकरणत्वान्नानुपपन्नः ।

नन्वेवमपि भूतले घटोनास्ति चैत्रो गृहे न पचतीत्यादौ

कथं कर्तृकर्मान्यतरद्वारकोन्वयः । नहि तत्र भूतल निष्ठाधिकरणत्वनिरूपक घटवृत्तिसत्ताश्रयत्वं अभावप्रतियोगीत्येवं शाब्दबोधस्सम्भवति । भूतले घटदशायामपि तथा प्रयोगापत्तेः । उक्ताश्रयत्वस्य-घटातिरिक्तवृत्त्यभावप्रतियोगित्वात् । नञा घटादिनिष्ठाभावलक्षणायामपि प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिनोप्रसिद्धेश्च । तद्वाक्यादनुभूयमानघटत्वावच्छिन्नप्रतियोगिताक भूतलनिष्ठाभावबोधस्यापलापापत्तेश्च । नहि उक्तविधाभावोस्तीत्येतादृशएव बोधो नेन जनयितुं शक्यः । भूतलनिष्ठाधिकरणत्वस्य सप्तम्यर्थस्या भावद्वारकत्वोपपत्त्या कर्तृकर्मद्वारकत्वनियमभंगापत्तेः । घटस्य प्रतियोगितासंसर्गेणान्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वाभावात्, प्रथमानुपपत्तेश्च । भूतलवृत्तिघटप्रतियोगिताकाभावस्य कर्तृत्वोक्तौ तस्यैकत्वात् घटौ नस्तइति द्विवचनानुपपत्तेश्च । घटोनास्तीति प्रयोगापत्तेश्च । घटएव प्रतियोगितासम्बन्धेनाभावान्वये ऽभावेच भूतलाधिकरणत्वमङ्गीकृत्य भूतलवृत्त्यभावप्रतियोगी घटोस्तीति शाब्दबोधांगीकारेतु अतीते भाविनि वा घटो स्तीति वर्तमानकालान्वयानुपपत्तेः घटो नास्तीति प्रयोगानुपपत्तिः ।

एतेन भूतलाधेयत्वाभावात् घटोस्तीत्यपि शाब्दबोधः प्रत्युक्तः । अथैतद्दोषपरिहारार्थं सप्तम्यर्थाधिकरणत्वस्य निरूपकतासंबन्धेन धात्वर्थे-कालसम्बन्धेन्वयः, तत्रैव लडर्थान्वयोपि । तस्यचाश्रयत्वे आख्यातार्थे, तस्यच, प्रतियोगितासंसर्गेण नञर्थेऽभावे, तस्यच प्रथमान्तार्थे घटादाविति भूतलनिष्ठाधिकरणतानिरूपक वर्तमानकालसम्बन्धाश्रयत्व प्रतियोगिकाभाववन् घटइति शाब्दबोधः । भावनान्वयाभावप्रतियोगिनिच संख्यान्वयो नञस्समभिव्याहारस्थलइति मतं । तदपि न । सप्तम्यर्थस्य साक्षाद्धात्वर्थान्वयाव्युत्पत्तेः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यथा कर्तृत्वाविवक्षायां चैत्रेपच्यत इतिभावेप्रयोगापत्तेः । अतएव सप्तम्यर्थस्य धात्वर्थान्वये परम्परापदोपादानं कर्तृकर्मान्यतरद्वारकत्वोपादानंवा प्रामाणिकानाम् ।

नच नञ्समभिव्याहारस्थले साक्षात्सम्बन्धेनान्वयव्युत्पत्ति कल्पनमितिकेषांचि दुक्तं युक्तम्, चैत्रे नपच्यतइति प्रयोगस्यैवमपि निवारयितुमशक्यत्वात् । आख्यातार्थभावनासंख्यादेर्नञ्समभिव्याहारसत्वेन्यान्वयबोधकव्युत्पत्यन्तरकल्पनापत्तेश्च ।

एतेन नञ्समभिव्याहारस्थले धातुना शक्यार्थाभावोलक्ष्यते, नञस्तु द्योतकत्वात्तात्पर्यग्राहकत्वमेव । सप्तम्यर्थस्यच व्युत्पत्तिविशेषकल्पनया धात्वर्थभूताभावप्रतियोगिनि शक्यार्थे कालसम्बन्धादावन्वयः । भूतलनिष्ठाधिकरणतानिरूपक वर्तमानकालसम्बन्ध प्रतियोगिकाभावाश्रयत्वं घटवृत्तीत्यादिश्च शाब्दबोधः । भावनासंख्यादेश्च न व्युत्पत्त्यन्तरकल्पनमिति केषांचिदुक्तमपास्तम् । कल्पनागौरवस्य तदवस्थत्वात् । चैत्रे नपच्यतइति प्रयोगापत्तेश्च, गृहे न पचतीति प्रयोगानापत्तेश्च । गृहस्य साक्षात् पाकाधिकरणत्वाभावात् ।

अथ तत्र कर्तृद्वारकान्वयस्वीकारेपि भूतले घटो नास्तीत्यत्रैव सप्तम्यर्थस्य धात्वर्थभूताभावप्रतियोगि कालसम्बन्धेन्वय इतिमतम् । ततो स्त्याख्यधातुघटित व्युत्पत्तिकल्पनादतिगौरवं । गृहे न पचतीत्यादौच गृहाधिकरणकचैत्रवृत्ति पाकस्याप्रसिद्धेर्न तदभावो धातुना बोधयितुं शक्यतइति तत्र शाब्दबोधानुपपत्तिः तदवस्थैवेतिचेन्न । इदानीं भूतले घटो नास्तीत्यादावपि भूतलाधिकरणक घटवृत्तिसत्ताश्रयत्वं घटनिष्ठाभावप्रतियोगीत्येव शाब्दबोधात्, प्रसिद्धं हि घटस्य भूतलाधिकरणत्वं कालान्तरे । अतो न प्रतियोगिनोप्रसिद्धिः । नवा व्युत्पत्त्यन्तरकल्पनम् । तथाहि—सप्तम्यर्थस्य तावन्निरुक्तसंसर्गेणाख्यातार्थेन्वयः प्रथमार्थस्यापि कलसमसंसर्गेण तत्रैव, नञापरं लडाद्यर्थ कालावच्छिन्नघटनिष्ठाभावलक्षणा, लडादिश्च तात्पर्यग्राहकमात्रं, इदानींपदस्यच निपातत्वान्नञर्थान्वयेपि न क्षतिः; संभवतिहि उक्तसत्ताश्रयत्वाभावएव तत्कालावच्छेदेन घटे, एतस्मिन्



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



काले एतद्भूतले घटाभावात् । अतएव भूतलवृत्तिघटाभावस्या प्यर्थादनुभूयमानस्य नापलापः । यत्र त्वधिकरणे कदापि न कर्त्रादिसत्ताप्रसिद्धा- तत्रापि नकर्तुर्घटत्वादिना संसर्गघटकता, येन प्रतियोग्यप्रसिद्धिराशंक्येत, अपितु प्रकृतक्रियाश्रयत्वेनैव, तथाच भूतलनिष्ठाधिकरणतानिरूपक वृत्तिवर्तमानसत्ताश्रयत्वं भूतलवृत्तिपरमाण्वादावेव प्रसिद्धं । अयमेव प्रकारः पूर्वत्रानुसन्धेयः ।

एवं लडाद्यर्थस्यापि धात्वर्थान्वयो न त्यक्तोभवति । तात्पर्यग्राहकत्वस्यापिच स्वीकारात् तत्कालावच्छिन्न घटनिष्ठाभावप्रतियोगित्वं उक्तविधाश्रयत्वे अव्याहतं । यदित्वस्मिन् पक्षे घटस्याख्यातार्थे साक्षात्सम्बन्धेना नन्वयात् कर्तृत्वानुपपत्ति राशंक्येत, ततोस्त्वाख्यातस्यैवोक्ताश्रयत्वप्रतियोगि कोक्तविधाभावे सप्तमीनञुभयसमभिव्याहारेलक्षणा, नञ्पदञ्च तात्पर्यग्राहकमात्रम् । तस्मिंश्चाभावे घटस्याधेयत्वसम्बन्धेनैवान्वयात् कर्तृत्वोपपत्तिः । सप्तम्यर्थस्यच तस्मिन्नेवाभावे कर्तृघटित परंपरा सम्बन्धेनैवान्वया न्व्युत्पत्त्यन्तरकल्पना । उक्तविधाश्रयत्वावच्छिन्न प्रतियोगिताकाभावश्च घटे न घटस्य भूतलवृत्तितादशायामित्यर्थात् भूतलाधिकरणक घटाभावबोधः ।

एवं वायौरूपन्नास्ति ह्रदेवह्निर्नास्ति जातौसत्तानास्तीत्यादिप्रयोगा अप्युपपादनीयाः । नच समवायसम्बन्धेन जातिवृत्ते रप्रसिद्ध्या समवायसम्बन्धावच्छिन्न जातिनिष्ठाधिकरणता निरूपक वृत्ति विद्यमान कालसम्बन्धाश्रयत्वा प्रसिद्धेः कथं तदभावस्य सत्तायां बोधः इतिवाच्यम् । जातावपि साक्षात्स्वरूपसम्बन्धेन वृत्तेः प्रसिद्धत्वात् सत्तायामपि निरुक्त सामान्याभावोपपत्तेः । जातौ समवायेन सत्तानास्तीति प्रयोगस्तु निरुक्ताश्रयत्वस्यैव व्यधिकरणसम्बन्धावच्छिन्नाभाव मादायोपपादनीयः । समवायेनेत्यस्यचाख्यातार्थे ऽभावे स्वावच्छिन्नत्व सम्बन्धेनान्वय इति न काप्यनुपपत्तिः ।

एवं गृहे चैत्रो न पचतीत्यादावपि पूर्ववदेव सर्वैः प्रकारैः बोधोपपादनं द्रष्टव्यम् । तत्र त्वयं विशेषः, चैत्रस्य ग्रहस्थत्वे पाकाश्रयत्वाभावमा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्याय पाकाश्रयत्वे ग्रहस्थत्वाभावमादाय उभयाभावे चोभयाभावमादाय विशिष्टाभाव स्सम्पादनीयः । तत्तदभावबोधएवच तात्पर्यभेदेन फलं । एवं-स्थाल्यां तण्डुलं नपचाति चैत्र इत्यत्रापि स्थाल्यां तण्डुलवृत्तित्वाभावे, तण्डुलस्य पाककर्मत्वाभावे पाकस्य चैत्रवृत्तित्वाभावेपिच तात्पर्यभेदोदृष्टव्यः । तात्पर्यग्राहकांतराभावेतु स्थालीपदवैय्यर्थ्यभिया आद्याभावएव, झटित्यर्थात्प्रतीतेः । अतएव "नजीवत्पितृकः कुर्यात् तिलैः कृष्णैश्चतर्पण" मित्यादौ कृष्णत्वाभावएव तात्पर्यं, नतुतिलतर्पणाभावादा वितिव्याचक्षतेवृद्धाः । नान्तरिक्षेनिश्चेतव्य इत्यादौतु सप्तम्यर्थस्य कर्तृकर्मद्वारकत्वासंभवेन प्रतियोग्यप्रसिद्ध्यापत्ते रगत्या नञ्सप्तम्यन्ताभ्या मन्तरिक्ष वृत्त्यभाव लक्षणया तत्प्रतियोगित्व माख्यातार्थेनूद्यतइति तस्यनित्यानुवादता । तत्रसप्तम्यर्थस्य स्वातंत्र्येणान्वयाभावादेवनव्युत्पत्त्यन्तरकल्पना । अतएव अर्थवादवाक्य-लक्ष्यप्राशस्त्यस्या प्यनयैव व्युत्पत्त्याऽऽख्यातार्थभावनान्वयः । अ तरिक्षेघटे नपचतीत्यादौच सप्तम्यन्त नञ्धातुभि रन्तरिक्ष वृत्ति त्वरूप व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक पाकाभावो लक्ष्यते । आख्यातेन • चाश्रयत्वं । तथाच उक्तविधाभावाश्रयत्वं घटवृत्तीति शाब्दबोधः । अतोत्रापिन सप्तम्यर्थान्वय इति न कुत्रापि सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकत्वव्यभिचारः । यत्रतु न सप्तम्यन्तपदसमभिव्याहारश्चैत्रोनपचतीत्यादौ, तत्र नञर्थस्य चैत्रवृत्त्यभावस्य चैत्रवृत्तिकृतौ प्रतियोगितासम्बन्धेनान्वयः । अथवा वर्तमानपाकानुकूलकृत्यभावमाख्यातेन लक्षयित्वा तस्मिं श्चैत्रान्वय इत्यादिबोध्यम् ।

एवं लिङादिसमभिव्याहारेपि चैत्रो न कळंजंभक्षयेदित्यादौ यत्र चैत्रवृत्तिकृतिप्रसिद्धिः तत्र तस्यां न कळंजंभक्षयेदितिवदेव विध्यर्थस्य-स्वप्रयोज्याभावप्रतियोगित्व संसर्गेणैव, नञर्थस्यापि चैत्रवृत्त्यभावस्य प्रतियोगितासंसर्गेणान्वयः । अप्रसिद्धौत्वाख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा तस्मि न्विध्यर्थस्य प्रयोज्यत्वेन चैत्रस्यचाधेयत्वेना न्वय इतिसर्वमनवद्यम् ।

तच्चाधिकरणत्वं त्रिविधं । औपश्लेषिकम्, वैषयिकम्, अभिव्यापकंचेति । कटे आस्ते, घटे ज्ञानमस्ति, मोक्षे इच्छास्ति, सर्वस्मिन्नात्मास्ति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिलेषु तैलमस्ति । उपश्लेषः - सावच्छिन्नवृत्तित्वं । वैषयिकं - विषयतासंबन्धावच्छिन्नं । अभिव्यापकमवच्छेदकावच्छेदेन वृत्तिमत् । सप्तम्यधिकरणे चेति चकारात् दूरान्तिकार्थेभ्योपि सप्तमी वास्यात् । दूरे अन्तिकेवा ग्रामः, दूरे- दूरत्वावच्छिन्नप्रदेशे । प्रतियोगित्वं षष्ठ्यर्थः । यद्यप्यत्राधिकरणत्वादेव सप्तमीप्राप्यते । तथापि द्वितीयादिविभक्तित्रयेण विशेषविहितेन बाधप्रसक्तौ प्रतिप्रसवार्थश्चकारः । एवं 'क्तस्येन्विषयस्य कर्मण्युपसंख्यान' मिति वार्तिकात् इनः शब्दो विषयो वर्तमानभूमिर्यस्य - यदुपरान्शब्द इत्यर्थः तादृशक्तप्रत्ययस्य वस्तुतो यत्कर्म तस्मिन् सप्तमी । अधीतीव्याकरणे । अधीतमनेनेति विग्रहः इष्टादिभ्यश्चेति कर्तरि इनप्रत्ययस्य विधानात् । एतस्य च तद्धितत्वेन कृतपूर्वीकटमितिवत् द्वितीयायां प्राप्तायां कर्माणि सप्तमी विधिः तद्बाधेन, शाब्दबोधश्च तद्वदेव । कर्मचात्र मुख्यमेव, नतु मासादिः, तेन मासमधीतीव्याकरण इत्यत्र काले द्वितीयैव ।

एवं "साध्वसाधुप्रयोगेचे" ति वार्तिकात् साधुः कृष्णोमातरिभवति, असाधुर्मातुल इत्यत्र सप्तमी । अत्र वैषयिकत्वादिना अधिकरणसप्तम्यैवसिद्धौ पुनर्वचनं षष्ठीनिषेधार्थम् । नच"साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतीतेः (२-३-४३) इति वक्ष्यमाणसूत्रेणैव साधुशब्दयोगे सप्तमीसिद्धे रेतद्वार्तिके साधुशब्दग्रहणवैयर्थ्यम् । अनर्चायां प्रतिनायोगेपि साधुशब्दयोगे सप्तमीत्येवं सार्थक्यात् । नचैवं साधुर्भृत्यो राज्ञ इति षष्ठीप्रयोगानापत्तिः । तत्र राज्ञो भृत्यद्वारकान्वयस्वीकारेण साधुत्वद्वारकान्वयानंगीकारात् । नचैवमप्यर्चानर्चादिसाधारण्येन साधुशब्दयोगे सप्तमीविधौ वक्ष्यमाणसूत्रे अर्चाग्रहणवैयर्थ्यं, निपुणपदयोगेर्चायामेव सप्तमीत्येवं सार्थक्यात् । नचैवं एतद्वाक्येनैव साधुशब्दयोगेपि सप्तमीसिद्धेः वक्ष्यमाणसूत्रे साधुशब्दग्रहणवैय्यर्थ्यं । उत्तरभाविवार्तिकेन पूर्वभाविसूत्रे वैय्यर्थ्यशंकाया अनुक्तिसहत्वात् ।

एवं - "निमित्तात्कर्मयोगे" इति वार्तिकात् "चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुंजरम् । केशेषु चमरीं हन्ति सीम्निपुष्कलकोहतः" इत्यादौ सप्तमी । अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम् । अतएव प्र-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



योज्यत्वं सप्तम्यर्थः साक्षात्संबन्धेन क्रियान्वयी । तस्यच कर्मकारकयोगः संयोगसमवायादिर्वास्तव एव सप्तमीप्रयोजको नतु शाब्दबोधे ज्ञातः, अतएव तदभावे वेतनेन धान्यं लुनातीत्यादौ " हेताविव्यनेन " तृतीयैव । तृतीयापवादत्वेनैवचायं सप्तमीविधिः, तादर्थ्यचतुर्थ्यपवादत्वेनवा, तदा वेतनाय धान्यं लुनातीत्यपि प्रयोगः । अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकसंबन्धोऽवयवावयविभावात । चतुर्थेतु संयोगः, सीम्नो ज्ञानार्थं पुष्कलकः शंकुः निखातइति तदर्थात् ।

एवं " यस्यच भावेन भावलक्षणम् " (२ - ३ - ३७ ) इतिसूत्रात् - यत्सम्बन्धिन्या निर्ज्ञातकालया ययाक्रिययाऽ निर्ज्ञातकालायाः कियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते तस्याः क्रियायाः कर्तुः कर्मणोवा स्वाक्रियाद्वारके इतराक्रियालक्षकत्वे विवक्षिते तद्बोधकात् सप्तमी स्यादित्यर्थकात् ब्राह्मणेष्वधीयानेषु गतः, गोषु दुह्यमानासु गतइत्यादौ सप्तमी । अत्र कर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिक्रियाकालकत्वं सप्तम्यर्थः, तस्यच साक्षात्संबन्धेनेतराक्रियान्वयः, पूर्वकियायाश्च कर्तृकर्मविशेषणत्वेपि सप्तमीलक्ष्यसम्बन्धि संसर्गघटकत्वमपि नानुपपन्नम् । एवंच यत्र " इको यणचि" त्यादौ कियानोपात्ता तत्रसतीति सत्तारूपक्रियाध्याहारो बोध्यः । यत्रतु सम्बन्धिनो लक्षकत्वं न विवक्षितं तत्र गावोदुह्यंते चैत्रोगतइति वाक्यद्वयप्रयोगः । अतएव तत्र पूर्वाक्रियाया उत्तराक्रियोपलक्षकत्वबोधः कविकाव्यादिवन्मानसएव । अतएवच समानार्थकत्वाभावात न-सप्तमीविधिः तस्य बाधकः, अपित्वपूर्वविधिः, कथंचित षष्ठी बाधकोवेति ध्येयम् । यत्तु क्रियार्हाणां क्रियाकर्तृत्वादौ विवक्षिते क्रियानर्हाणांच तदभावे विवक्षिते सप्तमी, तथा क्रियार्हाणां तदभावे क्रियानर्हाणां च तस्मिन् विवक्षित इत्येवं वार्तिकं, सत्सुतरत्सुपूज्यमानेषुवा असन्तआसते नपूज्यन्तेवा, असत्सुतिष्ठत्सु अपूज्यमानेषुवा सन्तस्तरन्ति पूज्यन्तेवा, असत्सु तरत्सु पूज्यमानेषुवासन्तास्तिष्ठन्ति न पूज्यन्ते वा इत्यत्र सप्तमीविधायकं, तद्यस्यच भावेन भावलक्षणमित्यनेनैव सिद्धे नारम्भणीय

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिति केचित् । कैयटादयस्तु लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थ मित्याहुः । तन्न - लक्ष्यलक्षणभावातिरिक्त सम्बन्धस्यास्माद्वाक्यादभानेन तस्मिन्नर्थे सप्तमीविधानवैयर्थ्यापत्तेः । अतोर्हत्वाद्यवच्छिन्न कर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिक्रियाकालिकत्वस्य सप्तम्यर्थत्वद्योतनायानुशासनान्तरम् । तथाहि - अत्र प्रथमवाक्यद्वये औचित्यं व्यंग्यम् । अन्त्यद्वयेचानौचित्यम् । तदुपपादकत्वं निरुक्तसप्तम्यर्थस्य, तद्विशेषणीभूतार्हत्वाद्युपपादनार्थंच तिष्ठत्स्वासतइत्येताभ्यां तरणाभावो लक्ष्यते । सदसत्पदाभ्यांच वाच्यव्यंग्यविधया क्रियार्हत्वा नर्हत्वे व्यज्येते । अतश्चैतादृशलक्ष्यलक्षणभावस्य गोषु दुह्यमानासु गतइत्यादिव्यावृत्तस्यात्र विशिष्यानुभूयमानस्यापह्नोतुमशक्यत्वात् पृथगनुशासनं ।

एवं " षष्ठीचानादरे " ( २ - ३ - ३८ ) इतिसूत्रादनादरविशिष्टलक्ष्यलक्षणभावविवक्षायां षष्ठीसप्तम्यौ विकल्पेन । रुदतिरुदतोवा प्राव्राजीत् । रुदन्तं पुत्रमनादृत्येत्यर्थः ।

एवं " स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च " ( २ - ३ - ३९ ) इति सूत्रादेभिस्सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । गोषु गवां वास्वामी । निरूपकत्वं विभक्त्यर्थः । तस्यच स्वाम्यादिद्वारकोस्ति क्रियान्वयः । समानार्थकस्वाम्यादि त्रयग्रहणं पर्यायान्तरानिवृत्त्यर्थं । विरूपाणामपि समानार्थानामिति वार्तिकात् । वक्रदण्डा वितिवत् पदत्रयैकशेषस्तु शब्दस्वरूपपरत्वात् नाशंक्यः । गवां गोषुवाप्रसूतः । गा अनुभवितुं जातइत्यर्थइति हरदत्तः ।

एवं " आयुक्तकुशलाभ्यांचासेवायाम् " ( २ - ३ - ४० ) इतिसूत्रात् गोषु गवां वा आयुक्तः कुशलोवा इत्येवं षष्ठीसप्तम्यौ । आयुक्तोव्यापारितः । विषयसप्तम्यां प्राप्तायां पक्षे षष्ठीविधीयते । आसेवा तदेकपरत्वं । तदभावेतु आयुक्तोगौश्शकटेन, ईषद्युक्तइत्यर्थः ।

एवं "यतश्चनिर्द्धारणम्" (२-३-४१) इतिसूत्रात् जातिगुणक्रियासंज्ञाभि र्यत स्समुदाया देकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते तद्वाचका

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



च्छष्ठीसप्तम्यौस्तः । नृणां नृपुवाब्राह्मणः श्रेष्ठः, गवांगोपुवा कृष्णा बहुक्षीरा, गच्छतां गच्छत्सुवा धावन् शीघ्रगामी, छात्राणां छात्रेपुवा मैत्रःपटुरित्यादौ । अत्रविभक्त्यर्थ उक्तविधनिर्धारणं । तत्रचनिरूपकतया प्रकृत्यर्थान्वयः । तस्यच विषयीभूतब्राह्मणादिवृत्तित्वसंसर्गेण क्रियान्वयः । इदंच पदोपात्तस्य निर्धारणप्रतियोगितावच्छेदकस्य मनुष्यत्वगोत्वादे निर्धारणविषयीभूते ब्राह्मणादौ सत्त्वएव विकल्पाभिधानंबोध्यम् । यदातु तस्य तत्रासत्त्वं तदानिर्धारणप्रतियोगिवाचकात् पंचम्येव ।

पंचमीविभक्ते ( २-३-४२ ) इतिसूत्रात् माथुराः काशीस्थेभ्य आढ्यतराःइत्यादौसप्तमी ।

एवं "साधुनिपुणाभ्या मर्चायां सप्तम्यप्रतेः" (२-३-४३) इतिसूत्रात् मातरिसाधुर्निपुणोवा इत्यत्र सप्तमी । अर्चाभावे निपुणोराज्ञोभृत्यइतिषष्ठी । प्रतिग्रहणमुपलक्षणम्, साधुर्निपुणोवामातरं प्रतिपरि अनुवा, पूर्वमेवचव्याख्यातप्रायमिदंसूत्रम् ।

एवं "प्रसितोत्सुकाभ्यां तृतीयाच" (२-३-४४) इतिसूत्रात् आभ्यांयोगे तृतीयास्या त्सप्तमीचेत्यर्थकात् प्रसित उत्सुको वा हरिणा हरौ वेत्यत्र विकल्पेनसप्तमी । प्रसित आसक्तः । नतुप्रकर्षेणशुक्तः । विषयत्वं विभक्त्यर्थः । तृतीयायाः पाक्षिकत्वार्थंवचनम् ।

एवं "नक्षत्रेचलुपि" (२-३-४५)इति सूत्रा न्नक्षत्रवाचि प्रकृतेः "नक्षत्रेण युक्तः काल"इत्यनेनाणप्रत्ययस्य " लुबविशेष " इतिलुपिकृते नक्षत्रयुक्तकालप्रातिपदिकादधिकरणे तृतीयासप्तम्यौस्त इत्यर्थकात मूलेन मूलेवादेवीमावाहयेदित्यादौ सप्तमी । कालिकाधिकरणत्वं विभक्त्यर्थः । अण् प्रत्ययंकरणेन शुद्धनक्षत्रपरत्वे पुष्येशनिरित्यादौ सप्तम्येव, न तृतीया । कालपरत्वेप्यधिकरणत्वाविवक्षायां अद्यपुष्यइत्यादौ प्रथमापि ।

एवं "सप्तमीपञ्चम्यौकारकमध्ये" (२-३-७) इतिसूत्रात सजातीययोर्विजातीययोर्वा कारकयो र्मध्ये यौकालाध्वानौ तत्र सप्तमीपंचम्यौस्तः इत्यर्थकात् अद्यभुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता, इहस्थोयं क्रोशेक्रोशाद्वा लक्ष्यं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्ये दित्यादौ विकल्पेन सप्तमी । अत्र यद्यपि भोजनद्वयेप्येकएव पुरुषः कर्तृकारकम्, तथाप्यद्यतनकालीन भोजनक्रियानिरूपित कर्तृत्वात् द्व्यहकालीन भोजनक्रियानिरूपित कर्तृत्वस्य भेदात् कारकद्वयमध्यत्वं। द्वितीयोदाहरणेतु अयमिति कर्ता लक्ष्यमिति कर्म इहेत्यधिकरणमिति विजातीयमध्यत्वं । सर्वत्राधिकरणत्वं विभक्त्यर्थः । अपादानत्वाद्यसंभवात् । पक्षेपंचमीप्राप्त्यर्थं विधिः ।

एवमधिकशब्देनापि योगे लोके लोकाद्वाऽधिको हरिरित्यादौ पंचमीसप्तम्यौज्ञेयौ । तदस्मिन्नधिकं यस्मादधिकमिति च सूत्रीयद्विविधनिर्देशात्, निरूपितत्वं विभक्त्यर्थः। स्वसम्बन्धाधिक्याश्रय वृत्तित्व संसर्गेण क्रियान्वयी ।

एवं "यस्मादधिकंयस्यचेश्वरवचनं तत्रसप्तमी" (२-३-९) इतिसूत्रादाधिक्यार्थक कर्म प्रवचनीययुक्ते सप्तमी स्यादित्यर्थकात् उपपरार्धे हरेर्गुणा इत्यादौ सप्तमी । अत्र उपाधिकेचेतिसूत्रादुपेत्ययं कर्मप्रवचनीयः । तद्युक्तेपरार्धपदे सप्तमी । प्रतियोगित्वं सप्तम्यर्थः। स्वसम्बन्धाधिक्याश्रय गुणवृत्तित्वेन क्रियान्वयी । उपपदं तात्पर्यग्राहकम् ।

एवं "अधिरीश्वरे" (१-४-९७) इतिसूत्रादैश्वर्ये अधिः कर्मप्रवचनीयसंज्ञस्तद्युक्ते ऐश्वर्यप्रतियोगिनि तदनुयोगिनिच अधिरामेभूः, अधिभुविरामइत्यादौ पर्यायेणसप्तमी। अत्र क्रमेण अनुयोगित्वं प्रतियोगित्वंच सप्तम्यर्थः। स्वसम्बन्ध्यैश्वर्यसम्बन्धीतर वृत्तित्व माख्यातार्थसंसर्गः। अधिस्तात्पर्यग्राहकः। रामप्रतियोगिकस्वत्वाश्रयाभूः, भूवृत्तिस्वत्वप्रतियोगीरामइति च फलितोर्थः । सप्तिद्धंसप्तम्यर्थः शक्योलाक्षणिकोवा सर्वोपि भावनान्वयीति ।

तदेवं लिंगसंख्या व्यतिरिक्त सुबर्थ मात्रस्य सिद्धोभावनान्वयः ।

नवीनानांनानामनन विशदानामस्यमहो सुयुक्तीनां पुंजैरिहविरचितः कोपिजगति। महातर्कस्तर्कप्रथिततमसज्ञाततमसां सुधाकृन्मीमांसामतकुमुदपूरस्यजयतु॥*

यद्वद्वनानां पटलोविशालो विलोक्यतेल्पेकिलदर्पणेपि ।
तद्वन्मदीयेपि निबन्धनेस्मिन्नुद्वीक्ष्यतां भाट्टरहस्यसारः ॥ * ॥

इति श्रीखण्डदेवविरचिते भाट्टरहस्ये प्रथमः परिच्छेदः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

No. 86 ] [ *Price Rupee One.*

THE

# CHOWKHAMBÂ SANSKṚIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

# ब्रह्मसूत्रवृत्तिः ।

## मरीचिका

श्रीव्रजनाथभट्टकृता

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा

रत्नगोपालभट्टेन संशोधिता ।

## MARÎCHIKÂ

A GLOSS ON BRAMHASUTRA

BY

BRÂJA NÂTH BHAṬṬA

EDITED BY

*Ratna Gopâl Bhaṭṭa.*

FASCICULUS I.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES.

AGENTS:--OTTO HARRASSOWITZ, LEIPZIG:

PANDIT JYESHTHARAMA MUKUNDJÎ, BOMBAY.

*Printed by Hari Dâs Gupta Proprietor*

AT THE VIDYA-VILASA PRESS.

BENARES.

1905.

*Registered Ac cording to Act XXV of 1867.*

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—८६

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीकृष्णाय नमः ।

# ब्रह्मसूत्रवृत्तिः ।

## मरीचिका

### श्रीव्रजनाथभट्टकृता

नत्वा श्रीवल्लभाचार्यपादपद्मयुगं सदा ॥
तदीयभाष्यमार्गेण व्याससूत्रार्थ ईर्यते ॥ १ ॥

अथ वेदान्तानां विचार आरम्भणीयो न वेति विशये साङ्गवेदाध्ययनादेवार्थनिश्चयेन विचारे विशेषाभावाद् वेदान्तवाक्यार्थज्ञानादेव ब्रह्मज्ञानस्यापि सम्भवाद् विरुद्धवाक्यानामपि सर्वभवनसमर्थे ब्रह्मणि विरोधाभावेन निर्धारसम्भवादनारम्भणीय एव विचार इति प्राप्ते, उच्यते। सन्देहवारणार्थं विचार अवश्यकः । अत एव भगवान् व्यासस्तत्कर्तव्यत्वं प्रतिजानीते ।

अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अथशब्दोऽधिकारार्थः। जिज्ञासापदं विचारार्थकम्। यस्मात् कर्मादिभ्यो ब्रह्मज्ञानमेव पुरुषार्थसाधकम् अतस्तज्ज्ञानाय विचारोऽधिक्रियत इति सूत्रार्थः। विचारस्य वेदान्तविषयकत्वात् त्रैवर्णिक एवाधिकारी। ब्रह्मण इति शेषषष्ठीसमासाद् ब्रह्मसम्बन्धि सर्वं विचार्यमिति सिद्धम् ॥ १ ॥

तद्ब्रह्म जगत्कर्तृ, आहोस्विदकर्तृ इति संदेहे फलवाक्ये सत्यं ज्ञानमित्येवोक्तत्वात्, तस्माद्वा एतस्मादात्मनः, यतो वा इमानि भूतानित्यादिवाक्येष्वपवादार्थमारोपेणापि कर्तृत्वकथनसम्भवादकर्तृ इति प्राप्ते उच्यते ।

जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जन्म आद्यस्य आकाशस्य यतः, ब्रह्मणो विचार्यत्वात्तद् ब्रह्मेत्यायाति । तस्माद्वा इति श्रुतिसिद्धमाकाशस्य प्रथमकार्यत्वम् । एतेन यतो वा इमानीत्यादिश्रुत्युक्ताः सर्व एव सृष्टिप्रकाराः सूचिताः । कुतः शास्त्रयोनित्वात् । शास्त्रोक्तकारणत्वादित्यर्थः । वेदरूपशास्त्रस्य परमाप्तत्वेन अणुमात्रमप्यन्यथाकथनासम्भवात् कर्तृत्वादिधर्माणां ब्रह्मणि विरोधाभावेन तत्कथनस्यापवादार्थत्वेन वक्तुमयुक्तत्वात् सर्वज्ञं सर्वशक्तिमत् सर्वकर्तृ ब्रह्मेति सिद्धम् ॥ २ ॥

तद् ब्रह्म समवायिकारणं निमित्तं वेति संशये, यतो वा इमानीत्यत्र पञ्चमीश्रवणात् समवायित्वस्य क्वाप्यश्रवणान्निमित्तमेवेति प्राप्ते, उच्यते ।

## तत्तु समन्वयात् ॥ ३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । तद् ब्रह्मैव समवायिकारणं, कुतः समन्वयात्, अस्तिभातिप्रियत्वेन ससच्चिदानन्दरूपेण सम्यगनुवृत्तत्वात् ।अतः, स आत्मान ँ स्वयमकुरुतेतिश्रुतेर्ब्रह्मण एव समवायित्वम् । निमित्तत्वन्तु सर्ववादिसम्मतमस्त्येव । एवं ब्रह्मजिज्ञासां प्रथमसूत्रेण प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकं जगत्कर्तृ समवायि चेत्युक्तम् । एवं त्रिसूत्र्या जिज्ञासालक्षणविचारस्य कर्तव्यता सिद्धा ॥ ३ ॥

तत्र ब्रह्मणि चतुर्धा विचारः । स्वरूपसाधनफलप्रतिपादकवेदान्तवाक्यैस्त्रिविधैर्मतान्तरनिराकरणेन च । तत्र स्वरूपविचारानन्तरं मतान्तरनिराकरणं विना साधनफलयोर्निरूपयितुमशक्यत्वात् क्रमेणैतच्चतुष्टयमध्यायचतुष्टयेन निरूप्यते। अतः प्रथमेऽध्याये स्वरूपवाक्यानां विचारः । तानि पुनः सन्दिग्धासन्दिग्धभेदाद् द्विविधानि । तत्र निःसन्दिग्धानामविचार्यत्वात् सन्दिग्धानां कार्यप्रतिपादकान्तर्यामिप्रतिपादकोपास्यस्वरूपप्रतिपादकप्रकीर्णकभेदेन चतुर्विधत्वात् प्रत्येकं क्रमेण चरणचतुष्टयेन प्रतिपाद्यन्ते । तत्र प्रथमपादस्य कार्यप्रतिपादकवाक्यनिर्णायकत्वात् सच्चिदानन्दरूपेणाऽऽकाशवायुतेजोवाक्यानि षड्विधान्यपि निर्णीयन्ते । अन्यत्रान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति । तत्र लक्षणविचार एव सद्रूपाणां वाचकता

आवाङ्नीचैर्यान्तीति अवाक्याति
आपः पृथिवी च

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



या निर्णीतत्वाच्चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थं ज्ञानस्य सप्तद्वारत्वात् सप्तभिः सूत्रैरीक्षत्यधिकरणमारभ्यते। तत्र ब्रह्मणः स्वप्रकाशत्वेन सर्वप्रमाणाविषयत्वाद्, यतो वाच इति श्रुतेश्च विचारः कर्तुं न शक्यते, उत विरोधपरिहारेण कर्तुं शक्यत इति संशये ब्रह्मणः सर्वव्यवहारातीतत्वाद्विचारानर्हतेत्याशङ्क्याह।

## ईक्षतेर्नाशब्दम् ॥ ४ ॥

न विद्यते शब्दो यत्रेत्यशब्दं सर्ववेदान्ताद्यप्रतिपाद्यं ब्रह्म न भवति। कुतः? ईक्षतेः। तदैक्षतेत्यादिश्रुतिषु ब्रह्मण ईक्षाप्रतिपादनात्। एवञ्च सर्वव्यवहारातीतोऽपि लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीतीच्छयेक्षणाद् विचारविषय इति सर्वं सुस्थम् ॥ ४॥

ननु यतो वा इमानि, निष्कलं निष्क्रियमित्यादिश्रुतेर्ब्रह्मणः कर्तृत्वमकर्तृत्वं च प्रतीयते। ततो विरुद्धसर्वधर्माश्रयत्वकल्पनापेक्षया लौकिककर्तृत्वादेर्बाध उचितः। ईक्षत्यादिकं तु प्रकृतिगुणसम्बन्धाद्भविष्यतीत्याशङ्क्य परिहरति।

## गौणश्चेन्नात्मशब्दात् ॥ ५ ॥

ईक्षत्यादियुक्तः परमात्मा गौणः प्रकृतिगुणतत्त्वसम्बन्धवानितिचेन्न, कुतः आत्मशब्दात्। आत्मा वा इदमेक एवेत्युपक्रम्य, स ऐक्षतेत्युक्तम्। आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः। तद्वाच्यस्यैव जगत्कर्तृत्वमत्रोच्यते। अन्यतरबाधपक्षस्तु न युक्तः। तथा सति सगुणस्य कर्तृत्वापत्तौ ब्रह्मणः स्वातन्त्र्यं भज्येत। अतः स्वतःप्रमाणभूतश्रुतिबलात् सर्वभवनसामर्थ्यं विरुद्धसर्वधर्माश्रयत्वं च ब्रह्मणि मन्तव्यम् ॥ ५॥

नन्वात्मशब्दोऽपि यज्ञदत्तो ममात्मेतिवदुपचारादस्त्वित्याशङ्क्य परिहरति।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥

तदात्मानं स्वयमकुरुतेत्युपक्रम्य, यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवतीति। लौकिकधर्मरहिते ब्रह्मणि जगत्कर्तरि परिनिष्ठितो मु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



को भवतीत्यर्थः । यदि जगत्कर्ता गौणः स्यात्तन्निष्ठस्य संसार एव स्यान्न मोक्षः ॥ ६ ॥

हेत्वन्तरमाह ।

## हेयत्वावचनाच्च ॥ ७ ॥

यदि जगत्कर्ता सगुणः स्यात् तदा वेदान्तेषु साधनोपदेशप्रसङ्गे हेयत्वेन पशुपुत्रादिवदुपदिष्टः स्यान्नत्वेवम् । अत ईक्षत्यादयो न सगुणधर्माः । पूर्वोक्तानामीक्षतिहेतुसाधकत्वबोधनार्थं चकारः ॥७॥

सृष्टिवाक्यानामीक्षतिहेतूनां भगवत्परत्वमुक्त्वा प्रलयवाक्यानां तत्परत्वमाह ।

## स्वाप्ययात् ॥ ८ ॥

ब्रह्मणो न व्यवहारातीतत्वं, कुतः ? यत्रैतत्पुरुषः स्वपितीतिश्रुत्या स्वस्मिन् ब्रह्मणि जीवस्याप्ययात् लयप्रतिपादनादित्यर्थः ॥८॥

सुषुप्तिवाक्यानां ब्रह्मपरत्वमुपपाद्य मुक्तिवाक्यानामाह ।

## गतिसामान्यात् ॥ ९ ॥

गतौ मोक्षे सामान्यात् । समानस्य भावः सामान्यम् । यथा सर्वासामपां समुद्र एकायनमित्यादिश्रुत्या सर्वस्य शुद्धब्रह्मसाम्यप्रतिपादनादित्यर्थः ॥ ९ ॥

किञ्च ।

## श्रुतत्वाच्च ॥ १० ॥

पूर्णमद इति, सर्वे वेदा यत्पदमामनन्तीति च श्रुत्या निःसन्दिग्धं ब्रह्मणः सर्वकार्यत्वं प्रतिपादितमतो ब्रह्मणः सर्वत्र प्रतिपाद्यमानत्वादशब्दत्वशङ्कानवकाश इति सिद्धम् । अधिकरणपूर्णत्वबोधकश्चकारः ॥ १० ॥

एवं चिद्रूपस्य कारणत्वनिरूपणेन तत्प्रतिपादकश्रुतीनां ब्रह्मपरत्वं निरूप्य, आनन्दरूपस्य कारणतानिरूपणेन तत्प्रतिपादकवाक्यानां ब्रह्मपरत्वं निरूप्यते, आनन्दमयाद्यष्टभिः सूत्रैः । षडिन्द्रियस्वरूपद्वयानन्दभेदेन आनन्दस्याष्टविधत्वात् । तत्र तैत्तिरीयशाखा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थां ब्रह्मभृगुप्रपाठकद्वये श्रुतस्य मयट्प्रत्ययान्तस्यानन्दमयपदस्याब्रह्मवाचकत्वे सम्पूर्णप्रपाठकस्य ब्रह्मपरत्वं न स्यादिति तन्निराकरणार्थमधिकरणारम्भः । तत्राब्रह्मान्नमयादितुल्यवचनात् प्रियमेव शिर इत्यादिना सुखवाचकशब्दानामेवोक्तत्वादब्रह्मपरत्वमुत आनन्दस्य जगत्कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात् फलत्वेनोपपादनार्थत्वात् प्रपाठकस्य तस्याब्रह्मत्वे प्रपाठकवैयर्थ्यापत्तेरानन्दमयपदस्य ब्रह्मपरत्वमेवेति संशये, अन्नमयादिषु विकारार्थकमयट्प्रत्ययदर्शनात् तत्प्रायपाठादानन्दमयस्यापि न ब्रह्मपरत्वमिति प्राप्ते, उच्यते ।

## आनन्दमयोऽभ्यासात् ॥ ११ ॥

आनन्दमयशब्दवाच्यः परमात्मा, नान्यः । कुतः अभ्यासात् । अभ्यसनं पुनः पुनः कीर्तनं तस्मात् । यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयातीत्यादिष्वभ्यर्हितत्वेन फलत्वसूचकेनाभ्यासेन आनन्दमयस्य ब्रह्मत्वं सूच्यते ॥ ११ ॥

ननु लोके मयटो विकारार्थकत्वदर्शनादानन्दमयपदस्य न ब्रह्मपरत्वमित्याशङ्क्य परिहरति ।

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥

विकारवाची शब्दो मयट्प्रत्ययो यस्मिंस्तद्विकारशब्दम आनन्दमयपदं तस्माद् ब्रह्मवाचकं तन्न भवति, ब्रह्मणोऽविकारात्मकत्वादितिचेन्नायं विकारे मयट्, किन्तु प्राचुर्यमततीति प्राप्नोतीति प्राचुर्यात् । विकारार्थकमयटो, द्व्यचश्छन्दसीतिनियमेन वेदे द्व्यज्व्यतिरिक्तस्थले विधानाभावात्तत्प्रकृतवचनेऽत्र मयडित्यर्थः । प्राचुर्येण प्रस्तुतं वचनं तत्प्रकृतवचनं तस्मिन् मयडित्युक्त्याऽऽनन्दस्यात्र, को ह्येवान्यादित्यादिना स्तुतत्वेन तदर्थकोऽत्र मयडितिभावः ॥ १२ ॥

शब्दबलविचारेण मयटो विकारार्थकत्वं निवार्यार्थबलविचारेणापि तदर्थकत्वं निराकरोति ।

## तद्धेतुव्यपदेशाच्च ॥ १३ ॥

एष ह्येवानन्दयातीति श्रुत्या तस्यानन्दमयस्यान्यानन्दं प्रति हेतुत्वेन व्यपदेशादित्यर्थः । एतस्यापि विकृतत्वेऽस्यापि सत्कारणत्वा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्न्यनिषेधपूर्वकमेतस्यैव कारणत्वप्रतिपादकं वाक्यं व्यर्थं स्यादिति भावः । अतो नाऽऽनन्दमयशब्दो विकारार्थकः ॥ १३ ॥

नन्वन्नमयादिवदुपासनापरत्वेनापि श्रुत्युपपत्तेः पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्तत्वाच्च ब्रह्मत्वेन सामान्यतः साधितमप्यावश्यकोपपत्त्यभावान्न ब्रह्मपरत्वमित्याशङ्क्याह ।

## मान्त्रवर्णिकमेव च गीयते ॥ १४ ॥

सत्यं ज्ञानमित्यारभ्य ब्रह्मणा विपश्चितेत्यन्तो मन्त्रः । मन्त्रेणाभिधया मुख्यया वृत्त्या, प्रतिपाद्यं मान्त्रवर्णिकम् । तत्र, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यनेन ब्रह्मणा सह नानाविधकामाशनात्मकसायुज्यरूपफलस्यैव मुख्यतया कथनात् तस्य ब्रह्मण एव आनन्दमयत्वेन सर्वकर्तृत्वेन सर्वान्तरत्वेन परमफलत्वेन सर्वस्मिन् प्रपाठके उपपादनं गम्यते । अत आवश्यकोपपत्तिसद्भावादानन्दमयः परमात्मैवेति सिद्धम् । चकारो विधिमुखविचारेणाधिकरणसम्पूर्णत्वबोधकः ॥ १४ ॥

निषेधमुखेनेदमेव पुनश्चतुःसूत्र्या विचार्यते दार्ढ्याय ।

ननु ब्रह्मणा सह फलभोक्तृत्वाज्जीव एवानन्दमयोऽस्त्वित्याशङ्क्य परिहरति ।

## नेतरोऽनुपपत्तेः ॥ १५ ॥

इतरो जीव आनन्दमयो न भवतीत्यर्थः । कुतः ? अनुपपत्तेः आनन्दमयस्य जगत्कर्तृत्वेनात्रोक्तेस्तस्य च जगद्व्यापारवर्जमित्यनेन जीवे निषिध्यमानत्वान्नानन्दमयो जीवः ॥ १५ ॥

अत्रैव हेत्वन्तरमाह ।

## भेदव्यपदेशाच्च ॥ १६ ॥

रस ँ ह्येवायं लब्ध्वानन्दीभवतीति, एषह्येवानन्दयातीति जीवानन्दयोर्भेदेन व्यपदेशाच्च नानन्दमयो जीवः ॥ १६ ॥

नन्वानन्दमयस्य जगत्कारणत्वेन निरूपणान्मतान्तरे प्रकृतेरपि जगत्कारणत्वोक्तेः प्रकृतिरेवानन्दमयशब्दार्थो भवत्वित्याशङ्क्य परिहरति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कामाच्च नानुमानापेक्षा ॥ १७ ॥

आनन्दमयनिरूपणानन्तरं, सोऽकामयतेतिश्रुतत्वाज्जडायाः प्रकृतेः कामनासम्भवात्, चकारात् स तपोऽतप्यतेतिश्रुत्युक्ततपसोऽप्यसम्भवात् प्रकृतेरपेक्षा नास्तीत्यर्थः ॥ १७ ॥

हेत्वन्तरमाह ।

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥

अस्मिन्नानन्दमयेऽस्य जीवस्य च आनन्दमयमात्मानमुपसंक्रामतीति श्रुत्या तेन रूपेण योगं शास्ति फलत्वेन कथयति । नहि जीवस्य जडापत्तिर्युक्ता। अत आनन्दमयशब्दवाच्यो न जीवो, नापि जडः, किन्तु ब्रह्मैवेति सिद्धम् ॥ १८॥

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादि श्रूयते । तत्र त्रेधा संशयः सम्भवति । किमधिष्ठातृदेवताशरीरमाहोस्विद् ब्रह्मणः शरीरमुत परब्रह्मैवेति । तत्र हिरण्मयशब्दस्य सुवर्णविकारवाचित्वात् । केशनखादीनां शरीरधर्माणां प्रतीयमानत्वाद् दृश्यत इति चाक्षुषत्वोक्तेरिन्द्रियवत्वश्रवणाच्च सूर्यमण्डलस्थोऽधिकारी जीव एव कश्चिदुपासनार्थमत्रोक्त इति ज्ञायते । अथोच्यते, सर्वेभ्यः पाप्मभ्य उदित इत्यपहतपाप्मत्वादिश्रवणान्न जीव इति तर्हि ब्रह्मण एव कार्यविशेषार्थं परिगृहीतो देहोऽस्त्वेतद्वाक्यप्रतिपाद्य इति प्राप्ते, उच्यते ।

## अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥

अन्तर्दृश्यमानः परमात्मैव । कुतः? तद्धर्मोपदेशात् । अपहतपाप्मत्वरूपब्रह्मणोऽसाधारणधर्मोपदेशात् । वेदान्तेषु तत्तत्प्रकरणे एकोऽप्यसाधारणो ब्रह्मधर्मो विद्यमानः शिष्टान् साधारणत्वेन सन्दिग्धान् धर्मांस्तद्धर्मत्वेनैव निश्चिनोतीति मर्यादा । ब्रह्मणः शरीरमिति पक्षस्त्वसङ्गतः । सर्वकरणे स्वतः समर्थस्य ब्रह्मणः का वानुपपत्तिर्येन स्वस्यापि शरीरं कल्पयेत् । आनन्दस्वरूपमेव लीलार्थं शरीरधर्मयुक्तं भासते । इच्छया तच्चाक्षुषमपि भवति । हि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्ण्मयशब्दस्यानन्दवाचकत्वान्मयटः प्राचुर्यार्थकत्वात् । परब्रह्मैवात्र प्रतिपाद्यम् ॥ १९ ॥

हेत्वन्तरमाह ।

## भेदव्यपदेशाच्चान्यः ॥ २० ॥

अन्तर्यामिब्राह्मणे य आदित्ये तिष्ठन्नादित्यादन्तर इत्यादिश्रुत्या आधिदैविकस्य सूर्यमण्डलतदभिमानिभ्यां भेदेन निर्देशात् सूर्यमण्डलस्थः परमात्मैवास्मिन् वाक्ये प्रतिपाद्य इति सिद्धम् ॥ २० ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यादि श्रूयते । तत्रास्य प्रकरणस्य सन्दिग्धत्वाद् भूताऽऽकाशः प्रतिपाद्यते, ब्रह्म वेति संशये, आकाशशब्दस्य भूताकाशे निरूढत्वात् स एव प्रतिपाद्य इति प्राप्ते, उच्यते ।

## आकाशस्तल्लिङ्गात् ॥ २१ ॥

आकाशशब्दवाच्यः परमात्मैव, कुतः? तल्लिङ्गात् सर्वगतित्वादिब्रह्मलिङ्गानामस्मिन् प्रकरणे प्रतिपादनात् सर्वजगत्कारणत्वादिधर्माणां भूताऽऽकाशेऽसम्भवाद् रूढिं बाधित्वा लिङ्गवशादाकाशशब्दस्य ब्रह्मपरत्वं, ब्रह्मणः सर्वशब्दवाच्यत्वान्न लक्षणा । तस्मादत्राकाशशब्दो ब्रह्मपर इति सिद्धम् ॥ २१ ॥

प्रस्तोतर्या देवता प्रस्तावमन्वायतेत्युपक्रम्य श्रूयते, कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि, भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते इत्यादि । तत्रासन्यः प्राणो ब्रह्मवेति विशये मुख्यप्राणेऽपि स्वापादौ सर्वभूतसंवेशनस्य, यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येतीत्यादिश्रुत्योपपादनात् । यथा प्राणविद्यायां न ब्रह्मपरत्वमेवमस्यापि वाक्यस्येति विशेषाशङ्काकाङ्क्षायां पूर्वोक्तन्यायमतिदिशति ।

## अत एव प्राणः ॥ २२ ॥

अस्मिन्नपि प्रकरणे भूयसां ब्रह्मलिङ्गानां श्रवणात् प्राणशब्दवाच्यं ब्रह्मैवेति सिद्धम् ॥ २२ ॥

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं तावद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिरिति श्रूयते । तत्र ज्योतिःशब्दवाच्यं प्राकृतं ज्योतिर्ब्रह्मवेति संशये, अत्रासाधारणब्रह्मधर्माऽभावात् प्राकृतं ज्योतिरेव वाच्यमिति प्राप्ते, उच्यते ।

## ज्योतिश्चरणाभिधानात् ॥ २३ ॥

अत्र ज्योतिःशब्दवाच्यं ब्रह्मैव, कुतः? चतुष्पाद्ब्रह्मनिरूपणे ज्योतिषश्चतुर्थचरणत्वेनाभिधानात् । अतः पादानां ब्रह्मधर्मत्वाज्ज्योतिषो ब्रह्मत्वम् ॥ २३ ॥

ननु नात्र चतुष्पाद् ब्रह्म निरूप्यते । किन्तु गायत्री वा इदं सर्वमित्युपक्रमाद्गायत्रीछन्दः । ब्रह्मशब्दोऽपि तस्यैव प्रकृतत्वात्तत्पर एवेति छन्दस एव पादाभिधानान्नात्र ब्रह्मधर्माः पादा इत्याशङ्क्य समाधत्ते ।

## छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २४ ॥

नैष दोषः । तथाचेतोऽर्पणनिगदात् । गायत्री वा इदं सर्वं यदिदं किञ्चेति गायत्रीद्वारा ब्रह्मणि चेतसोऽर्पणं निगद्यते । वर्णसमाम्नायरूपगायत्र्याः सर्वत्वमुपचारं विना न सम्भवतीति तद्वारा तत्प्रतिपाद्यब्रह्मणि बुद्धिप्रवेशार्थं तथा निरूपणम् । कस्मादेवं प्रतिपाद्यत इत्याशङ्क्याह । तथा हि दर्शनम् । तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति । स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति, हि युक्तम् । लोके दृष्टं सूचीसूत्रादौ, स्वतो यन्न प्रविशति, तदुपायेन प्रवेश्यत इति ॥ २४ ॥

किञ्च ।

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २५ ॥

भूतादयो भूतपृथिवीशरीरहृदयानि चत्वारि पादा व्यपदिश्यन्ते । नह्येतानि गायत्र्याः पादा भवितुमर्हन्ति । ब्रह्मणस्तूपपद्यन्ते । यावद् ब्रह्मपरत्वेन मुख्यमुपपद्यते, न तावद्गौणं कल्पनीयमिति ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गायत्रीशब्दस्यार्थाः पादा न भवन्तीति चकारार्थः । अतः पादानां ब्रह्मधर्मत्वम् ॥ २५ ॥

ननु त्रिपादस्याऽमृतं दिवीति सप्तम्याऽऽधारत्वं प्रतिपाद्यते । अतः परो दिवो ज्योतिर्दीप्यत इत्यत्र पञ्चम्याऽनाधारत्वं प्रतिपाद्यत इत्युपदेशभेदात् पूर्वोक्तपरामर्शाभावान्न ज्योतिषो ब्रह्मत्वमित्याशङ्क्य परिहरति ;

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥

नैष दोषः । उभयस्मिन्नप्यविरोधात्तामन्त्रे दिव्येवोक्तम्, अस्मिन् वाक्ये सर्वत्रोच्यते । सर्वत्र विद्यमानस्य दिवि विद्यमानत्वं, न विरुद्ध्यते । अतः परमित्यत्राऽतः शब्देन न तत्राविद्यमानत्वं, किन्तु ततोऽप्यन्यत्र सत्त्वं बोध्यते । तस्मात् सप्तमीपञ्चमीनिर्देशौ न विरुद्धौ॥२६॥

कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनसंवादे इन्द्रेण प्रतर्दनाय वरदाने, मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य इत्युपक्रम्य त्वाष्ट्रवधादिनाऽऽत्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य, कस्त्वमिति विवक्षायां, प्राणो वा अहमस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेत्युक्त्याऽऽयुषः प्राणत्वमुपपाद्य; अमृतत्वं च प्राणस्योपपाद्य, प्राणेन ह्येवामुष्मिंल्लोकेऽमृतत्वमाप्नोतीति फलं प्रतिपादितम् । तत्र प्राण आसन्यो ब्रह्म वेति संशये, अत्र साधकासाधारणधर्मस्याभावाद् बाधकानां च विद्यमानत्वात् प्राणशब्दवाच्य आसन्य एवेति प्राप्ते, उच्यते ।

## प्राणस्तथानुगमात् ॥ २७ ॥

प्राणशब्दवाच्यः परमात्मैव, कुतः ? तथानुगमात् । अस्मिन् वाक्ये पौर्वापर्येणालोच्यमाने पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते । उपक्रमे वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः, त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति परमपुरुषार्थं वरं वृतवान् । तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् । न हि तदन्याद्धिततममस्ति । क्षीयन्ते चास्य कर्माणीतिश्रुतेः पापाभावोऽपि ब्रह्मज्ञान एव । प्रज्ञात्मत्वं च तस्यैव सम्भवति । उपसंहारेऽप्यानन्दोऽजरोऽमृत इति, एष लोकाधिपतिरित्यादि तस्यैवो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पपद्यते । अतः सर्वत्रानुगमात् प्राणः परमात्मा ॥ २७ ॥

शङ्कते ।

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २८ ॥

यदुक्तं, प्राणो ब्रह्म । तन्न, कुतः ? वक्तुरात्मोपदेशात् । वक्ताहीन्द्र आत्मानमुपदिशति । मामेव विजानीहीत्युपक्रम्य, प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वेति । स एष प्राणो वक्तुरात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात् । एवञ्च वाचो धेनुत्वोपासनवदिन्द्रस्य प्राणत्वेनोपासना बोध्यते । अन्ये ब्रह्मधर्माः प्राणस्तावका इति नेदं ब्रह्मोपाख्यानमिति चेन्न । अध्यात्मसम्बन्धभूमा ह्यस्मिन् । अस्मिन् प्रकरणे आत्मानमधिकृत्य यः सम्बन्ध आत्मनो धर्मास्तेषां बाहुल्यं प्रतीयते, एष लोकपाल इत्यादिना । यावत्प्रकरणस्य ब्रह्मपरत्वं सिद्ध्यति तावदन्यपरत्वं न युक्तमिति हिशब्दार्थः ॥ २८ ॥

नन्वेवं, मामेव विजानीहीत्याद्यात्मोपदेशः कथं सङ्गच्छत इत्याशङ्क्याह ।

## शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ २९ ॥

व्यवहारदृष्ट्योपदेशो भवेदेवायं दोषः । अत्रतु, अहं ब्रह्मेतिशास्त्रीयदर्शनेनोपदेशः । ननु तत्त्वमसि, अयमात्मा ब्रह्मेत्यादिवाक्येभ्यः स्वात्मनि ब्रह्मत्वेन दर्शनं शास्त्रदृष्टिर्नत्वन्यात्मन्यन्यस्य, तथाच प्रतर्दनस्येन्द्रात्मनि ब्रह्मत्वदर्शनं न शास्त्रदृष्टिरित्याशङ्क्याह । वामदेववत् । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति, य एव प्रत्यबुध्यत स सर्वं भवतीत्यादिश्रुत्या वामदेवस्य यथा ज्ञानावेशात्सर्वधर्मस्फूर्तिरेवमत्रापि ब्रह्मावेशादुपदेश इति ॥ २९ ॥

ननु प्रकरणेऽस्मिन् यद्यपि भूयांसो ब्रह्मधर्माः श्रूयन्ते, तथापि, न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिजीवधर्माः । तथाऽथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति शरीरधारणात्मकमुख्यप्राणधर्मश्च प्रतीयते । अतः कथमेकान्ततोऽस्य ब्रह्मप्रकरणत्वमित्याशङ्क्य परिहरति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैवि-
ध्यादाश्रितत्वादिह तद्योगात् ॥ ३० ॥

न, कुतः? उपासात्रैविध्यात्। एतत्प्रकरणोक्तधर्माणां जीवधर्मत्वे मुख्यप्राणधर्मत्वे च स्वीक्रियमाणे ब्रह्मजीवमुख्यप्राणानां स्वातन्त्र्येणोपासनं त्रिविधं स्यात्। तद् वाक्यभेदप्रसङ्गान्न युक्तम्। तर्हि प्रकरणोक्तानां तद्धर्माणां का गतिरित्याशङ्क्याह । आश्रितत्वादिह तद्योगात्। जीवधर्माणां ब्रह्मणि विरोधो न, जीवस्य ब्रह्माधारत्वात् तद्धर्माणामपि ब्रह्माश्रितत्वात्। इहेत्युभयत्र सम्बद्धम्। मुख्यप्राणस्य तु ब्रह्मणि योगात् तद्धर्माणामपि तद्योगात्। अतः प्रकरणोक्तसर्वधर्माणां ब्रह्मणि सम्भवात् प्राणशब्दवाच्यं ब्रह्मेति सिद्धम्। 'अत एव प्राण, इत्यत्र प्राणशब्दमात्रे सन्देहः । अत्रार्थेऽपि सन्देहः । बाधकधर्मा अपि वर्तन्त इति तन्निर्णयार्थं पृथगधिकरणमुक्तम् ॥ ३० ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां
प्रथमाध्यायस्य प्रथमः पादः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रथमाध्यायस्य द्वितीयः पादः ।

प्रथमे पादे कार्यप्रतिपादकानि वाक्यानि ब्रह्मपरत्वेन निर्णीय द्वितीयेऽन्तर्यामिप्रतिपादकानां तत्परत्वेन निर्णय उच्यते । तत्राथ खलु क्रतुमयः पुरुष इत्यारभ्य, स क्रतुं कुर्वीत मनोमयः प्राणशरीर इत्यादि श्रूयते । तत्राग्रे सत्यसङ्कल्पादिधर्मकथनात् किं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्य, उत ब्रह्मैवान्तर्यामिरूपमिति संशये, सर्वं खल्विदं ब्रह्मेति पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वाज्जीवस्यापि तत्त्वेनोपासनं युक्तं, नतु मध्ये ब्रह्मनिरूपणस्य प्रसक्तिरितिं जीवस्यैव ब्रह्मत्वेनोपासनोक्ताऽस्मिन् वाक्य इति प्राप्ते, उच्यते ।

### सर्वत्रप्रसिद्धोपदेशात् ॥ १ ॥

अथ खल्वित्यादि ब्रह्मवाक्यमेव । कुतः, ? सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मण एवोपदेशदर्शनात् । एवञ्च, क्रतुं कुर्वीतेत्युपदेशो नोपासना । परम्, अशान्तस्य, निखिलजगतो ब्रह्मत्वेनोपासनेन शुद्धान्तःकरणस्य मननात्मकब्रह्मोपदेश एव युक्तो, नतु जीवोपासना । अतोऽत्रानन्दात्मकप्राणशरीरादिरूपोऽन्तर्यामी निरूप्यते, न जीवः॥१॥

ननु क्रतुमयः पुरुष इत्यादिना यथाकामं लोकान्तरीयदेहकथनात्तदर्थमन्योपासना युक्ता, न ब्रह्मज्ञानस्येदृशं फलं युक्तमित्याशङ्क्य समाधत्ते ।

### विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षितो गुणो लोकान्तरे तादृशफलप्राप्तिः । सा प्रकृतेऽपि भगवत्स्वरूपलाभादुपपद्यत इति तदर्थमपि नान्यापेक्षा ॥ २ ॥

नन्विदं नैकान्ततो ब्रह्मवाक्यत्वसाधकम्, उपपत्तेर्जीवेऽपि सम्भवादित्याशङ्क्याह ।

### अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

जीवस्य तिरोहितानन्दत्वेन निराकारत्वादानन्दात्मकप्राणशरी-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रादिरूपस्यानुपपत्तेर्नायं वाक्यार्थः ॥ ३ ॥

ननु प्राप्तव्यफलरूपानन्दात्मकप्राणशरीरादेर्जीवेऽप्युपपत्तेर्नो-क्तदोष इत्याशङ्क्य परिहरति ।

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

एतमितः प्रेत्याभिसम्भवितास्मीति फलवाक्ये, एतं प्राणशरी-रादिरूपं कर्मत्वेन प्राप्तव्यत्वेन शारीरं जीवं च कर्तृत्वेन व्यपदिशति। अधिकरणसमाप्तिसूचकश्चकारः ॥ ४ ॥

यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवम-यमन्तरात्मन् पुरुषो हिरण्मय इति श्रूयते । तत्रोपक्रमबलीयस्त्वे जीवो वाक्यार्थः । उपसंहारबलीयस्त्वे ब्रह्म वेति संशये, तत्र यत्रैक-स्यान्यपरत्वेनैकार्थवाचकत्वं भवति तस्य बलवत्त्वमिति पूर्वतन्त्रे व्यु-त्पादितत्वाच्चतुर्विधभूतनिरूपणार्थं जीवस्याराग्रमात्रस्यान्तर्हृदये प्र-तिपादकत्वेन वाऽन्यार्थोपपत्तेर्जीवस्यैव फलदशायां हिरण्मयत्वा-ज्जीव एव वाक्यार्थो, न ब्रह्मेति प्राप्ते, उच्यते ।

## शब्दविशेषात् ॥ ५ ॥

हिरण्मयः पुरुषः परमात्मैव, न जीवः । फलदशायामपि नियमतस्तादृशमूर्तिलाभे प्रमाणाभावात् । अतः शब्देनैव विशेषस्यो-क्तत्वाद् ब्रह्मैव वाक्यार्थः ॥ ५ ॥

ननु हृदयायतनत्वाज्जीवस्य स एवात्र युक्तो वाक्यार्थ इत्या-शङ्क्याह ।

## स्मृतेश्च ॥ ६ ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीत्यादिप्रमाणान्तरात् परमात्मैव वाक्यार्थः ॥ ६ ॥

उपक्रमप्राबल्याभिप्रायेणाशङ्क्य समाधत्ते ।

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नन्वर्भकमोकोऽल्पं हृदयात्मकं स्थानं यस्य तत्त्वाद् व्रीह्यादितुल्यत्वव्यपदेशाच्च जीवो वाक्यार्थो, न परमात्मा व्यापकत्वादितिचेद्, नाल्पस्थानकथनं दूषणमावहति । निचाय्यत्वाद् हृदये ज्ञातुं शक्यत्वाद् व्रीह्यादितुल्यत्वव्यपदेशोऽपि न दोषाय । एवं व्योमवत् एवं व्रीह्यादितुल्यत्वेन यत्प्रतिपादनं तद्व्योमवत्, व्योमेव चतुर्विधभूतान्तरत्वज्ञापनार्थम् ॥ ७ ॥

ननु हृदयदेशे नित्यभगवत्स्थितिश्चेत्तदा जीववत्तस्यापि सुखदुःखभोगापत्तिरित्याशङ्क्य परिहरति ।

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

न, कुतः ? वैशेष्यात् सर्वरूपत्वानन्दमयत्वसर्वकर्तृत्वादिर्विशेषस्तद्भावो वैशेष्यं तस्मात् । अतो हृदयस्थित्यविशेषेऽपि जीवस्यैव भोगो न ब्रह्मणः ॥ ८ ॥

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम् इत्यादिकठवल्लीषु पठ्यते । अत्र ब्रह्मक्षत्रयोरोदनत्वकथनात् कश्चिद्भोक्तोच्यते । स जीवो ब्रह्म वेति संशये, ब्रह्मक्षत्रभोजनस्यानुचितत्वाल्लौकिकभोक्तृवत्कथनात्, क इत्था वेद यत्र स इत्यनेन स्थानाज्ञानकथनाच्च जीव एव कश्चिदुपासनाविशेषलब्धसामर्थ्यो भोक्ता भविष्यति, न ब्रह्म, उक्तधर्मासम्भवादिति प्राप्ते, उच्यते ।

## अत्ता चराचरग्रहणात् ॥ ९ ॥

अत्ता भगवानेव । कुतः ? चराचरग्रहणात् । चरः सर्वप्राणिमारणार्थं परिभ्रमन् मृत्युः, अचरं केनाप्यचाल्यं ब्रह्मक्षत्रं रूपं तयोरत्तृत्वस्य जीवेऽसम्भवात् परमात्मैवात्ता । ब्रह्मक्षत्रयोर्मुक्तिदानेन स्वस्मिन् प्रवेशस्य भोजनपदार्थत्वात्, सर्वत्र विद्यमानस्यापि सूक्ष्मत्वेन स्थानाज्ञानस्य युक्तत्वाद्, बोधनार्थं लोकवत्कथनस्य युक्तत्वाद् ब्रह्मैव वाक्यार्थः ॥ ९ ॥

ननु जीवपरत्वेन सामञ्जस्येन वाक्यार्थोपपत्तौ किमिति ब्रह्मपरत्वं कल्प्यत इत्याशङ्क्याह ।

## प्रकरणाच्च ॥ १० ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्मिन् प्रकरणे, आसीनो दूरं व्रजतीत्यादिना ब्रह्मण एव माहात्म्यं प्रतिपाद्यते । अतः प्रकरणानुरोधाद् ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ १० ॥

ऋतं पिबन्तावित्यादि तस्यैवाग्रे श्रूयते । तत्रास्य वाक्यस्योत्तरशेषत्वे जीवपरत्वं, पूर्वशेषत्वे ब्रह्मपरत्वमिति । किमत्र जीवद्वयं निरूप्यते, उत जीवब्रह्मणी वेति विशये ब्रह्मप्रकरणस्य सामान्यत्वेन, यस्तु विज्ञानवानित्यादिनाऽग्रे विद्वदविद्वतोर्जीवयोर्वक्तव्यत्वात् प्रथममन्त्रेऽपि तयोर्निर्देश उचितः । अतो बद्धमुक्तजीवपरत्वेन वाक्यार्थोपपत्तेर्जीवप्रकरणपाठाज्जीव एव वाक्यार्थ इति प्राप्ते, उच्यते ।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

गुहा हृदयाकाशस्तत्र प्रविष्टौ जीवपरमात्मानावेव प्रतिपाद्यौ, न जीवौ, कुतः? तद्दर्शनात् तयोर्जीवब्रह्मणोर्दर्शनात् प्रतिपादितत्वात्। प्रश्ने, योऽयं प्रेत इत्यादिना जीवः पृष्टः । अन्यत्र धर्मादित्यादिना ब्रह्म पृष्टम् । तत्र ब्रह्म निरूप्य जीवनिरूपणे तस्य फलं निरूपयन् मध्ये तुल्यतयोभयोः स्वरूपं कथयति फलभोगयोग्यत्वात् । अतो ब्रह्मपरमेवेदं वाक्यम् ॥ ११ ॥

## विशेषणाच्च ॥ १२ ॥

गुहां प्रविष्टावित्यादिविशेषणानां जीवब्रह्मपरत्वेनैव सामञ्जस्याच्चकारादात्मानं रथिनं विद्धीत्याद्युत्तरग्रन्थपर्यालोचनादपीदं ब्रह्मवाक्यमेवेति सिद्धम् ॥ १२ ॥

य एषोऽक्षिणि पुरुषो दृश्यत इत्यादि श्रूयते । अत्र प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनपरमिदं वाक्यं, ब्रह्मपरं वेति विशये ब्रह्मप्रकरणस्य समाप्तत्वाद् दृश्यत इति वचनाच्च प्रतिबिम्बस्य ब्रह्मत्वेनोपासनपरमेवेदं वाक्यं, न ब्रह्मपरमिति प्राप्ते, उच्यते ।

## अन्तर उपपत्तेः ॥ १३ ॥

अन्तरः अक्षिणि दृश्यत्वेनोक्तः परमात्मैव । कुतः? उपपत्तेः सर्वत्र ब्रह्मदृष्टेस्तत्स्थानस्योत्कृष्टत्वात्तत्रार्षस्य ब्रह्मदर्शनस्योपपत्तेः। अतः प्रतिबिम्बे पुरुषत्वनियमाभावाच्च ब्रह्मैव वाक्यार्थः ॥ १३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स्थानादिव्यपदेशाच्च १४ ॥

अक्षिणि पुरुषो दृश्यत इत्यारभ्य, एतं संयद्वाम इत्याचक्षत इत्यादिना कर्मफललयस्थानत्वकर्मफलदातृत्वसर्वलोकभानादिधर्माणां व्यपदेशात् तेषामन्यत्रासम्भवाद् ब्रह्मैव वाक्यार्थः ॥ १४ ॥

ननूपासनापरमेवेदं वाक्यमस्तु, किमत्याग्रहेण ब्रह्मपरत्वोपपादनेनेत्याशङ्क्याह ।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

एतदमृतमभयमेतद्ब्रह्मेत्यनेनाऽमृतशब्देनानन्दमयत्वप्रतिपादनाद् ब्रह्मपरमेवेदं वाक्यम् । एषा मुख्योपपत्तिरितिसूचनार्थमेवकारः ॥१५॥

स्वरूपतो ब्रह्मपरत्वं प्रतिपाद्य फलतोऽपि तत्परत्वमाह ।

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्तीत्यादिना ब्रह्मविदो देवयानाऽऽख्या या गतिरुक्ता सैवाक्षिपुरुषविदोऽभिधीयते । श्रुता उपनिषद्विद्या येन तस्य गतेरभिधानादित्यर्थः । अतो ब्रह्मपरमेवेदं वाक्यम् ॥ १६ ॥

ननु तद्धर्मवत्त्वेनोपासनोपपत्तेर्गौणवृत्त्या पूर्वोक्ता उपपत्तयोऽक्षिपुरुषपरत्वेनापि सङ्गच्छन्त इत्याशङ्क्य परिहरति ।

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

इतरोऽक्षिपुरुषो नात्र वाक्यार्थः । कुतः? अनवस्थितेः अस्थिरत्वात् । अक्षिपुरुषस्यान्यसांमुख्य एव सम्भवादुपासनाकाले एकान्ते तस्याभावादस्थिरत्वम् । किञ्चोपासनं हि मनसा भवति । तत्र चाक्षिपुरुषस्यासम्भव एव । अतः सर्वत्र सदा विद्यमानत्वाद्भगवानेव वाक्यार्थ इति सिद्धम् ॥ १७ ॥

य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयतीत्युपक्रम्य, यः पृथिव्यां तिष्ठन्नित्यादि श्रूयते । तत्राधिदैवमधिवेदमधियज्ञमधिभूतमध्यात्मं चावस्थितो यमयिताऽन्तर्यामीति निरूप्यते । तत्राधिदैवाद्याधारधर्माणां षण्णामेकस्मिन्नुपचारादधिदैवा-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिषु सर्वेष्वेक एवान्तर्यामी, उताधिदैवादिनामभेदाद्भिन्न इति विशये, देवादिकमधिकृत्य ये वर्तन्तेऽभिमानेन तेषामेव तत्तच्छब्दवाच्यत्वात् तत्तत्संज्ञानां ब्रह्मविषयकत्वासम्भवादन्तर्यामिब्राह्मणं तत्तदभिमानिदेवतोपासनापरं, नतु ब्रह्मपरमिति प्राप्तेऽभिधीयते ।

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

अधिदैवादिष्वन्तर्यामी भगवानेव, नान्यः । कुतः ? तद्धर्मव्यपदेशात् । तेषां तदभिमानिनां देवानां ये धर्मास्तत्तदधिष्ठातृत्वादयस्तेषां ब्रह्मणि व्यपदेशात् । तेषां तत्सामर्थ्यं भगवत एवातस्तैर्धर्मैर्भगवानेव व्यपदिश्यते । अत इदं ब्रह्मवाक्यमेव ॥ १८ ॥

ननु वेदान्तेष्वन्तर्यामिणोऽप्रसिद्धत्वात् तस्य च कापिले प्रसिद्धत्वादन्तर्यामिनिरूपणे कपिलमतस्य श्रौतत्वापत्तिरित्याशङ्क्याह।

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं सांख्यस्मृतिसिद्धमन्तर्यामिरूपमत्र नोच्यते । कुतः ? अतद्धर्माभिलापात् सत्त्वरजस्तमोरूपतद्धर्माणामनभिलापात्, पृथिवीशरीरादीनां तद्विरुद्धधर्माणामभिलापाच्च ब्रह्मैव वाक्यार्थः ॥ १९ ॥

ननु देवशरीराद्यधिष्ठातृत्वाज्जीव एव वाक्यार्थोऽस्त्वित्याशङ्क्याह ।

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

शारीरो जीवः, नेत्यनुवर्तते, न वाक्यार्थो भवितुमर्हति । यतो यो विज्ञाने तिष्ठन्निति काण्वाः, य आत्मनि तिष्ठन्निति माध्यन्दिना एनं जीवमन्तर्यामिभेदेनाधीयते । अतोऽन्तर्यामिब्राह्मणे ब्रह्मैवार्थो नान्य इति सिद्धम् ॥ २० ॥

अथ परा यया तदक्षरमधिगम्यते यत्तदद्रश्यमग्राह्यमित्यादि मुण्डके श्रूयते । तत्र साङ्ख्याभिमतप्रकृतिसर्वधर्माणां श्रवणात् कापिलमतविद्या, उत ब्रह्मविद्यैवेति संशये, अत्र भूतयोनित्वकथनादग्रे, दिव्यो ह्यमूर्तः पुरुष इत्याद्युक्त्वा, एतस्माज्जायते प्राण इत्यादिना सृष्टिकर्तृत्वं पुरुषस्योक्तम् । एवं सति प्रकृतिपुरुषयोः सृष्टिकर्तृत्वोक्त्या सांख्यविद्यैवेति प्राप्ते, उच्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

अदृश्यत्वादिगुणकः परमात्मैव । कुतः ? तथाऽक्षरात्सम्भवतीह विश्वमिति जगत्कर्तृत्वरूपब्रह्मधर्मोक्तेः । न हि वेदान्तेषु ब्रह्मादपिऽतिरिक्तस्य जगत्कर्तृत्वं क्वचि श्रुतमस्ति । अत इयं ब्रह्मविद्यैव ॥२१॥

ननु प्रकृतिपुरुषसम्बन्धिसृष्टिप्रतिपादकत्वेनैव वाक्यार्थोपपत्तौ किमिति ब्रह्मपरत्वं कल्प्यत इत्याशङ्क्याह ।

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतरौ प्रकृतिपुरुषौ नात्र वाक्यार्थभूतौ । कुतः? विशेषणभेदव्यपदेशाभ्यां विशेषणभेदो व्यपदेशश्च ताभ्याम् । न ह्यदृश्यत्वसर्वज्ञत्वपुरुषत्वादीनि विशेषणानि प्रकृतेर्भवन्ति । न हि, दिव्यो ह्यमूर्त इत्यत्रोक्तानि विशेषणानि साङ्ख्याभिमतपुरुषस्य भवन्ति । ब्रह्मविद्यैवैषेति, सर्वत्र ब्रह्मविद्यामित्याद्युक्तेश्च व्यपदेशभेदः । अतो ब्रह्मपरत्वमेव युक्तम् ॥ २२ ॥

## रूपोपन्यासाच्च ॥ २३ ॥

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्यादिरूपोपन्यासस्य प्रकृतिपुरुषयोरसम्भवाज्जगदात्मकस्य ब्रह्मण एव सम्भवाद् ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ २३ ॥

ब्रह्मणः साकारत्वमुपपादयितुमधिकरणारम्भः ।

तत्र को न आत्मा, किं ब्रह्मेत्युपक्रम्य, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्याद्याम्नायते । तत्र वैश्वानरशब्दात् संवत्सरो वा अग्निर्वैश्वानर इति, संवत्सरो वै प्रजापतिरिति च श्रुतेर्हिरण्यगर्भोपासनपरमिदं वाक्यं, किं वोपक्रमे ब्रह्मात्मपदश्रवणात्तदेकवाक्यत्वेन ब्रह्मपरमिति संशये, हिरण्यगर्भस्य समष्ट्यभिमानित्वेन लोकावयवत्वोपपत्तेस्तदुपासकस्यान्नभोजनात्मकफलस्यापि सम्भवाद् वेदगर्भत्वेनाग्नित्रयात्मकत्वस्यापि युक्तत्वाद्धिरण्यगर्भोपासनपरमिति प्राप्ते, उच्यते ।

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वैश्वानरपदवाच्यः परमात्मैव । कुतः ? येऽस्मिन् वाक्ये हिरण्यगर्भसाधारणशब्दाः श्रुतास्तेभ्योऽपि प्रादेशमात्रस्यैव द्युमूर्धत्वादिरूपे विशेषाम्नानाद् विरुद्धसर्वधर्माश्रयत्वं सर्वभवनसमर्थपरमात्मन एव, नान्यस्य सम्भवति । अतो वैश्वानरशब्दो ब्रह्मपरः ॥ २४ ॥

एतद्वाक्यस्य ब्रह्मपरत्वे प्रमाणान्तरमुपन्यस्यति ।

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

केचित् स्वदेहे हृदयावकाशे, इति स्मर्यमाणं रूपं ज्ञापकं स्यात्। प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे श्रुतिभ्यः श्रुतस्य मननात्मकस्मरणसम्भवात् । यदि प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वं न स्यात्, तद्देशं स्मरणं नोपपद्येतेति हेतोः प्रादेशमात्रवैश्वानरप्रतिपादकवाक्यस्य ब्रह्मपरत्वम् ॥ २५ ॥

ननु स्मरणेनैवार्थनिर्णये, स्मृतावपि 'अहं वैश्वानरो भूत्वा' इत्युक्तत्वाद्, अग्निर्वैश्वानर इति श्रौतशब्दादुपासनार्थं तस्यैव त्रेताग्निकल्पनात्, पुरुषेऽन्तःप्रतिष्ठितं वेदेत्यन्तःप्रतिष्ठानाच्च जाठरोऽग्निरेव वैश्वानरो, न ब्रह्म, विरुद्धधर्मदर्शनादित्याशङ्क्य परिहरति ।

## शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न, तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते॥ २६॥

न, कुतः ? तथा दृष्ट्युपदेशात् । ब्रह्मणः सर्वभोक्तृत्वबोधनार्थं तथा दृष्टिर्जाठरत्वेन दृष्टिरुपदिश्यते । ब्रह्मणः सर्वरूपत्वसम्भवात् । नन्वेवं स्मृत्यनुरोधाज्जाठर एव वाक्यार्थोऽस्त्वित्याशङ्क्याह । असम्भवात् । तत्र द्युमूर्द्धत्वादिधर्माणामसम्भवात् । उपासनार्थं तद्भेकल्पनं भविष्यतीत्याशङ्क्याह । पुरुषमपि चैनमधीयते वाजसनेयिनः, स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेत्यादि । अतः पुरुषत्वं पुरुषविधत्वं वा न जाठरस्य सम्भवतीति परमात्मैव वैश्वानरः ॥ २६ ॥

ननु वैश्वानरो न ऊत्येत्यादिमन्त्रैर्देवताया महाभूताग्नेर्वा वैश्वानरपदार्थत्वमस्तीत्याशङ्क्य परिहरति ।

## अत एव न देवता भूतं च ॥ २७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत एव पुरुषविधत्वासम्भवाद्देवता भूतं च न वैश्वानरपदवाच्यमित्यर्थः। उपनिषद्वाक्यानां ब्रह्मपरत्वे सम्भवत्यन्यकल्पना न युक्तेति मुख्योपपत्तिः। अतो वैश्वानरो भगवानेवेति सिद्धम् ॥२७॥

अतः परं ब्रह्मणः प्रादेशमात्रत्वं स्वाभाविकं, कृत्रिमं वेति परिमाणं विचार्यते। अस्मिन् सिद्धे पूर्वोक्तविचारः सङ्गतो भवेदिति। तत्रास्मिन् विषये प्रकारभेदेन चत्वार ऋषयो वेदार्थचिन्तकाः। तौल्येन शब्दार्थबलविचारको जैमिनिः। शब्दोपसर्जनेनार्थविचारक आश्मरथ्यः। केवलार्थबलविचारको बादरिः। केवलशब्दबलविचारका आचार्याः। तत्राचार्यो विचाराविचारयोर्दोषं पश्यन् विचारमपि वदंस्तेषामल्पबुद्धिख्यापनाय नामान्याह। तत्र जैमिनिमतमुपन्यस्यति।

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

साक्षादपि व्यापकस्य प्रादेशमात्रत्वं कल्पनां विनापि स्वरूपेणैवाविरोधं मन्यते जैमिनिः। आकाशवद् व्यापकं सर्वतःपाणिपादान्तं ब्रह्म। अतः साकारमनन्तमूर्तं च। अतः प्रादेशमात्रत्वं स्वाभाविकमिति जैमिनेर्मतम् ॥ २८ ॥

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अभिव्यक्तेर्हेतोः साकारं ब्रह्म, वस्तुतो निराकारत्वेऽपि मायापगमने तावति देशे साकारमिव सच्चिदानन्दं रूपं भातीत्याश्मरथ्यो मन्यते ॥ २९ ॥

## अनुस्मृतेर्बादरिः ॥ ३० ॥

यद्धिया त उरुगाय विभावयन्तीति वाक्यानुरोधेनानुस्मृतेर्हेतोर्ब्रह्मणः साकारत्वं, वस्तुतो निराकारमेव। अत आकाराणामतात्त्विकत्वं मन्यते बादरिः ॥ ३० ॥

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

जैमिनिमते ब्रह्मणः साकारत्वश्रवणात् तदेकदेशी नियतसाकारं मन्यमानो नियमेन प्रादेशमात्रं ब्रह्मस्वरूपं जानाति। तन्निराकरणाय जैमिनिः, सम्पत्तेरिति सम्पत्तिकृतं प्रादेशमात्रत्वं, न नियत-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिति वदति । ननु प्रादेशमात्रत्वस्य कथं सम्पत्तिकृतत्वमित्याशङ्क्याह । तथा हि दर्शयति। वाजसनेयिब्राह्मणे, तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति श्रुतिः प्रादेशमात्रत्वं संपत्तिकृतमिति दर्शयति । एवञ्च सम्पत्तेरेव प्रादेशमात्रत्वं, ननु प्रादेशमात्र एव वैश्वानर इत्येकदेशिनं परिहरति जैमिनिः ॥ ३१ ॥

मुख्यमाचार्यमतमाह ।

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

एनं वैश्वानरमस्मिन् मूर्द्धचिबुकान्तराले जाबालाः समामनन्ति, एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित इति, सोऽविमुक्तः कस्मिन् प्रतिष्ठित इत्यादिना, भ्रुवोः प्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । अतोऽनन्त एव व्यापक एव प्रादेशमात्रः । अनवगाह्यमाहात्म्ये भगवति विरुद्धसर्वधर्माश्रये, न विरोधसम्भावनापि । अतो ब्रह्मस्वरूपविचारे प्रमाणमेवानुसर्तव्यं, न युक्तिः । युक्तिबलेन ब्रह्मस्वरूपविचारका भ्रान्ता एव । तस्य युक्त्यगोचरत्वात् । अतः प्रादेशमात्र एव व्यापक इति वैश्वानरपदवाच्यः परमात्मैवेति सिद्धम् ॥ ३२ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां प्रथमाध्यायस्य
द्वितीयः पादः ॥ २ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रथमाध्यायस्य तृतीयः पादः ।

द्वितीयपादे ब्रह्मण आधेयत्वं प्रतिपाद्यास्मिन् पादे आधारत्वं प्रतिपाद्यते, सर्वं ब्रह्मेति बोधनाय । यस्मिन् द्यौः पृथिवी चान्तरिक्ष-मोतं मन इत्यादि श्रूयते । तत्र द्युपृथिव्यादीनामाधारं ब्रह्म? उत पदा-र्थान्तरम् ? इति संशये, द्युभ्वादीनां, सूत्रे मणिगणा इव प्रोतानां भारत्वेन परमात्मनस्तद्ग्राहकत्वासंभवाद्, अमृतस्यैष सेतुरित्युक्त्या सेतोर्गतिसाधनत्वेन ब्रह्मणः फलत्वेन तदसंभवात् स्मृतिप्रतिपाद्या प्रकृतिरेवैतद्वाक्यार्थो युक्त इति प्राप्ते, उच्यते ।

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

यस्मिन् द्यौरितिवाक्योक्तानां द्युभ्वादीनामायतनं ब्रह्मैव, कुतः स्वशब्दाद् आत्मशब्दादित्यर्थः । तथाच सर्वेषामात्मत्वेन जगदा-धारत्वेन भारासंभवात् तज्ज्ञानेनाऽमृतप्राप्तेरुपचारेण सेतुत्वस्यापि संभवाद् ब्रह्मैवात्र वाक्यार्थो, नान्य इति भावः ॥ १ ॥

नन्वस्मिन् प्रकरणे एकविज्ञानेन सर्वविज्ञानमुपक्रम्यान्यवा-ग्विमोककथनमनुपपन्नमित्याशङ्क्याह ।

### मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

मुक्तानां देहाद्यध्यासत्यागेन जीवन्मुक्तानामुपसृप्यं ब्रह्मास्मि-न् प्रकरणे व्यपदिश्यते। तदन्यवाग्विमोकं विना सर्वाध्यासराहित्यं न भवतीति तत्कथनमित्यर्थः । तत्रापि विकारस्य वाचारम्भणमात्र-त्वादन्यवाग्विमोक एव, नतु प्रपञ्चस्य । तस्य ब्रह्मरूपत्वादिति भावः ॥ २ ॥

नन्वस्मिन् प्रकरणे, अरा इव ब्रह्मपुरे मनोमय इत्यादिना जड-धर्माणां जडदृष्टान्तानां च निरूपणात् सांख्यनिरूपितप्रकृतिपुरुषा-नुमापकमेवैतत् प्रकरणमित्याशङ्क्याह ।

### नानुमानमतच्छब्दात् ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदं प्रकरणं सांख्यमतानुमापकं नास्ति । कुतः ? अतच्छब्दात्। निःसन्दिग्धतया कोऽपि तन्मतख्यापकः शब्दो नास्ति । आत्मसर्वज्ञानन्दरूपादयस्तु ब्रह्मवादख्यापका बहवः शब्दाः सन्ति । तद्वशात् संदिग्धानामपि ब्रह्मपरत्वेनैव निर्णय उचितः । अतो द्युभ्वाद्यायतनं ब्रह्मैव, न प्रधानम् ॥ ३ ॥

ननु मनोमयः प्राणशरीरनेतेति निःसन्दिग्धजीवप्रतिपादकवचनाज्जीवधर्मा जडधर्माश्च, तथा सर्वज्ञत्वादयोऽपि योगप्रभावाज्जीवविशेषधर्मा इति जडजीवविशिष्टः सांख्यवादोऽत्र प्रतिपाद्य इत्याशङ्क्याह ।

## प्राणभृच्च ॥ ४ ॥

न अतच्छब्दादित्यनुवर्तते । प्राणभृज्जीवोऽपि न वाक्यार्थः । तत्प्रतिपादकशब्दाभावात् । न हि सांख्यमते आनन्दाऽमृतरूपो जीवो भवितुमर्हति ॥ ४ ॥

## भेदव्यपदेशात् ॥ ५ ॥

तमेवैकं जानथेति कर्मकर्तृभावेन भेदेन व्यपदेशान्न जीवो वाक्यार्थः ॥ ५ ॥

हेत्वन्तरमाह ।

## प्रकरणात् ॥ ६ ॥

ब्रह्म देवानामित्यारम्भे, स ब्रह्मविद्यामिति च तेषामेवैतां ब्रह्मविद्यामित्यन्ते च ब्रह्मविद्याया एव निरूपणेन ब्रह्मप्रकरणाद् ब्रह्मैवात्र प्रतिपाद्यमित्यर्थः । ब्रह्मैवेदममृतं पुरस्तादित्यादौ तु विस्पष्टं ब्रह्मैव प्रतिपाद्यते ॥ ६ ॥

अथापि संशये निश्चितं विशेषहेतुमाह ।

## स्थित्यदनाभ्यां च ॥ ७ ॥

द्वा सुपर्णेति वाक्ये, अनश्नन्नन्यो अभिचाकशीतीत्यनेन परमात्मनः स्थितिमात्रं, जीवस्य च कर्मफलोपभोगो निरूप्यते । अतः स्थित्यदनाभ्यां जीवपरमात्मानौ परामृष्टौ सांख्यप्रतिपाद्यवैलक्षण्यमत्र गमयतः । अतो विशेषोपपत्तेः सत्त्वात् सर्वहेतवोऽत्र ब्रह्मवाक्यत्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



साधका दृढा इति द्युभ्वाद्यायतनं ब्रह्मैवेति सिद्धम् ॥ ७ ॥

छान्दोग्ये, यो वै भूमा तत्सुखमिति सुखलक्षणमुक्त्वा भूमलक्षणं वदति, यत्र नान्यत् पश्यति नान्यद्विजानाति स भूमेति । तत्र भूमशब्देनात्र बाहुल्यमुच्यते ? ब्रह्म वेति संशयेऽस्मिन् प्रपाठके ततस्त ऊर्ध्वं वक्ष्यामीति सनत्कुमारेण नारदं प्रत्युत्तरोत्तरं बाहुल्यकथनस्य प्रतिज्ञातत्वात् सुखपर्यन्तमुत्तरोत्तरं भूयस्त्वमुक्त्वाऽग्रे सुखस्य फलत्वात् सुषुप्तावेव तस्याभिव्यक्तेः सुषुप्तिरेव, यो वै भूमेति वाक्ये भूमत्वेनोच्यते । सुखाभिव्यञ्जकत्वेन सुखापेक्षयापि तस्या अन्तरङ्गत्वादतो न ब्रह्मवाक्यमिदमिति प्राप्ते, उच्यते ।

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

अत्र भूमा भगवानेव । कुतः? संप्रसादादध्युपदेशात् । संप्रसादः सुषुप्तिः, तस्मादधि आधिक्येनोपदेशात् । यत्र नान्यत् पश्यतीत्यादिधर्माणां सुषुप्तिसाम्येऽपि, स एवाधस्तादित्यादिना सर्वरूपत्वादयोऽधिका धर्मा उच्यन्ते । न हि ते सुषुप्तौ सम्भवन्ति । एवं सत्यब्रह्मात्मशब्दस्यापि सामञ्जस्यम् । प्रकरणस्यान्यपरत्वे तत्र लक्षणा स्यात् । लोके बाहुल्यवाचकत्वेन भावशब्दत्वेऽपि भूमशब्दस्य, भगवतः सर्वरूपत्वादत्र भगवद्वाचकत्वे न दोषः । अतोऽत्र भूमा भगवानेव ॥ ८ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥

अस्मिन् प्रकरणे, नान्यत् पश्यतीत्यादिनाऽन्यादर्शनादयो गुणा उक्ताः । ते भगवत्येवोपपद्यन्ते, नान्यत्र । चकारात्, स वा एष एवं पश्यन्नित्यारभ्य सहस्राणि च विंशतिरित्यन्तेनोक्तं फलमपि तस्य भगवद्विद एवोपपद्यते । तस्माद् भूमशब्दं ब्रह्मैवेति सिद्धम् ॥ ९ ॥

गार्गिब्राह्मणे, कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति, स होवाच एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वित्यादि पठ्यते । तत्राक्षरशब्देन पदार्थान्तरमत्रोच्यते ? ब्रह्म वेति संशये, अचेतनसाधारण्यस्य, ओतप्रोतत्वकथनेन, वर्णतुल्यत्वस्य च प्रतीतेराकाशवद्ब्रह्मपरत्वमेवोचितम् । अत्र विरुद्धधर्माणामाशङ्क्य नि-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



राकरणाददृश्यत्वाद्यधिकरणेन गतार्थत्वं न शङ्क्यम् । तत्र सन्दिग्धधर्माणामेव ब्रह्मधर्मत्वेनोपपादनात् । अतो भूतसूक्ष्मं वा, प्रकृतिर्वात्र प्रतिपाद्यते । किञ्चात्र प्रापञ्चिकसकलधर्मराहित्यं ब्रह्मधर्मोऽक्षर उच्यते । तदुपासनार्थं भविष्यति । अतोऽक्षरशब्देनान्यदेव ब्रह्मधर्मयुक्तत्वेनोपास्यमत्रोच्यत इति प्राप्ते, उच्यते ।

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

अक्षरशब्दवाच्यमत्र परमात्मैव । कुतः ? अम्बरान्तानां पृथिव्यादीनां धारकत्वेनोक्तेः । न हि ब्रह्मातिरिक्ते सर्वधारकत्वं सम्भवति । अक्षरपदोक्तिः परोक्षेण ब्रह्मनिरूपणार्था । अन्यपरत्वसन्देहवारणार्थं ब्रह्मधर्मकथनम् । अतोऽक्षरपदवाच्यं ब्रह्मैव ॥ १० ॥

ननु यस्मिन् द्यौः पृथिवी चेति वाक्ये, असाधारणब्रह्मधर्मान्तरदर्शनाद् विधारणं च ब्रह्मधर्मं इत्युक्तम् । ननु सर्वत्र तस्य ब्रह्मधर्मत्वे प्रमाणमस्तीत्याशङ्क्याह ।

## सा च प्रशासनात् ॥ ११ ॥

सा च अम्बरान्तधृतिरस्मिन्नपि वाक्ये ब्रह्मधर्म एव । कुतः ? प्रशासनात् । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत इतिश्रुत्युक्तप्रशासनाद्धेतोर्विधृतिर्ब्रह्मधर्म एव । अप्रतिहताज्ञाशक्त्यात्मकप्रशासनस्य ब्रह्मधर्मत्वात् ॥ ११ ॥

ननूपासनार्थं ब्रह्मधर्मनिरूपणमित्याशङ्क्याह ।

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यस्य भावोऽन्यभावः । अब्रह्मधर्म इति यावत् । तस्यात्र व्यावृत्तिः क्रियते । नात्र तादृशो धर्म उक्तोऽस्ति, योऽब्रह्मण्युपासनार्थं भवेत् । यो वा एतदक्षरमविदित्वा गार्गीत्यादिनाऽस्मिन् प्रकरणे शुद्धब्रह्मप्रतिपादनमेव, न तूपासनाप्रतिपादनमिति चकारेण सूच्यते । अतोऽक्षरशब्दवाच्यं ब्रह्मैवेति सिद्धम् ॥ १२ ॥

प्रश्नोपनिषदि पञ्चमप्रश्ने, एतद्वै सत्यकामः परं चापरं ब्रह्म यदोङ्कार इत्यादिनैकद्वित्रिमात्रोपासनया फलविशेषं निरूप्य अर्द्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीतेत्युक्त्वाऽग्रे परात्परं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरिशयं पुरुषमीक्षत इति फलमुक्तम् । तत्र पुरुषमभिध्यायीतेत्यत्र ध्यानविषयो विराट् पुरुषो ब्रह्मा वा, परमात्मैव वेति संशये पूर्वमोङ्कारोपासनाकथनेनात्राप्यमुख्यप्रवाहपतितत्वाद् विराट् पुरुष उपासनाविषयः । अथवाग्रे परात्परमिति कथनात् सर्वेभ्यः परो ब्रह्म परपुरुष एवात्रोपास्योऽस्त्विति प्राप्ते, उच्यते ।

## ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

सः, अभिध्यानविषयः परपुरुषः परमात्मैव । कुतः ? ईक्षतेः कर्मत्वेन व्यपदेशात् । जीवघनात् केवलजीवाधारभूताद् ब्रह्मलोकात् पररूपपुरुषदर्शनमीक्षत्यर्थः । तत्कर्म ब्रह्मैव भवितुमर्हति । तदेव ध्यानकर्मत्वेनाप्युच्यते । उभयोरेकत्वात् । ध्यानफलं परपुरुषदर्शनं ब्रह्मसाक्षात्कार ईक्षतिनोच्यते । न तदन्यध्यानफलं भवितुमर्हति । अतो ध्यानविषयः परमात्मैवेति सिद्धम् ॥ १३ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यमित्यादि छन्दोग्ये श्रूयते । तत्र दहराकाशो जीवो ? ब्रह्म वेति संशयः । तत्र स्पष्टार्थोऽग्रिमप्रजापतिप्रकरणे अमृताभयरूपत्वेन जीवस्यैव निरूपणादेतत्प्रकरणस्यापि तेनैकार्थत्वस्योचितत्वादत्रापि दहरशब्दार्थो जीवो भवितुमर्हति, न ब्रह्म । प्रजापतिप्रकरणादर्थान्तरप्रसक्तेरिति प्राप्ते, उच्यते ।

## दहर उत्तरेभ्यः ॥ १४ ॥

दहरः परमात्मा, न जीवः । कुतः ? उत्तरेभ्यः, उत्तरसूत्रेषु वक्ष्यमाणहेतुभ्यः । तेषामपि ब्रह्मपरत्वस्य साधनीयत्वात् सामान्यरूपेण कथनम् । अतोऽग्रिमप्रकरणस्यापि ब्रह्मपरत्वेनैव निर्णयादिदं प्रकरणद्वयं ब्रह्मपरं, न तु जीवस्य ब्रह्मत्वेन निरूपणपरम् । तस्माद् ब्रह्मैव दहरपदवाच्यम् ॥ १४ ॥

उत्तरहेतुषु हेतुद्वयमाह ।

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

गतिः शब्दश्च ताभ्याम् । गतिर्ब्रह्मलोकगतिः, एवमेवेमाः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति, एष आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्प इति केवलब्रह्मवाचकाः शब्दाश्च । ताभ्यामत्र दहरशब्दवाच्यं ब्रह्मैव । नन्वहरहर्गमनं जीवस्यैव स्वप्नमायामनोरथादिषु युक्तम् । तथा अपहतपाप्मादयो जीवस्य ब्रह्मरूपत्वाज्जीवपरा एव शब्दा युक्ता इत्याशङ्क्याह । तथाहि दृष्टम् । गतिशब्दौ ब्रह्मण्येव युक्तौ, न जीवे । गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति कथनाद् ब्रह्मविषयिण्येवात्र जीवानां गतिः प्रतिपाद्यते, न स्वप्नमायामनोरथादिगमनम् । सुषुप्तौ सुखमहमस्वाप्सं, न किञ्चिदवेदिषमित्यनुभवात् । जीवानां मायावेष्टनेन दोषयुक्तत्वादपहतपाप्मत्वासम्भवश्च । जीवस्य ब्रह्मरूपत्वमपि न । अंशो नानाव्यपदेशादित्यनेन भगवदंशत्वेनैव वक्ष्यमाणत्वात् । अतो गतिशब्दौ ब्रह्मविषयौ युक्तौ, न जीवपरौ । तथा लिङ्गं च वर्तते गतिशब्दयोर्ब्रह्मपरत्वनिरूपणे । अत्र गतिविषयस्य ब्रह्मलोकशब्देन नित्यत्वनिरूपणान्मनोरथादिकल्पितलोकानां, यथैवेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति श्रुत्या क्षयिष्णुत्वकथनाद् ब्रह्मविषयिण्येवात्र गतिः प्रतिपाद्यते । अपहतपाप्मब्रह्मलोकादयः शब्दा ब्रह्मपरा एव युक्ता, न जीवपराः । एतं ब्रह्मलोकं न विन्दन्तीति कथनात् । जीवस्य स्वाज्ञानासम्भवात् । अतो लिङ्गादपि गतिशब्दयोर्ब्रह्मपरत्वं युक्तम् । चकारात्, तमेव विदित्वेति श्रुत्या ब्रह्मणो ज्ञानं मोक्षाय, नत्वात्मनो ब्रह्मत्वेन ज्ञानमित्युक्तम् । अतो दहरशब्दवाच्यं ब्रह्मैव ॥ १५ ॥

हेत्वन्तरमाह ।

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति श्रुत्युक्तविधारणं ब्रह्मण एव सम्भवति, नान्यस्य । चकारात् सेतुत्वमपि तस्यैव । ननु परिदृश्यमानस्य जगतो महत्वादतिसूक्ष्मत्वादाकाशस्य तद्धारणासम्भवाद् वासनारूपेण जगतो विद्यमानत्वादरूपं गौणं धारणं वाच्यम् । तच्च जीव एव सम्भवतीति, न धारणात्मकहेतोर्ब्रह्मत्वसाधकत्वमित्याशङ्क्याह । अस्य धारणात्मकस्य महिम्नोऽस्मिन् ब्रह्मण्येवोपलब्धेः । यद्यत्र गौणं धारणमुच्यते, तर्हि तस्य संसारिध-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्मंमहिमा न स्यात् । विरुद्धधर्माश्रयत्वं तु ब्रह्मण्यनेकप्रमाणसिद्धत्वाद् भूषणतामावहति । अत एतादृशमहिम्नो जीवेऽसम्भवाद् दहरः परमात्मैव ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

एतत्प्रकरणोक्तानामाकाशशब्दवाच्यत्वापहतपाप्मत्वादिनिखिलधर्माणां ब्रह्मण्येव प्रसिद्धेर्ब्रह्मैव दहरपदवाच्यं, न जीवः । विधिमुखेनाधिकरणसमाप्तिसूचकश्चकारः ॥ १७ ॥

इतरनिषेधद्वारा पुनर्विचारयति । ननु ब्रह्मस्वरूपं जीवस्वरूपं च श्रुत्येकसमधिगम्यमिति, यथा ब्रह्मणोऽसाधारणधर्मदर्शनादिदं प्रकरणं ब्रह्मण इति निर्णीयते, तथात्र जीवस्यासाधारणधर्मदर्शनात् तस्यैवेदं प्रकरणमिति निश्चिते, यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदयमाकाश इत्याकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्तीति नास्मिन् प्रकरणे ब्रह्मप्रतिपादनमिति सूत्रार्द्धेनाशङ्क्य समाधत्ते ।

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१८॥

इतरो जीवः, तस्य परामर्शाद् उपक्रमोपसंहारमध्येषु, अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यत इत्यादिष्वभिनिष्पत्तिकथनेन जीवस्यैव परामर्शात् स जीव एवात्र प्रतिपाद्यत इति चेन्न । जीवे जगदाधारत्वादिधर्माणामसम्भवात् । जीवपरामर्शस्त्वन्यार्थ इत्यग्रे वक्ष्यति । अतो दहरशब्दवाच्यो न जीवः ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरात् प्राजापत्यप्रकरणात् । तत्र मनोरूपदिव्यचक्षुषि प्रतीयमानो जीव एवाऽमृताऽभयरूप उक्तः । तस्यैव जाग्रत्स्वप्नसुषुप्तिसाक्षित्वमुक्त्वा सर्वत्र तस्याऽमृतरूपत्वं निरूपितमिति जीवेऽपि तादृशधर्मसम्भवादुत्तरप्रकरणानुरोधादत्रापि जीवो वाक्यार्थ इत्याशङ्क्याह । आविर्भूतस्वरूपस्तु । तुशब्देन पक्षं व्यावर्तयति । जीवे तादृशधर्मवत्त्वं न दूष्यते, किन्त्वाधिकं किञ्चिदुच्यत इति नकारप्रयोगाऽभावः । जीवे यदा भगवदाविर्भावो भवति तदा ते धर्मा आविर्भव-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्ति, नतु सहजास्ते जीवे वर्तन्ते । अत उपदेशावसरे भगवदाविर्भावेन सर्वत्र भगवन्तं पश्यन् प्रजापतिरिन्द्रात्मन्यपि तथैवोक्तवान् । एवमन्यत्रापि जीवे भगवद्धर्मकथनं भगवदावेशप्रयुक्तमिति बोध्यम् । अतो न जीवो दहरः ॥ १९ ॥

ननु तर्ह्यादिमध्यावसानेषु जीवपरामर्शस्य किं प्रयोजनमित्याशङ्क्याह ।

## अन्यार्थश्च परामर्शः ॥ २० ॥

अन्य एवार्थः प्रयोजनं यस्य परामर्शस्य स तथा । एवं च स्वस्य ब्रह्मज्ञानेन ब्रह्मधर्मवत्त्वं भवतीति ज्ञाने सति ब्रह्मज्ञानार्थं प्रयत्नो भवति, तेन ब्रह्मात्मकत्वं फलं च भवतीति बोधनार्थं जीवपरामर्श इत्यर्थः । चकारादेतादृशप्रयत्ने भगवदाविर्भावो भवतीति सूचितम् । अतो जीवपरामर्शदर्शनाज्जीवप्रतिपादनमत्रेति न भ्रमितव्यम् ॥ २० ॥

ननु परामर्शवशेन प्रकरणोक्तधर्माणां जीव उपपत्त्या च न प्रकरणस्य जीवपरत्वं कल्प्यते, किन्तु प्रकरणोक्तधर्माणां ब्रह्मण्यनुपपत्त्या जीवपरत्वकल्पनमिति सूत्रेणाशङ्क्य समाधत्ते ।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

अल्पे पुण्डरीके अवस्थानश्रुतेर्ब्रह्मणो व्यापकत्वेन तत्रासम्भवाज्जीवस्य त्वाराग्रमात्रत्वेन तत्र सामञ्जस्याज्जीवोऽत्र निरूप्य इति चेत् । इदं तु पूर्वमुक्तं, निचाय्यत्वादेवं व्योमवच्चेत्यत्र । हृदयकमले ब्रह्मणो निचाय्यत्वाद् द्रष्टुं शक्यत्वात् तदायतनत्वेन निरूप्यते इति तस्यार्थः । विरुद्धधर्माश्रयत्वं तु भूषणमेव । अतो दहरशब्दवाच्यो भगवानेवेति सिद्धम् ॥ २१ ॥

दहराकाशेऽग्निवायुसूर्यादीनां वर्तमानत्वं दहरस्वरूपनिरूपणे उक्तमिति, तद्विरुद्धवाक्यमाशङ्क्य परिहरति । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रूयते । तत्र यद्यप्यत्र ब्रह्मप्रकरणादिदं वाक्यं ब्रह्मपरमिति ज्ञायते, तथापि दहरनिरूपणे सूर्यादीनां तत्र विद्यमानत्वमुक्तम् । तत्रैव चेत्तेषामभानं स्यात् तदा कुत्र भास-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्त इति नास्मिन् वाक्ये ब्रह्मनिरूपणं, किन्तु सत्यलोकस्थितस्तेजोविशेषः कश्चिदत्र निरूप्योऽस्ति यत्र सूर्यादीनामभानमिति प्राप्ते, उच्यते ।

## अनुकृतेस्तस्य च ॥ २२ ॥

तमेव भान्तमनुभाति सर्वमित्यनेन सूर्यादिभानस्य भगवदनुकृतिनिरूपणार्थत्वादस्मिन् वाक्ये ब्रह्मैव प्रतिपाद्यं, नार्थान्तरम् । न तत्र सूर्यो भातीत्यादिना तेषां स्वतो भानं निषिध्यते । किञ्च, तस्य भासा सर्वमिदं विभातीत्यनेन सूर्यादीनां स्वतो भानं नास्तीत्युच्यते । सर्वोऽपि पदार्थो भगवद्भासनमनुकरोति सूर्यं रश्मय इवेति । अत इदं ब्रह्मवाक्यमेव ॥ २२ ॥

उक्तेऽर्थे संमतिमाह ।

## अपि स्मर्यते ॥ २३ ॥

न तद्भासयते सूर्य इति, यदादित्यगतं तेजो जगद्भासयतेऽखिलम्, यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति च गीतायां स्मर्यते । अपीति समुच्चयः । अतः सर्वावभासको भगवानेव, तमेव सर्वमनुकरोतीति निरूपणादिदं वाक्यं ब्रह्मपरमेवेति सिद्धम् ॥ २३ ॥

पुनर्बाधकान्तरमाशङ्क्य परिहरति । अङ्गुष्ठमात्रः पुरुषो मध्ये आत्मनि तिष्ठति, ईशानो भूतभव्यस्येति, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक इति च श्रूयते । तत्र यावान् वा अयमाकाश इति दहरपदवाच्यब्रह्मणो व्यापकत्वश्रवणादत्र चाङ्गुष्ठमात्रश्रवणेन विरोधाल्लोकान्तरगमनयोग्यदेहयुक्त उपासनार्थमीशानत्वादिधर्मवान् जीव एवात्र प्रतिपाद्यो, न भगवानिति प्राप्ते, उच्यते ।

## शब्दादेव प्रमितः ॥ २४ ॥

अत्रेशान इति शब्दादेवाङ्गुष्ठप्रमितो भगवानेवोच्यते । यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वमुक्तं, तथाऽत्राङ्गुष्ठमात्रस्यैवेशानत्वमुक्तम् । नह्येतादृशोऽन्यो भवितुमर्हति । अतोऽङ्गुष्ठमात्रो भगवानिति सिद्धम् ॥ २४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु श्रुतौ भगवतो माहात्म्यार्थं विरुद्धधर्माश्रयत्वमनेकरूपत्वं चोच्यते । तत्र प्रादेशमात्रत्वं ध्यानार्थमुक्तम् । अङ्गुष्ठमात्रत्वस्य तु प्रयोजनं न पश्याम इत्याशङ्क्याह ।

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

निष्प्रयोजनत्वव्यावर्तकस्तुः । प्रयोजनमाह । हृदि अङ्गुष्ठमात्रं निरूप्यते । तत्र हेतुः । अपेक्षया, । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मृत्युक्तनियमनात्मकेश्वरकार्यापेक्षया । ननु प्रादेशादिमात्रेणैव नियमनं भविष्यतीत्याशङ्क्याह । मनुष्याधिकारत्वात् । मनुष्याधिकारेणैव मृत्यूपाख्यानप्रवृत्तेर्मनुष्यहृदयास्याङ्गुष्ठमात्रत्वात् तत्परिमाणमेवोक्तम् । अतोऽङ्गुष्ठमात्रोऽत्र परमात्मैवोच्यत इति सिद्धम् ॥ २५ ॥

ननु मनुष्यहृदयापेक्षया ब्रह्मणोऽङ्गुष्ठमात्रोक्तेर्ब्रह्मविद्यायां मनुष्याणामेवाधिकारो, न देवादीनामित्याशङ्कायामाचार्यः स्वमतेन समाधत्ते ।

## तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

तेषां मनुष्याणामुपरि विद्यमानानां साध्यादीनामपि ब्रह्मविद्यायामधिकारं बादरायणो मन्यते । कुतः ? तेषां सातिशयधर्मज्ञानजनितविशिष्टजन्मवत्त्वेन तादृशाधिकारस्य सम्भवात् । अत्र जैमिनिप्रभृतीनां विप्रतिपत्तेः स्वनामग्रहणम् । धर्मयुक्तत्रैवर्णिकेभ्यो हीनानां तु वेदाध्ययनाभावादेवानधिकारः सिद्धः । तदुपरितनानां तु, यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति श्रुत्या ब्रह्मज्ञानेन मोक्षश्रवणात् तेषामधिकारः सिद्धः ॥२६॥

ननु देवादीनामुत्तरकाण्डोक्तज्ञानाधिकारे स्वीक्रियमाणे पूर्वकाण्डोक्तवेदाध्ययनोपनयनयज्ञादिष्वप्यधिकारो वक्तव्यः । स तु तेषां ब्राह्मण्याभावाद् देशद्रव्याभावाद् देवतान्तराभावाच्च न सम्भवति । तदभावेऽपि यागादौ क्रियमाणे वेदविरोध इति सूत्रार्द्धेनाशङ्क्य परिहरति ।

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२७॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नैवं वक्तुं शक्यते । श्रुतौ, साध्या वै देवाः सत्रमायन्नित्या- दिनाऽनेकानां प्रतिपत्तिः कर्मणि प्रवृत्तिः, तस्या दर्शनात् । एकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवासेति श्रुत्या ज्ञानेऽपि प्रवृत्तिद- र्शनादुपरितनानामपि ज्ञानकर्माधिकारः सिद्धः ॥ २७ ॥

ननु देवादीनां कर्मकरणे विरोधाभावेऽपि शब्दे वैदिके विरो- धो भविष्यति । वेदार्थज्ञानानन्तरं हि कर्मकरणं सम्भवति । तत्र साध्यादीनां कर्मकरणं वेद एवोच्यते, तज्ज्ञात्वा साध्यादीनां कर्म- करणं विरुद्धम् । साध्यान्तरकल्पने त्वनवस्था स्यात् । सोऽग्निष्टोमेन वसूनयाजयदित्यत्रोत्पन्नानां वसूनां वृत्तान्तकथने तु नित्यानित्य- संयोगविरोधाद् वेदस्याप्यनित्यत्वं स्यादित्याशङ्क्य परिहरति ।

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानु- मानाभ्याम् ॥ २८ ॥

न, शब्दोक्तानां साध्यादिपदार्थानाम् अतः शब्दादेव प्रभवात् प्रकाशनात् । लौकिकघटादिपदार्थेभ्यो भगवदवयवभूताः सच्चिदान- न्दात्मका वैदिका घटादयः पदार्था भिन्ना एवाङ्गीकर्तव्याः । तत्प्रति- पादकत्वाद् वेदस्य न नित्यानित्यसंयोगः । तत्र प्रमाणमाह । प्रत्य- क्षानुमानाभ्याम् । इदानीमेव प्रत्यक्षं यजमानो यजमानकृत्यम् ऋ- त्विजोऽपि स्वकृत्यं वेदादेव जानन्ति । जमदग्नीनां पञ्चावत्तमित्यत्र तु स्वस्मिञ्जामदग्न्यत्वमनुमाय पुरोडाशादिषु पञ्चावत्तत्वं कुर्वन्ति । यजमानत्वं प्रत्यक्षगम्यं, जामदग्न्यत्वमनुमानगम्यम् । अतो वेदबो- धितभगवदवयवात्मकयजमानादीनां तत्तत्संस्कारैः स्वस्मिन्नावेशात् तत्तत्कार्यकरणं युज्यते । अतोऽलौकिकपदार्थप्रतिपादकत्वाद् वैदि- कशब्दे न विरोध इति सिद्धम् ॥ २८ ॥

विशेषोपपत्तिं पूर्वोक्तस्योपष्टम्भिकामाह ।

## अत एव च नित्यत्वम् ॥ २९ ॥

अत आधिदैविकपदार्थप्रतिपादकत्वादेव वेदस्य लौकिकप्रप- ञ्चवैलक्षण्येन नित्यत्वं ज्ञेयम् । चकाराच्छब्दब्रह्मवेदपुरुषादिशब्दवाच्य- त्वं च ज्ञेयम् । अत आधिदैविकपदार्थनिरूपकत्वाद् वेदस्य नित्यत्वं सिद्धम् ॥ २९ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु वेदवाच्यानामाधिदैविकघटादीनामतीन्द्रियत्वेन व्यवहारविषयत्वाभावाद् वैदिकपदार्थेषु शक्तिग्रहार्थं लौकिकपदार्थोऽपेक्षितः । लौकिकप्रपञ्चस्य वैदिकप्रपञ्चानुकारित्वात् । तथा सति लौकिकप्रपञ्चस्य सृष्टिप्रलयसत्त्वात् तथैव नित्यानित्यसंयोगदोषप्राप्तिरित्याशङ्क्याह ।

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

यद्यपि लौकिकप्रपञ्चस्यापि ब्रह्मात्मकत्वात् तस्याप्याविर्भावतिरोभावावेव, नाशोत्पत्तिप्रतीतिर्भ्रान्तिस्तथापि लौकिकप्रतीत्यनुसारेणावृत्तावप्युत्पत्तिप्रलयसत्त्वेऽपि समाननामरूपत्वात् प्रलये ब्रह्मणि लीनस्य घटादिपदार्थस्य सृष्टिकाले तथैव नामरूपविशिष्टस्योद्गमाद् भेदकान्तराभावाज्जलप्रवाहवन्नित्यत्वेन प्रतीतेर्न नित्यानित्यसंयोगात्मको विरोधः । कुतः? दर्शनात् । वेदपितृमातृस्त्रीशरीरगङ्गादिषु तदेवेदमितिव्यवहारदर्शनात्, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिश्रुतिदर्शनाच्च । प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते इत्यादिस्मृतेश्च । ऋषीणां पूर्वचरितस्मरणात्मकसर्वस्मृतेश्च । अतो न शब्दे कोऽपि विरोधः ॥ ३० ॥

अर्थबलविचारेण पूर्वपक्षमाह ।

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

ननु, असौ वा आदित्यो देवमध्वित्यादिनोक्तमधुविद्यायां सूर्यस्य देवमधुत्वेनोपासनोक्तेस्तदुपासनायां सूर्यस्य कर्तृत्वासम्भवादेवं देवतान्तरोपासनास्वपि तत्तद्देवानां कर्तृत्वासम्भवात् सर्वत्र ज्ञाने कर्मणि च देवानामनधिकार इति जैमिनिराचार्यो मन्यते ॥३१॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

ज्योतिश्चक्रे नक्षत्रादिरूपेण भोगकरणदर्शनाद्, अग्निः पुच्छस्य प्रथमं काण्डमित्यादिश्रुतेश्च तेषां प्राप्तैश्वर्याणां सर्वोपास्यानां ज्ञानकर्मणोरुपयोगाभावान्नाधिकारो देवानामिति प्राप्ते ॥ ३२ ॥

बादरायणः स्वमतेन सिद्धान्तमाह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

पूर्वपक्षव्यावर्तनार्थं तुः । भावं देवानां ज्ञानकर्माधिकारसद्भावं बादरायण आचार्यो मन्यते । किमलौकिकज्ञानेनाधिकारं मनुते ? । तर्ह्यलौकिकज्ञानं जैमिनेरप्यस्तीति तुल्यबलत्वाद् विकल्पापत्तिरित्याशङ्क्याह । अस्ति हि । देवा वै सत्रमासतेत्यादिभिः, तद्यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिभिश्च श्रुतिभिर्देवानामपि ज्ञानकर्माधिकारोऽस्ति । हि युक्तोऽयमर्थः । यत्र मध्वादिविद्यासु सूर्यादिदेवानामुपास्यत्वं दृश्यते, ते देवा भगवदवयवभूता आधिदैविका भिन्ना एवातस्तेषामुपासनमाधिभौतिकानामेतत्सूर्यादीनां युक्तमेवेतिभावः । नच पूर्वकल्पीया वस्वादय एतत्कल्पीयवस्वादीनामुपास्या इति वाच्यम् । तेषामनित्यत्वेनानुपास्यत्वात् तेषामुपास्यत्वबोधकवेदस्यानित्यत्वप्रसङ्गाच्च । अतो भगवदवयवात्मकाधिदेवानामुपास्यत्वबोधकदेवानामप्यधिकारोऽस्तीति सिद्धम् ॥ ३३ ॥

प्रसङ्गाच्छूद्रस्याधिकारमाशङ्क्य परिहरति । छान्दोग्ये, अह हारे त्वा शूद्र तवैव सह गोभिरस्त्विति शूद्रानेन मुखेनालापयिष्यथा इति च जानश्रुतिं शूद्रत्वेन सम्बोध्य रयिक्वः संवर्गविद्यामुक्तवान् । अतो यथा, एनया निषादस्थपतिं याजयेत्, हविष्कृदाधावेति शूद्रस्येति लिङ्गात् कर्मविशेषे शूद्रस्याधिकार एवमिहापि संवर्गविद्यायां शूद्रस्याधिकार इत्याशङ्क्य परिहरति ।

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

अस्य जानश्रुतेः, तदनादरश्रवणात्, कंवर एनमेतत् सन्तं सयुग्वानमिव रयिक्वमात्थेति, तस्माद् हंसादनादरश्रवणात् शुक् शोको जातः । तेन किं जातमित्याकाङ्क्षायामाह । तदाद्रवणात् तत् तदनन्तरम् आद्रवणाच्छूद्रत्वं जातमित्यर्थः । शुचमनु आद्रवतीति शूद्रः । पृषोदरादित्वात् सिद्धः । ननु योगापेक्षया प्रबलत्वाद् रूढेर्जातिशूद्रवाचकत्वं कुतो न भवतीत्यत आह । सूच्यते हि । क्षत्रियं प्रति परोक्षवादेन शूद्रसम्बोधनेन हंसवाक्यजनितशोकवत्त्वसूचनात् तद्वृत्तान्ताभिज्ञत्वेन स्वस्य सर्वज्ञत्वं सूच्यते । ब्रह्मविदां सर्वज्ञत्वे

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



युक्तमिति हि शब्दार्थः। अतः शुचं प्रत्याद्रवणाज्जानश्रुतिं प्रति शूद्रेति सम्बोधनं न जातिशूद्रत्वेन ॥ ३४ ॥

ननु जानश्रुतेर्जातिशूद्रत्वाभावे किं नियामकमत आह ।

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

जानश्रुतेर्गोनिष्करथकन्यादिपदार्थानां रयिकाय दानात् क्षत्रियत्वमवगम्यते । नहि क्षत्रियादन्यो ब्राह्मणायैतद्दातुमर्हति । चकाराद् विद्योपदेशोऽप्यन्यस्य न सम्भवतीति । ननु गवादिपदार्थानामन्यस्यापि वदान्यस्य धनवतो दानसम्भवान्नेदमेकान्ततः क्षत्रियत्वसाधकमित्याशङ्क्याह । उत्तरत्र चैत्ररथेन लिङ्गात् । उत्तरत्र संवर्गविद्योपासने, अथाह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिमिति क्षत्रियब्राह्मणावुक्तौ। अतोऽत्रापि क्षत्रियब्राह्मणावेव युक्तौ, न शूद्रब्राह्मणौ। कक्षा चित्रा सेना यस्य स कक्षसेनः। तस्यापत्यं काक्षसेनिः। स एव सूत्रे चैत्ररथशब्देनोक्तः । चित्रा रथा यस्य स चित्ररथः, तस्यापत्यं चैत्ररथ इत्यर्थात् । चैत्ररथस्याभिप्रतारिणः क्षत्रियत्वं तु, एतेन वै चित्ररथं कापेया अयाजयन्निति श्रुत्यन्तराद् बोध्यम् । शौनकः कापेयो याजकः । याज्यश्च चित्ररथः क्षत्रियः। नहि शूद्रो याज्यो भवति । तत्पुत्रश्च काक्षसेनिरभिप्रतारी । अत उत्तरब्राह्मणक्षत्रियौ गुरुशिष्यौ संवर्गविद्यायामुक्तौ।अतोऽत्रापि तथैव भवितुमर्हतीति न जातिशूद्रस्य संवर्गविद्यायामप्यधिकारः ॥ ३५ ॥

किञ्च ।

## संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

क्वापि विद्यायां शूद्रस्याधिकारश्चेत् संवर्गविद्यायामधिकारः कल्प्येत। सर्वत्र विद्योपदेशे उपनयनाख्यः संस्कारः परामृश्यते । तं होपनिन्ये, अधीहि भगव इति होपससाद, तान् नुहानुपनीयेत्यादिवाक्येषु विद्याप्रदानमुपनयनपूर्वकं दृश्यते । शूद्रस्य तु तदभावाभिलापात् संस्काराभावकथनाच्चतुर्थ एकजातिः शूद्र इति, न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हतीत्यादिवाक्येभ्यः । न शूद्राय मतिं दद्यादिति निषेधोऽपि चकारेण समुच्चीयते ॥ ३६ ॥

किञ्च ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ ॥

सत्यकामो ह वै जाबाल इति वाक्ये गौतमस्य सत्यकामवचनं श्रुत्वा, नैतदब्राह्मणो विवक्तुमर्हतीति शूद्राभावनिर्द्धारणे सति, चकाराद् वर्णित्वनिर्द्धारणे सत्युपनयनार्थं प्रवृत्तेः। अतो न जातिशूद्रस्य क्वापि विद्यायामधिकारः ॥ ३७ ॥

अथ विद्याधिकारचिन्ता दूरे, वेदश्रवणादीनामेव निषिद्धत्वादित्याह।

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति। पद्यु वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसामीप्ये नाध्येतव्यमिति। उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद इत्यादिना वेदश्रवणम् अध्ययनम् अर्थज्ञानमेतत्त्रयमपि तस्य प्रतिषिद्धम्। इदं, वेदाक्षरविचारेण शूद्रः पतति तत्क्षणादिति स्मृतेरपि सम्मतमित्याह। स्मृतेश्च। अधिकरणसम्पूर्णताबोधकश्चः। स्मार्ते ज्ञाने पौराणिके च सच्छूद्राणामधिकारो, नतु कर्मजातिशूद्राणाम्। अतः क्वचिदपि वैदिकविषये न शूद्राधिकार इति सिद्धम ॥ ३८ ॥

प्रासङ्गिकं परिहृत्य प्रकृतं समन्वयोपयोगिविचारमारभते। कठवल्ल्यां श्रूयते। यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति। तत्र प्राणशब्दाद् वज्रोद्यमनशब्दाच्च किमत्र प्राणोपासना, इन्द्रोपासना वा प्रतिपाद्यते? उत ब्रह्मप्रकरणत्वाद् ब्रह्मोपासना वेति? विशये, बलवद्बाधकश्रवणात् प्रकरणस्य दुर्बलत्वात् प्राण एवात्रोपास्यः। प्राणशब्दस्य च प्रत्यक्षत उपलभ्यमानत्वात्। अमृतं वै प्राणा इति श्रुतेरमृतप्राप्तिरपि प्राणोपासकस्य युक्ता। वज्रमुद्यतमित्यपि वियोगेन मरणजननेन प्राणानां भयरूपत्वाद् युक्तम्। अथवा इन्द्रोऽत्रोपास्यः। वज्रमुद्यतमित्यस्येन्द्रपक्षे सामञ्जस्यात। प्राणशब्दवाच्यत्वमपीन्द्रस्य बलाधिष्ठातृत्वाद् युज्यते। अत इन्द्र एवात्र वाक्यार्थो, न ब्रह्मेति प्राप्ते, उच्यते।

## कम्पनात् ॥ ३९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्राण एजतीत्यस्मिन् वाक्ये कम्पनं प्रतीयते । एजृ कम्पने इति धात्वर्थात् । तच्च भगवतः सर्वजगद्भयजनकत्वेन कम्पजननाद् भगवद्धेतुकमेव भवितुमर्हति, न प्राणहेतुकमिन्द्रहेतुकं वा । वज्रोद्यमनमपि भगवतः सम्भवति । सर्वकर्तृत्वात् सर्वायुधत्वाच्च । 'नन्वेष वज्रस्तव शक्र ! तेजसा हरेर्दधीचेस्तपसा च तेजित' इति वाक्येन वज्रं विशेषतो भगवत्सम्बन्धकथनाच्च । अतो भगवत एव मारकं रूपमत्रोच्यते । तस्मात् कम्पनाद्धेतोर्ब्रह्मैवात्र वाक्यार्थः । प्राणशब्दवाच्यत्वं तु ब्रह्मणो व्युत्पादितमेव ॥ ३९ ॥

य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते । तत्र परज्योतिःशब्दवाच्यं महाभूतात्मकं ज्योतिर्ब्रह्म वेति संशये, ज्योतिःपदस्य रूढ्या भौतिकतेजोवाचकत्वात् तद्वाचकमेवात्र ज्योतिःपदमिति प्राप्तेऽभिधीयते ।

## ज्योतिर्दर्शनात् ॥ ४० ॥

ज्योतिःशब्दं ब्रह्मैव । कुतः ? दर्शनात्, न्यायादित्यर्थः । सुषुप्त्यवस्थायां सता सौम्य तदा सम्पन्नो भवति सति सम्पद्य न विदुः सति सम्पद्यामह इति, अहरहर्ब्रह्मलोकं गच्छन्तीत्यादिषु सर्वत्र ब्रह्मसम्पत्तिरुक्ता । तन्न्यायादत्रापि सम्प्रसादशब्देन सुषुप्तिकथनात् परज्योतिःसम्पत्तिर्ब्रह्मप्राप्तिरेवेति ज्योतिःशब्देन ब्रह्मैवोच्यते, न भौतिकं तेजः । अतो यः कश्चन शब्दो ब्रह्मधर्मबोधकशब्दैः सह पठितः स ब्रह्मवाचक एवेति बोध्यम् ॥ ४० ॥

आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेति श्रूयते । तत्राकाशशब्देन रूढ्या भूताकाशो वा, प्रकरणाद् ब्रह्म वेति सन्देहे भूताकाश एवात्र ग्राह्यो रूढेर्बलीयस्त्वात् । भूताकाशस्यावकाशदानान्नामरूपनिर्वाहकत्वं युज्यते । अतो भूताकाश एवात्र प्रतिपाद्य इति प्राप्तेऽभिधीयते ।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

आकाशः परमात्मैव । कुतः ? भूताकाशस्य श्रुतिसिद्धं यत् प्रयोजनं तस्माद् अर्थान्तरस्य प्रयोजनान्तरस्य व्यपदेशात् कथना-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दित्यर्थः । अवकाशदानेन नामरूपनिर्वाहकत्वं न महात्म्यप्रतिपादकम् । अत्र तु, वै इति निश्चयवाचकपदकथनान्माहात्म्यरूपं नामरूपनिर्वाहकत्वमुक्तम् । तद्ब्रह्मण एव भवतीत्याकाशशब्दवाच्यं ब्रह्मैवात्र । एवमन्यत्राप्यतदीया उत्कृष्टधर्मा यत्राम्नातास्तद् ब्रह्मैव भवतीति ज्ञेयम् । नामरूपनिर्वाहकत्वरूपब्रह्मधर्मस्यान्यत्रानुक्तस्य कथनार्थमिदमधिकरणम् । अतोऽत्राकाशः परमात्मेति सिद्धम् ॥ ४१ ॥

बृहदारण्यके ज्योतिर्ब्राह्मणे, याज्ञवल्क्य ! किं ज्योतिरयं पुरुष इत्यारभ्य, अभयं ह वै ब्रह्म भवति य एवं वेदेत्यन्तं श्रूयते । तत्रेदं जीवस्य ब्रह्मत्वप्रतिपादनेन जीववाक्यम्, आहोस्विद् ब्रह्मणो ज्ञेयत्वप्रतिपादनेन ब्रह्मवाक्यमिति संशये, आपाततोऽत्र जीवस्य ब्रह्मभावप्रतिपादनादन्यप्रतीतेर्जीववाक्यमेवेदमिति प्राप्तेऽभिधीयते ।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादित्यनुषज्यते । तथाच सुषुप्तिनिरूपणे उत्क्रान्तिनिरूपेण च जीवब्रह्मणोर्भेदेन व्यपदेशात् कथनाद् ब्रह्मण एव ज्ञेयत्वेन निरूपणेन ब्रह्मवाक्यमेवेदमिति युक्तम् ॥ ४२ ॥

किञ्च ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

सर्वस्य वशीत्यादिभ्यः शब्देभ्यः स्पष्टमेवेदं प्रकरणं ब्रह्मण इति निश्चीयते । अतोऽत्र ब्रह्मैव प्रकरणार्थ इति सिद्धम् ॥ ४३ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां प्रथमाध्यायस्य
तृतीयः पादः ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रथमाध्यायस्य चतुर्थः पादः ।

एवं सकलवेदान्तानां ब्रह्मणि समन्वये प्रतिपादिते, केषांचिद् वेदार्थाविदुषां क्वचिद् वेदे सांख्यमतानुसारिशब्ददर्शनात् तन्मतमपि वेदमूलकमेवेत्याशङ्का स्यात्, तन्निवारणं चतुर्थपादे क्रियते। तत्रेक्षत्यधिकरणे सांख्यमतमशब्दमित्युक्त्या निराकृतं, तद्वेदे प्रतिपादितमित्याशङ्क्य निराकरोति ।

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

एकेषां कठशाखासु, इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः, मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः, महतः परमव्यक्तमव्यक्तात् पुरुषः परः,पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्यानुमानिकं सांख्यमतसिद्धं प्रकृत्यादिकं श्रूयते। बुद्धेः सकाशादात्मा अहङ्कारः परः । ततो महान् महत्तत्त्वम् । ततोऽव्यक्तं प्रकृतिः । ततः पुरुषः पर इति श्रुतेरर्थः । अतोऽहङ्कारादिपदार्थानां सांख्यमतसिद्धानां श्रुतौ दर्शनात् सांख्यमतमपि श्रौतं भवितुमर्हतीति चेद्, नैवं शब्दसादृश्येन तन्मतस्य वैदिकत्वसिद्धिर्वक्तुं शक्या। तेषां शब्दानां प्रकृते भिन्नार्थकत्वात् । सन्दिग्धपदानां पूर्वापरानुसारेणार्थः कर्तव्यः । पूर्वं तु, आत्मानं रथिनं विद्धि शरीरं रथमेव तु, बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च, इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्, आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इत्युक्तमतस्तदनुसारेणैवास्यार्थ उचितः । तदेवाह । शरीररूपकविन्यस्तगृहीतेः । शरीरसम्बन्धिन इन्द्रियादयो रथादिषु रूपकभावेन पूर्वम्, आत्मानं रथिनं विद्धीत्यादौ विन्यस्ताः । तेषामेवात्र गृहीतेः ग्रहणात् । तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरं रथत्वेन रूपितम् । तन्निर्वाहकाणीन्द्रियाणि हयाः । तन्नियामकः प्रग्रहो रश्मिः, स च सूताधीनः। तद्गतिस्तु मार्गाधीना । मार्गस्तु प्राप्याधीन इति । एवं सम्यग् ज्ञात्वा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्राप्यदेशं प्राप्नोतीति पूर्वमुक्तम् । तेषामेवात्र ग्रहणं युक्तम् । तत्रेन्द्रियाणां नियामका विषयाः । तेषां तदधीनत्वात् । विषयाणां सम्यक्त्वेन मनसा भावनाद्, मनसाऽभावितविषयाणामिन्द्रियाकर्षकत्वाभावाद् विषयेभ्यः परं मनः । बुद्धेर्मनोनियामकत्वात् ततः परत्वम् । बुद्धेः सकाशादात्मा विज्ञानं ब्रह्मविषयकत्वान्महत् तत्परम् । महतो विज्ञानात् परमव्यक्तं, न व्यक्तम् अप्रकटं भगवत्कृपा तस्या भगवदधीनत्वात् । तत उत्कृष्टः पुरुषो भगवानेवेति पूर्ववाक्यसम्बद्ध एवार्थः । एषु सर्वेषु भूतेषु गूढोत्मा न प्रकाशते, दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति स्वयं दर्शयति । सूक्ष्मया उपनिषदनुसारिण्या बुद्ध्या भगवान् दृश्यते प्राप्यत इत्यर्थः । चकारेण, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति स्मृतेर्ग्रहणम् । अतो ब्रह्मप्राप्तिसाधनबोधकमिदं वाक्यं, न सांख्यमतसिद्धपदार्थबोधकम् ॥ १ ॥

नन्वत्रेन्द्रियादिरूपधर्मिप्रवाहाद्धर्मरूपा भगवत्कृपाऽव्यक्तशब्देन ग्रहीतुमयुक्तेत्याशङ्क्याह ।

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तुः पूर्वपक्षनिरासे । सूक्ष्मं तद् ब्रह्मैव, अव्यक्तमपि तदेव । धर्मधर्मिणोरभेदाद् भगवत्कृपापि सूक्ष्मशब्देनोच्यते । कुतः ? अर्हत्वात् सूक्ष्मत्वाद् अव्यक्तशब्देन वक्तुं योग्यत्वात् । अतोऽत्र भगवत्कृपैवाव्यक्तशब्दवाच्या ॥ २ ॥

नन्वव्यक्तशब्दवाच्यभगवत्कृपाया भगवद्रूपत्वे पुरुषस्य ततः परत्वमनुपपन्नम् । नह्येकस्मिन्नेव परापरभावो भवति । धर्मरूपत्वे तु धर्मिप्रवाहपाठानुपपत्तिरित्याशङ्क्याह ।

## तदधीनत्वादर्थवत् ॥ ३ ॥

धर्मधर्मिणोरभेदेऽपि कृपायास्तदधीनत्वाद् भगवतस्ततः परत्वं युज्यते । ननूक्तमेकस्मिन् परापरभावानुपपत्तिरित्याशङ्क्य दृष्टान्तेन समाधत्ते । अर्थवत् । अर्थः पुरुषार्थः फलं, तद्वत् । यथा, ब्रह्मविदाप्नोति परमितिवाक्ये एकस्यैव ब्रह्मणः सच्चिद्रूपेण साधनीभूत-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ज्ञानविषयत्वं. तस्यैवानन्दरूपेण फलत्वमुक्तम् । तथात्रापि कृपा- विष्टः साधनम्. आनन्दरूपः फलमिति नोक्तदोषावकाशः । यद्वा अव्यक्तशब्देनाक्षरं ब्रह्म । महान् आत्मविषयकं विज्ञानम् । तस्य विषयाधीनत्वादक्षरब्रह्मणस्ततः परत्वम् । अत, इन्द्रियेभ्यः परा ह्यर्था इति वाक्ये सांख्यमतसिद्धः कोऽपि पदार्थो नास्तीति, न त- न्मतं श्रुतिमूलकमित्यर्थः ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

सांख्यवादिनां प्रकृतिपुरुषान्तरं ज्ञेयत्वेनोक्तम् । अस्मिन् वाक्ये त्वव्यक्तादयः पदार्था एवोक्ता, न तु तेषां ज्ञेयत्वमुक्तम् । नहि पदार्थनिर्देशमात्रेण सांख्यमते पुरुषार्थः सिद्ध्यति । चकारात् तेषां मते प्रकृतिपुरुषयोः संश्लिष्टत्वम्, अत्र तु परापरभाव उक्त इत्यपि वैलक्षण्यं सूचितम् । अतः, पूर्वापरविचारेण पूर्वमर्थ उक्तः । अ- स्मिन् सूत्रे त्वेतद्वाक्यार्थमात्रविचारेणापि सांख्याभिमतोऽर्थो न सिद्ध्यतीत्युक्तम् ॥ ४ ॥

ननु ज्ञेयत्वमप्यत्रोच्यते । इन्द्रियेभ्यः परा ह्यर्था इत्यस्मिन् वाक्ये पदार्थनिर्देशमात्रं कृत्वाऽग्रे, अशब्दमस्पर्शमरूपमव्ययं तथा- ऽरसं नित्यमगन्धवच्च यत्, अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत इत्यनेन निचाय्य तं मृत्युमुखात् प्रमुच्यत इति कथनाज्ज्ञेयत्वं वदतीत्याशङ्क्य परिहरति ।

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

प्रकरणं हि वाक्यार्थे नियामकं, तच्च परमात्मन एव । अतोऽ- स्मिन्नपि वाक्ये प्राज्ञः परमात्मैव निचाय्यो, नतु प्रधानम् । अतः प्र- करणस्य नियामकत्वादशब्दमित्यपि वाक्यं ब्रह्मवाक्यमेव ॥ ५ ॥

ननु नात्र सर्वमेकं प्रकरणम्, अपि त्विन्द्रियेभ्यः परा ह्यर्था इत्यारभ्य नाचिकेतमुपाख्यानमित्यन्तं प्रकृतिपुरुषनिरूपकं भिन्नमेव प्रकरणम् । तत्रेन्द्रियेभ्यः परा इति वाक्ये पदार्थनिर्देशः । एष सर्वेषु भूतेष्वति वाक्ये पुरुषनिरूपणम् । अशब्दमिति तु प्रकृतिनिरूपणम् । अत एतावत् प्रकरणं सांख्यमतनिरूपकमस्त्वित्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अत्र कठवल्ल्यां, स त्वमग्निं स्वर्ग्यमध्येऽपि मृत्यो प्रब्रूहीत्यादिना प्रथममग्निप्रश्नः। प्र ते ब्रवीमीत्यादिना तदुत्तरम्। ये यं प्रेते विचिकित्सा मनुष्य इति जीवविषयको द्वितीयः प्रश्नः। देवैरत्रापीत्यादिनोत्तरम्। अन्यत्र धर्मादन्यत्राधर्मादिति ब्रह्मविषयकस्तृतीयः प्रश्नः। सर्वे वेदा यत्पदमामनन्तीत्यादिनोत्तरनिरूपणम्। एवं त्रयाणामग्निजीवब्रह्मणामुपन्यासः कथनं, तेषामेव प्रश्नश्च। कथने प्रश्नस्य हेतुत्वसूचनार्थं सूत्रे प्रश्नस्य पश्चान्निर्देशः। यद्यत्र सांख्यमतमपि निरूपणीयं स्यात् तदा चतुर्थस्याप्युपन्यासः प्रश्नश्च स्यादतः प्रकरणानुरोधात् प्राज्ञस्य ब्रह्मण एवात्र निरूपणं, न मतान्तरीयपदार्थस्येति ज्ञेयम्॥ ६ ॥

ननु सांख्यमतेऽन्यवाचकानां पदानां प्रकृते ब्रह्मवाचकत्वे प्रमाणाभाव इत्याशङ्क्याह।

## महद्वच्च ॥ ७ ॥

महान्तं विभुमात्मानं, वेदाहमेतं पुरुषं महान्तमित्यादौ यथा महच्छब्दो यौगिकः सन् ब्रह्मवाचकः। एवमव्यक्तशब्दोऽप्यव्यक्ताक्षरवाचकः।। नहि वेदान्तेषु, प्रथमकार्यरूपं महत्तत्त्वं महच्छब्देन वक्तुं शक्यते। तस्यैवास्वीकारात्। अत, इन्द्रियेभ्यः परा ह्यर्था इति वाक्ये साङ्ख्यपदार्थगन्धोऽपि नास्तीति, न तन्मतस्य वेदमूलकत्वमिति सिद्धम्। अधिकरणसमाप्तिबोधकश्चः॥ ७ ॥

श्रुत्यन्तरे पुनराशङ्क्य परिहरति। ननु पूर्ववाक्ये प्रकरणात् पदानामन्योऽर्थ उक्तः। यद्वाक्यं प्रकरणापेक्षारहितं, तदेव साङ्ख्यमतमूलं भविष्यति। अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः। देवात्मशक्तिं स्वगुणैर्निगूढामिति। ज्ञाज्ञौ द्वावजावीशानीशौ। अजा ह्येका भोक्तृभोग्यार्थयुक्ता। ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येदित्यादि श्वेताश्वतरोपनिषदि। अन्यत्र च कपिलप्रशंसकानि तन्मतीयपदार्थनिरूपकाणि च वाक्यानि वर्तन्त इति कापिलमतस्यापि वेदमूलकत्वमित्याशङ्क्य परिहरति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चमसवदविशेषात् ॥ ८ ॥

यथा, अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्, तस्यासते ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति मन्त्रे कर्मविशेषं कल्पयित्वा तत्रार्वाग्बिलचमसं कल्पयित्वा तस्मिन् यशोरूपं सोमं सप्त होतारो मन्त्रेण भक्षयेयुरिति विशेषः कल्पयितुं न शक्यते । किन्तु मन्त्रान्तरेण व्याख्यात एवार्थो बुद्ध्यते । तथाऽत्रापि लोहितशुक्लकृष्णशब्देन सत्त्वरजस्तमांसि कल्पयित्वा तदनुसारेण सर्वं कापिलमतं वैदिकमिति न कल्पयितुं शक्यते । कपिलर्षिस्तावकवाक्यस्यापि नित्यभगवदात्मकाधिदैविककपिलस्तावकत्वान्न दोषः । अन्यथा नित्यानित्यसंयोगविरोधदोषः स्यात् । अतो मन्त्रमात्रेण प्रकरणादिकमनपेक्ष्य न विशेषः कल्पयितुं शक्यते ॥ ८ ॥

ननु, अर्वाग्बिलश्चमस इति मन्त्रस्य मन्त्रान्तरे व्याख्यानमस्ति । शिरश्चमसः प्राणा वै यशः प्राणा वा ऋषय इति । न त्वजामन्त्रस्य तथा व्याख्यानमस्तीत्याशङ्क्याह ।

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥

तुः पक्षव्यावर्तकः । अजाशब्देन ज्योतिरत्रोच्यते । भगवतः प्रथमोत्पन्ना ज्योतीरूपा देवता अजाशब्देनोच्यते । यथा साल्पदोग्ध्री तथेयमप्युपासिताऽल्पसुखदात्रीति ज्ञापनायाऽजापदप्रयोगः । कुतः ? उपक्रमात् तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमा इति ज्योतिषोपक्रमात् । द्वा सुपर्णेति वाक्यमग्रे उक्तम् । मध्यपठितोऽयं मन्त्रः पूर्वोत्तरसम्बन्धमेवार्थं वक्ति । जीवब्रह्मरूपमजद्वयमुक्तम् । अस्मिन् प्रकरणेऽयमर्थो न स्पष्ट इति श्रुत्यन्तरसम्मतिं दर्शयति । तथाहीत्यादि । तथाहि, यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति श्रुत्यन्तरे स्पष्टमेवैकेऽधीयते । अतस्त्रिवृत्कृततेजसो रोहितशुक्लकृष्णत्वं युक्तम् । अतश्चमसवाक्यवदत्रापि श्रुत्यन्तरेणार्थविशेषोक्तेरिदं वाक्यं न साङ्ख्यमतस्य मूलम् ॥ ९ ॥

ननु योगरूढिभेदेन शब्दप्रवृत्तेर्द्वैविध्यात्, प्रथमकार्यात्मकज्योतिषि, न जायत इत्यजेति योगासम्भवाद् रूढेश्छान्दोग्यप्रसिद्धत्वात् कथमजाशब्दस्य प्रथमकार्यवाचकत्वमित्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

यथाऽजा वर्करसहिता सवत्सा च स्वामिहितं करोति दुग्धादिना, तथेयमप्युपासिता हितं करोतीति ज्ञापनायाजाकल्पताया उपदेशान्न पूर्वपक्ष उक्तो विरोधः। चकाराद् देवानां परोक्षप्रियत्वात् परोक्षवादोऽयमिति सूचितम्। मध्वादिवत्। यथा, आदित्यो वै देवमधु, वाचं धेनुमुपासीत, द्युप्रभृतीनामग्नित्वं पञ्चाग्निविद्योक्तम्। तथात्रापि कथनान्न दोषः। अतोऽजाशब्दमात्रान्न साङ्ख्यमतस्य वेदमूलकत्वमिति सिद्धम्॥ १०॥

ननु, यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः, तमेवमन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम् इति बृहदारण्यकोक्तमन्त्रे पञ्चपञ्चेतिसङ्ख्याश्रवणात् साङ्ख्यमतस्य सम्भवति वेदमूलकत्वमित्याशङ्क्य परिहरति।

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

यद्यप्यत्र पञ्चपञ्चेत्यनेन पञ्चानां पञ्चगुणत्वमुच्यते। पञ्चशब्दस्य सङ्ख्यावाचित्वे पञ्चसङ्ख्यायाः पञ्चसङ्ख्येत्यर्थकथने सङ्ख्यायां सङ्ख्याभावेनानन्वयात् षष्ठीसमासानुपपत्तेः पूर्वपञ्चशब्दस्य सङ्ख्येयपरत्वे द्वितीयस्य सङ्ख्यापरत्वे पञ्चसङ्ख्येयानां पञ्चसङ्ख्येत्यर्थात् पञ्चपदार्थानामेव बोधात् समीहितासिद्धेश्च। अतोऽत्र पञ्चजनानां पञ्चपञ्चेति वीप्सा वा यथासम्भवमर्थो भवति। तथाप्यत्याग्रहेण सङ्ख्योपसङ्ग्रहादपि न समीहितसिद्धिः। कुतः? नानाभावात्। साङ्ख्योपसङ्ग्रहे कश्चन धर्मः पञ्चानामनुगतो वक्तव्यः। स च तन्मते न सम्भवति। तथा सति पञ्चैव तत्त्वानि भवेयुः। अतस्तेषां नानाभावः स्वीकर्तव्यः। स्वीकृते तु तस्मिन् प्रकृते समासानुपपत्तिः। किञ्चात्र साङ्ख्यमतपदार्थानिरूपणमस्मिन् वाक्य एव प्रतीयते। यत आकाशो यस्मिन्नित्यधिकरणत्वेनोक्त आत्मा चातिरेकेणोच्यत इत्याह। अतिरेकाच्चेति। अत एतन्मन्त्रेणापि न साङ्ख्यमतस्य वेदमूलकत्वसिद्धिः॥ ११॥

ननु मन्त्रार्थस्त्ववश्यं कश्चन वक्तव्यः। अतो लक्षणया ज्योतिःशास्त्रवच्छास्त्रीयपरिभाषया वा पञ्चपञ्चशब्दस्य पञ्चविंशति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संख्याबोधकत्वात् पञ्चविंशतितत्त्वान्तर्गतात्माकाशयोरेव माहात्म्यार्थमाधाराधेयभावप्रदर्शनाच्चतन्मन्त्रस्यैव सांख्यमते मूलत्वमित्याशङ्क्य निराकरोति ।

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

पञ्चजनशब्दवाच्याः प्राणादय एव । कुतः ? प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन इति वाक्यशेषात् । नन्वस्य वाक्यशेषत्वं कथमिति चेदुच्यते । प्राणस्य प्राणमितिवाक्ये करणात्मकाः प्राणादय उक्ताः । ते ज्ञानक्रियात्मकं कार्यं स्वेन व्यापारेण जनयन्तीति तेषां करणान्तरानपेक्षणात् प्राणस्य प्राणमिति कथनं बाधितं स्यात् । अत एतद्वाक्यस्य पञ्चजनवाक्यशेषत्वमङ्गीकृत्य द्वयोर्वाक्ययोरेकोऽर्थो वक्तव्यः । एवञ्च बुद्धेः संशयविपर्यासनिश्चयस्मृतिस्वापलक्षणपञ्चवृत्तिजनकत्वात् पञ्चजनाः प्राणादय एव । तेषां तत्तत्कार्यजनकत्वं न स्वतः, किन्तु सर्वेषामाधिदैविकरूपभगवत एवेति प्राणादीनां प्राणादिरूपो भगवानेवेत्येवं द्वयोर्वाक्ययोरेकवाक्यतयार्थकरणे सर्वसामञ्जस्यम् । अतः प्राणादय एव पञ्चजना इति, न तन्मतं सिद्ध्यति ॥ १२ ॥

ननु काण्वपाठे प्राणस्य प्राणमितिवाक्ये, अन्नस्यान्नमिति नास्ति, तदा कथं पञ्चजनकत्वं तत्राह ।

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानां पाठेऽन्ने असति ज्योतिषा पञ्चसङ्ख्यापूरणम् । यत एतत्पूर्वं पठितमन्त्रे तद्देवा ज्योतिषां ज्योतिरित्युक्तमतस्तेन ज्योतिषाऽत्र सङ्ख्यापूर्तिः । अत एतत्पञ्चजनमन्त्रस्यापि न साङ्ख्यमतमूलत्वमिति सिद्धम् ॥ १३ ॥

ननु, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति, तत्तेजोऽसृजतेति, एतस्माज्जायते प्राण इति, इदं सर्वमसृजतेत्यादौ क्वचिदाकाशादिकायाः क्वचित्तेजआदिकायाः क्वचित् प्राणादिकायाः क्वचिदक्रमिकायाः सृष्टेः प्रतिपादनाद् वस्तुनो द्वैरूप्यासम्भवेन सृष्टिप्रतिपादकश्रुतिवाक्यानां परस्परं विगानदर्शनात् तेषां ब्रह्मोपासनविधिस्तावकत्वेनार्थवादत्वान्न तैर्ब्रह्मणो जगत्कारणत्वं सिद्ध्यति । कि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्तु दृश्यमानजगतः कारणविचारेऽनेकेषु स्मार्तमतेषु कापिलमतस्याऽभ्यर्हितत्वेन तदुक्तप्रकारेणैव कार्यकारणविचार उचित इति प्राप्ते, उच्यते ।

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

सृष्टिभेदेषु ब्रह्मणः कारणत्वे न विप्रतिपत्तिरस्ति । कुतः ? यथा व्यपदिष्टस्य एकत्राकाशादिषु कारणत्वेनोक्तस्यान्यत्रापि तस्यैव कारणत्वेनोक्तेः । अतः कार्यप्रकाराणामनेकत्वेऽपि सर्वत्र कारणत्वेन ब्रह्मण एवोक्तेः कारणत्वे विगानं नास्तीत्यर्थः । कार्यप्रकारेषु भेदेन निरूपणं तु ब्रह्मणो माहात्म्याय । अनेकप्रकारेण जगत्कर्तृत्वबोधनात् । अत एव, न तस्य कार्यं करणं च विद्यत इत्यादिभिर्लौकिककर्तृत्वनिराकरणम् । अतः श्रुतिषु परस्परं विरोधाभावात् तदुक्तप्रकारेण ब्रह्मण एव कारणत्वं युक्तं, नतु कापिलस्मृत्यभिमतप्रकृतेरिति सिद्धम् ॥ १४ ॥

ननु कार्योत्पत्तिप्रकारभेदानां ब्रह्मणो माहात्म्यबोधकत्वात् तन्निरूपकश्रुतीनां परस्परं विगानाभावेऽपि कारणनिरूपिकाणाम्, असद् वा इदमग्र आसीत्, सदेव सौम्येदमग्र आसीत्, तद्धैक आहुरसदेवेदमग्र आसीत्, अव्याकृतमासीत्, नासदासीन्नो सदासीत् तम आसीदित्यादीनां श्रुतीनाम् असदादीनां कारणत्वेन प्रतिपादकत्वाद् ब्रह्मणः कारणत्वे विगानमस्तीति प्रकारान्तरेणाशङ्क्य परिहरति ।

## समाकर्षात् ॥ १५ ॥

आकृष्यते स्वस्थानात् प्रच्याव्यत इत्याकर्षः । एतेषां जगत्कारणप्रतिपादकानाम् असदादिपदानां लोकप्रसिद्धार्थात् समाकृष्य ब्रह्मपरत्वं कल्प्यते । यथाऽनेकविरुद्धधर्माश्रयत्वं ब्रह्मणस्तथाऽनेकशब्दवाच्यत्वमपि । ब्रह्मणोऽनभिव्यक्तत्वाद् असत्तमइत्यादिशब्दवाच्यत्वम् । एवंरीत्यैकवाक्यत्वसम्भवादन्यार्थकरणमबोधविजृम्भितम् । अतः शब्दवैलक्षण्येऽपि श्रुतीनामेकार्थत्वान्न विप्रतिषेध इति सिद्धम् ॥ १५ ॥

कौषीतकिब्राह्मणोपनिषदि बालाक्यजातशत्रुसंवादे, कैष एत-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दृ बालाके पुरुषोऽशयिष्टेत्यादौ जीवं प्रक्रम्य तस्मात् सर्वोत्पत्तिर्निरूपिता । तत्र ब्रह्मणोऽनुप्रवेशश्चोक्तः । तत्र ब्रह्मसहितो जीव एव कर्ता ब्रह्मैव वेति संशयेऽस्मिन् प्रकरणे ब्रह्मोपक्रमस्य जीवपर्यवसानोक्त्या ब्रह्मत्वेनोक्तो जीव एव कर्ता भवितुमर्हति । ब्रह्मत्वादयोऽपि जीवस्यैव धर्मा राजत्वादिवत् । एवञ्च लोके जीवस्य कर्तृत्वं दृश्यमानं साहजिकमेव । तथाच जीवस्याणुत्वात् स्वतः कर्तृत्वासम्भवेन प्रकृतिद्वारकमेव कापिलमतोक्तरीत्या भविष्यतीति प्राप्ते प्रोच्यते ।

## जगद्वाचित्वात् ॥ १६ ॥

एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्मेत्येतत्प्रकरणोपक्रमवाक्ये जीववाचकपुरुषपदोक्त्या जीवकर्तृत्वं निरूप्य यस्य चैतत्कर्मेत्यत्र, एतच्छब्दस्य जगद्वाचित्वात् तत्कर्तृत्वमत्रोच्यते । एवं च जीवजडात्मकस्य जगतो ब्रह्मकर्तृकत्वमन्यत्रोक्तमत्रापि तदेवोच्यत इति भगवानेव जगत्कर्ता, न जीवः । तस्य जगत्कर्तृत्वस्यान्यत्राश्रुतत्वादश्रुतकल्पनापत्तेः । सुषुप्तावपि ब्रह्मण्येव जीवस्य लयस्तत एव सर्वमिति ज्ञेयम् । प्राणादिशब्दवाच्यत्वं ब्रह्मणि पूर्वं साधितमेव । अतो न जीवो, नापि तदधिष्ठिता प्रकृतिर्जगत्कारणं, किन्तु ब्रह्मैव॥१६॥

नन्वत्र क्वैष एतद् बालाके पुरुषोऽशयिष्टेति जीवं प्रक्रम्य तस्य शयनोत्थानादिधर्मानुक्त्वा ब्रह्मत्वं जगत्कर्तृत्वं चोच्यते । तज्जीवे स्वतोऽसम्भवात् प्रकृतिद्वारकं भविष्यति । अथवा प्राण एवैकधा भवतीति मुख्यप्राणलिङ्गमप्यन्यत्र दृश्यते । सुषुप्तौ तस्यैव वृत्तेरुपलम्भात् तस्यैव विद्यमानत्वात् तत एवोत्पत्तिप्रलयौ । तस्य च प्रकृत्यंशत्वेन जडात् प्रधानादेव सृष्टिरुक्ता भवति । अतोऽस्मिन् प्रकरणे जीवात् प्राणाद्वा सृष्टिरुक्तेति न ब्रह्मणो जगत्कारणत्वमिति सूत्रेणाशङ्क्य परिहरति ।

## जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॥ १७ ॥

जीवप्राणयोः कर्तृत्वकथनं तु जीवस्य ब्रह्माश्रितत्वात् प्राणस्य ब्रह्मयोगादुक्तं, नतु तयोः स्वातन्त्र्येण जगत्कर्तृत्वं सम्भवतीति व्याख्यातं पूर्वमेव 'आश्रितत्वादिह तद्योगाद्' इति सूत्रेण । जीवस्य ब्रह्माश्रितत्वान्मुख्यप्राणस्य ब्रह्मणा सह योगाद् ब्रह्मकार्यमेव तयो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निरूपितं, नतु तयोः स्वातन्त्र्येण कार्यकर्तृत्वमस्तीत्यर्थः । अतः सर्वं कार्यं ब्रह्मण एव, नान्यत इति निरूपणादस्मादपि वाक्याद् ब्रह्मकारणत्वमेव निरूपितं जगतो, न प्रकृतिकारणत्वमिति सिद्धम् ॥ १७ ॥

स्वमतेन जीवमुख्यप्राणलिङ्गसमाधानमुक्त्वा जैमिनिमतेनाऽपि परिहारमाह ।

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

स्वापप्रतिबोधौ जीवधर्मावेव । चक्षुरादिलयाश्रयत्वं प्राणधर्म एव । नैतौ ब्रह्मणि सम्भवत इति नियतधर्मवादी जैमिनिस्तयोर्धर्मयोः कीर्तनमस्मिन् प्रकरणेऽन्यार्थमिति वदति । जीवप्राणयोर्ब्रह्मभेदे ब्रह्मनिरूपणे तन्निराकरणावश्यकत्वज्ञापनार्थं तुः । सुषुप्तौ पश्चाज्जीवलयोद्गमनिरूपणवैलक्षण्येन ब्रह्मणो ज्ञानार्थं सुषुप्त्यवस्थायां मृतिवैलक्षण्यबोधनार्थं यत् प्राणनिरूपणं तदपि तदाश्रयब्रह्मज्ञानार्थमित्यन्यार्थं जीवमुख्यप्राणधर्मकीर्तनमित्यर्थः । यो वै बालाके एषां पुरुषाणां कर्तेत्युपक्रमे मुख्यतया ब्रह्मैव निर्दिष्टम् । उपसंहारे तु तज्ज्ञानेनासुरजयः सर्वभूतश्रैष्ठ्यं स्वाराज्यमाधिपत्यं चेति फलमुक्तम् । नह्येतद् ब्रह्मज्ञानं विनाऽन्येन सम्भवति । अत उपक्रमोपसंहाराभ्यामेवावगम्यते, यदस्मिन् प्रकरणे मुख्यं ब्रह्मैव प्रतिपाद्यमिति । अपिच प्रश्नव्याख्यानाभ्यामपि ब्रह्मपरत्वं प्रकरणस्य ज्ञायते। क्वैष एतद् बालाके पुरुषोऽशयिष्टेति प्रश्नो जीवस्य ज्ञातत्वादधिकरणात्मकब्रह्मविषयक एव । यत्रैष एतद् बालाके पुरुषोऽशयिष्टेतिव्याख्यानमपि ब्रह्मपरमेव । ननु नाडीष्वपि सुप्तिसम्भवात् कथं ज्ञातव्यं नाडीव्यतिरिक्त आत्मैवात्र प्रतिपाद्यत इत्याशङ्क्य तत्र प्रमाणमुपन्यस्यति । एवमेके शाखिनो वाजसनेयिनः स्पष्टमधीयते । दृप्तबालाकिब्राह्मणे, सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इति । अत्राकाशशब्देन ब्रह्मोक्तम् । सता सौम्य तदा सम्पन्नो भवति । स्वमपीतो भवतीति चेत्यन्यत्रापि तथैवोक्तम् । अतोऽत्र जीवमुख्यप्राणलिङ्गानामाधारभूतब्रह्मज्ञाना-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थत्वान्न तेन प्रकृतिकारणवादः सिद्ध्यतीति ब्रह्मैव जगत्कारणमिति सिद्धम् ॥ १८ ॥

वाक्यान्तरे जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य परिहरति । बृहदारण्यके चतुर्थे षष्ठे चाध्याये याज्ञवल्क्यमैत्रेयीसंवादे यदेवाऽमृतत्वकरणं तदेव मे ब्रूहीति मैत्रेय्या पृष्टो याज्ञवल्क्यस्तां स्तुत्वा ज्ञानमुपदिदेश। तत्र प्रकरणी जीवो ब्रह्म वेति विशये, आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यादिनाऽऽदिमध्यावसानेषु जीवनिरूपणदर्शनाज्जीव एवात्र प्रकरणी विज्ञायते । तस्यैवोत्कर्षार्थं ब्रह्मत्वं जगत्कर्तृत्वं चोच्यते । नतु ततोऽतिरिक्तं ब्रह्म वक्तुं युक्तम्। अतो वेदे सृष्टिनिरूपकवाक्यानामेतन्न्यायेनान्यपरत्वान्न ब्रह्मणो जगत्कारणत्वप्रतिपादने तात्पर्यमिति सांख्याभिमतः प्रकृतिकारणवाद एवास्त्विति प्राप्ते, उच्यते ।

## वाक्यान्वयात् ॥ १९ ॥

एतद्वाक्यस्य ब्रह्मण्येवान्वयान्न जीवस्य प्रकरणित्वं सम्भवतीत्यर्थः । भगवत्सम्बन्धेनैव सर्वस्य जीवस्य च प्रियत्वम् । तस्यैवानन्दमयत्वात् । तमेव विदित्वाऽतिमृत्युमेति, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, सर्व एवात्मानो व्युच्चरन्ति, एष ह्येवानन्दयातीत्यादिश्रुतिभिर्निःसन्दिग्धं ब्रह्मणः स्वरूपं तत्कार्यं तदंशा जीवाश्च निरूपिता इतीदं वाक्यमपि तैः सहैकार्थं युक्तम् । नत्वस्य भिन्नरीत्या जीवनिरूपणपरत्वम् । एवञ्च सर्ववेदान्तानामविरुद्धार्थप्रतिपादकत्वं भवति । तथाच वाक्यान्वयादिदमपि वाक्यं ब्रह्मपरमेव, नतु जीवपरमिति, न प्रकृतिकारणवादशङ्कावकाशः ॥ १९ ॥

जीवधर्मा जीव एव नियता, न ब्रह्मणि सम्भवन्तीति य एकदेशिनो मन्यन्ते, तेषां मतेन प्रकृते सिद्धान्तकथनार्थं तन्मतान्यनुवर्तते ।

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

भगवता स्वस्य लौकिकभोगासिद्ध्यर्थं यः स्वांशो विस्फुलिङ्गवत् पृथक्कृतः स जीव इत्याश्मरथ्यमतेन जीवोपक्रमाज्जीवस्यैवेदं प्रकर-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



णमित्याशङ्कासमाधानमाह । प्रतिज्ञासिद्धेर्लिङ्गमिति । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा जीवस्य भगवदंशत्वेन तदभेदे सति सिद्ध्यति । तथाच तस्याः प्रतिज्ञायाः सिद्धेरिदं लिङ्गं, यथा जीवो भगवदंशस्तथा जडोऽपीतिज्ञापकः । अतो जीवोपक्रमेऽपि न दोषः ॥ २० ॥

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

चैतन्यमात्रं जीवोऽनादिसिद्ध एव वासनया देहादिसङ्घाते प्रविष्टोऽतश्छिद्रूपे ब्रह्मणि चिन्मात्ररूपेण प्रवेशं तस्य मोक्ष इत्यौडुलोमिमतेनापि जीवोपक्रमशङ्कासमाधानमाह । उत्क्रमिष्यत एवम्भावादिति । अत्र जीवमुपक्रम्य भगवतः श्रवणकीर्तनादिकं निरूपितम् । तत्संसारभावादुत्क्रमिष्यतो जीवस्य लिङ्गम्, मुक्तौ जीवो भगवानेव भविष्यतीतिज्ञापकम् । कुतः ? एवम्भावात, मैत्रेय्या एवाऽमृतीभावात् । सर्वेषां जीवानां ब्रह्मत्वेऽमृतत्वं सिद्धमेवेति तदर्थं ज्ञानादिप्रयासवैयर्थ्यं स्यात् । अतो ज्ञानेन संसारादुत्क्रमिष्यतो जीवस्याऽमृत्वमिति ज्ञापनार्थं जीवोपक्रमः । अतो जीवो ब्रह्मभिन्न एवेति पक्षेऽपि न जीवोपक्रमे दोषः ॥ २१ ॥

भगवत आसक्त्यां विषयभोक्तृरूपं जीव इति काशकृत्स्नमते जीवोपक्रमसंशयवारणमाह ।

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

भगवत एवावस्थाविशेषो जीव इत्यवस्थितेर्लिङ्गाज्जीवोपक्रमः । अतः संसारदशायामपि जीवो ब्रह्मैवेति तेनोपक्रम्य भगवच्छ्रवणादिविधानेऽपि न दोषः । अतो न मैत्रेयीब्राह्मणेनापि, जीवद्वारा प्रकृतिः कारणमिति सांख्यमतसिद्धिरिति सिद्धम् ॥ २२ ॥

ननु श्रुत्युक्तकारणत्वाद् ब्रह्मणो निमित्तकारणत्वमस्तु, समवायिकारणं तु प्रकृतिरेव कार्यानुरूपत्वात् । समवायिनिर्मित्तकारणयोर्भेदोऽवश्यं युक्तः । अतो ब्रह्मवादेऽपि सांख्यस्मृत्यभिमता प्रकृतिः समवायिकारणत्वार्थमपेक्षितैवेत्यर्द्धजरतीयन्यायेन ब्रह्मकारणत्वमुपनिषदुक्तं, प्रकृतिकारणत्वं स्मृतिसिद्धमुभयमप्यस्त्वित्याशङ्क्याह ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतिः समवायिकारणं, चकारान्निमित्तकारणं च ब्रह्मैव। कुतः ? येनाश्रुतं श्रुतं भवतीत्यादिः प्रतिज्ञा । यथैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिर्दृष्टान्तः । तयोरनुपरोधाद् अबाधादित्यर्थः । तद्यदि ब्रह्मैव सर्वसमवायिकारणं स्यात् तर्हि तज्ज्ञानेन सर्वं ज्ञातं भवति, नान्यथा । अतो न प्रकृतिर्जगत्समवायिकारणं, किन्तु ब्रह्मैव ॥ २३ ॥

अत्रैव हेत्वन्तरमाह ।

## अभिध्योपदेशाच्च ॥ २४ ॥

सोऽकामयत बहुस्यां प्रजायेयेत्यभिध्यानस्योपदेशाद् ब्रह्मैव जगत्समवायिकारणं श्रुत्यभिमतम् । जडायाः प्रकृतेरभिध्यानासम्भवात् । चकारेणेदं सर्वं यदयमात्मेतिश्रुत्युक्तं जगतो ब्रह्मत्वं ब्रह्मण एव समवायित्वे भवति, नान्यस्य समवायित्वे । यद्वा, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यादौ सर्वस्य ब्रह्मत्वेनोपासनोपदेशो ब्रह्मणः सर्वसमवायित्वे युक्त इति । चकारेणैकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमिति स्मृतिः परिगृहीता ॥ २४ ॥

किञ्च ।

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्तीति श्रुत्या, चकाराद्, अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति स्मृत्या च साक्षादेवोभयोर्ब्रह्मणः सकाशाद् ब्रह्मण्येव च सृष्टिप्रलययोरेवाम्नानात् कथनादित्यर्थः । न हीदं ब्रह्मणो निमित्तकारणत्वे सम्भवति । अतो ब्रह्मैव समवायिकारणम् ॥ २५ ॥

ननु, स एव सर्वं सृजति स एवावति हन्ति चेति श्रुतौ ब्रह्मणो निमित्तकारणत्वमात्रप्रतीतेराकाशादेव समुत्पद्यन्त इति वाक्यस्यौपचारिकत्वेनाप्युपपत्तेः प्रकृतिसमवायिकारणवाद एव युक्त इत्याशङ्क्य परिहरति ।

## आत्मकृतेः परिणामात् ॥ २६ ॥

तदात्मानं स्वयमकुरुतेति श्रुतावात्मनः स्वस्यैव कृतेः करणाद् ब्रह्मैव जगत्कारणमुक्तमिति । आत्मकृतिः कथं सम्भवतीत्याश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्क्य तत्रोपपत्तिमाह । कार्याकारेण ब्रह्मणः परिणामात् । ब्रह्मणः सर्वभवनसमर्थत्वादविकृतमेव सुवर्णादिवत् कार्यरूपेण परिणामसम्भवात् । अतो जगतो ब्रह्माविकृतपरिणामरूपकार्यत्वाद् ब्रह्मैव समवायिकारणमिति सिद्धम् ॥ २६ ॥

ननु जडानां ब्रह्मकारणकत्वेऽपि चेतनेषु मनुष्यादिषु योनिबीजयोः समवायिकारणत्वदर्शनाज्जीवानां योन्यात्मकप्रकृतेः कारणत्वमस्त्वित्याशङ्क्य परिहरति ।

## योनिश्च हि गीयते ॥ २७ ॥

जगतो योनिश्च ब्रह्मैव । चकाराच्छाक्तवादनिरासः । अत्र युक्तिश्रुती प्रमाणमित्याह । हि गीयते । सदेव सौम्येदमग्र आसीद्, एकमेवाद्वितीयमित्यादिश्रुतिषु सृष्टेः पूर्वमेकमेवोक्तम् । आकाशादेव समुत्पद्यन्ते, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादिष्वेवकारेणैकमेव ब्रह्म जगत्कारणमुक्तमिति युक्तिः । गीयते च ब्रह्मणो योनित्वं, कर्तारमीशं पुरुषं ब्रह्मयोनिं, यद्भूतयोनिं परिपश्यन्ति धीरा इत्यादिश्रुतिषु, मम योनिर्महद् ब्रह्म, तासां ब्रह्म महद्योनिरहं बीजप्रदः पितेत्यादिस्मृतिषु च । अतो ब्रह्मैव जगतो योनिर्बीजं पुरुषो जीवश्चेति, इदं सर्वं यदयमात्मेतिश्रुत्युक्तं भगवतः सर्वरूपत्वं सिद्धम । अतो ब्रह्मवादे केनाप्यंशेन प्रकृतिप्रवेशाभावात् साङ्ख्यमतमशब्दमितिसिद्धम् ॥ २७ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

एतेन ब्रह्मणो जगत्कारणत्वस्थापनेन ब्रह्मवादे स्थापिते साङ्ख्यमते निराकृते च सति सर्वे पातञ्जलादिवादा व्याख्याताः। अवैदिका अनुपयुक्तास्ते वादाः । अतस्ते नादर्तव्या इत्यर्थः । वैदिकानां वेदानुसारेण वस्तुविचारः कर्तव्यः । तद्विरुद्धवादानामप्रामाण्याद् ब्रह्मवादे न कोऽपि शङ्कावकाश इति सर्वं सुस्थम् । अत एवाग्रिमाध्याये विस्तरेण मतान्तराणि निराकरिष्यन्ते । अध्यायसमाप्तिसूचिका सूत्रैकदेशावृत्तिः ॥ २८ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां प्रथमाध्यायस्य

चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं प्रथमोऽध्यायः ॥ १ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अथ द्वितीयाध्यायस्य प्रथमः पादः ।

प्रथमाध्याये वेदान्तवाक्यानां सन्दिग्धानां ब्रह्मपरत्वेन समन्वयो निरूपितः । अतः परं स्मृतिविप्रतिषेधनिराकरणाय द्वितीयाध्याय आरभ्यते

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

ननु कपिलादिमहर्षिकृतसाङ्ख्यस्मृतौ प्रधानस्यैव जगत्कारणत्वमुक्तम् । सा तु मोक्षैकोपयोगित्वेन धर्माद्युपयोगिमन्वादिस्मृतिभ्योऽन्तरङ्गा जगत्कारणनिर्णये । तन्नाप्यनिर्णायकत्वाङ्गीकारे वैयर्थ्यापत्तेः । अतो न ब्रह्म जगत्कारणमिति चेन्न । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेत्यादिशुद्धब्रह्मकारणताबोधकस्मृत्यन्तरानवकाशान्न तथाङ्गीकर्तव्यमित्यर्थः ॥ १ ॥

### इतरेषां चानुपलब्धेः ॥ २ ॥

प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलब्धेर्न साङ्ख्यमतमङ्गीकर्तव्यम् ॥ २ ॥

### एतेन योगः प्रत्युक्तः ॥ ३ ॥

साङ्ख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता ज्ञेया । योगशास्त्रस्य वैदिकत्वशङ्कया तन्निराकरणार्थं पृथक् सूत्रारम्भः ॥३॥

### न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

ननु जगतो विलक्षणत्वादचेतनत्वाच्चेतनं न कारणम् । विलक्षणत्वं च विज्ञातं चाविज्ञातं चेति श्रुतिवाक्याज्ज्ञेयम् । अतोऽचेतना प्रकृतिरेव कारणत्वेनाङ्गीकर्त्तव्या ॥ ४ ॥

ननु नास्य जगतः श्रुतिवाक्यादचेतनत्वं वक्तुं युक्तम् । मृदब्रवीत्, आपोऽब्रुवन्, तत्तेज ऐक्षतेत्यादिश्रुतौ भूतेन्द्रियाणां चेतनत्वोक्तेरित्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्दः पक्षव्यावर्तकः । तत्तदभिमानिदेवतानामेव चेतनत्वेन व्यपदेशः । कुतः ? विज्ञातं चाविज्ञातं चेति तत्रैव चेतनाचेतनविशेषकथनात् । अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादौ चेतनानामग्न्यादिदेवतानामचेतनानुगतिनिरूपणाच्च । तथाच, न जगतश्चेतनत्वमित्यर्थः ॥ ५ ॥

अतोऽचेतना प्रकृतिरेव जगत्कारणं, नतु चेतनं ब्रह्मेति प्राप्ते, उच्यते ।

## दृश्यते तु ॥ ६ ॥

तुः पक्षव्यावर्तनार्थः । लौकिके केशगोमयवृश्चिकादौ कार्यकारणयोर्वैरूप्यं दृश्यते । तथापि कश्चित् कारणांशोऽनुवर्तत एवेति चेत्, प्रकृतेऽपि ब्रह्मसत्तायाः सर्वत्रानुवृत्तिर्दृश्यत एव । अतो वैलक्षण्यानुरोधान्न ब्रह्मकारणत्वं दूषणीयमिति ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

ननु श्रुतौ जगत्कारणत्वेनासदुक्तमितिचेन्न । इदं वचनं प्रतिषेधमात्रार्थम् । अग्रे कथमसतः सज्जायेतेति कथनात् ॥ ७ ॥

शङ्कते ।

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

कार्यस्य कारणे लये कार्यस्य स्थौल्यसावयवत्वपरिच्छिन्नत्वाशुद्धत्वादिधर्मैः कारणस्यापि तद्धर्मवत्त्वप्रसङ्गादसमञ्जसं ब्रह्मकारणवचनमिति प्राप्ते ॥ ८ ॥

परिहरति ।

## न तु दृष्टान्तभावात् ॥ ९ ॥

ब्रह्मकारणवादे न किञ्चिदसामञ्जस्यमस्तीति तुशब्दः । स्वपक्षस्थापनपरपक्षनिराकरणयुक्तीनां सत्त्वात् । तत उत्पन्नस्य तत्रैव लये कारणे तद्धर्मसम्बन्धो न भवति । शरावरुचकादीनां मृदिलये-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऽपि मृदस्तद्धर्मवत्त्वादर्शनात् । अतो दृष्टान्ताभावान्नास्मन्मते दूषणलेशो ऽपि ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

एत एव दोषाः प्रतिवादिपक्षे दुष्परिहराः । निर्विशेषात् प्रधानात् सविशेषकार्योत्पत्तिर्लये तद्धर्मसम्बन्धप्रसक्तिरसत्कार्यवादाङ्गीकार एवमादिदोषाणां प्रतिवादिपक्षे सम्भवान्नेदं मतं समीचीनमित्यर्थः ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

किञ्च, वेदार्थे केवलतर्केण विचारो न युक्तः । तर्कस्याप्रतिष्ठानात् । तर्को हि स्वोत्प्रेक्षिता युक्तिः । सैकेनोक्ता नान्यैरङ्गीक्रियते । ऋषीणां स्वातन्त्र्येण बुद्धिवैलक्षण्यसम्भवाद्, वस्तुनि विकल्पासम्भवान्नियामकस्यैकस्याभावाच्च । अतो न तर्कस्य प्रतिष्ठा । अत्र पूर्वपक्षी परिहरति । अप्यन्यथानुमेयमिति चेद् । एवमपि सति वयमन्यथानुमिमीमहे, तर्के नाप्रतिष्ठादोषो भविष्यति । प्रतिष्ठितः कोऽपि तर्को नास्तीति तु न वक्तुं शक्यम् । सकलव्यवहारबाधापत्तेः । आर्षं धर्मोपदेशं चेति स्मृतेश्च । अतः सदोषतर्कं परित्यज्य निरवद्यतर्केण निर्णयो भविष्यतीति चेद् । एवमपि श्रुत्यनुसारिणां ब्रह्मवादिनां निरवद्यतर्कसद्भावेऽपि प्रकृतिकारणवादिनस्तर्कस्य दोषाविमोक्षप्रसङ्गः । नियामकप्रमाणाभावाद् ऋषीणां परस्परं वैमत्यसम्भवाच्च । अतस्तर्कमूलकसाङ्ख्यमतानुसारेण प्रकृतेर्जगत्कारणत्वं नाङ्गीकर्तव्यमितिभावः ॥ ११ ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एतेन साङ्ख्यमतनिराकरणेन शिष्टापरिग्रहा अणुमायाकारणवादा ये सर्वथा शिष्टैर्न परिगृहीतास्ते निरस्ता ज्ञातव्याः ॥१२॥

एवं ब्रह्मणो जगत्कारणत्वे स्मृतिविरोधं परिहृत्य दोषान्तरमाशङ्क्य परिहरति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

ननु निर्विशेषस्य ब्रह्मणो जगत्कारणत्वे भोक्तुर्भोग्यत्वं, भोग्यस्य च भोक्तृत्वं प्राप्नोति । अत एकस्यैव भोक्तृभोग्यविभागो न संभवतीति चेत्, स्याल्लोकवत् । लोके यथा कटककुण्डलादीनां सुवर्णकार्यत्वेन सुवर्णाभेदेऽपि, न कटकस्य कुण्डलत्वमेवमेव, न भोग्यस्य भोक्तृत्वम् । तथाच कार्याणां कारणात्मकत्वेऽपि परस्परं कार्यात्मकत्वाभावान्नोक्तदोषः ॥ १३ ॥

ब्रह्मकारणवादे श्रुतिविरोधं परिहरति ।

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

ननु, वाचारम्भणं विकार इति श्रुत्या घटपटादिविकाराणां वाङ्मात्रारब्धत्वेन वस्तुतोऽभावात् कस्य ब्रह्म कारणं स्यादित्याशङ्क्य वाचारम्भणश्रुतेरर्थमाह । आरम्भणशब्दादिभ्यः कार्यस्य कारणानन्यत्वमुच्यते, नतु मिथ्यात्वमिति ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

भाव एव विद्यमान एव घटे घटोपलब्धिर्नत्वभावे । वाङ्मात्रारब्धत्वे तु मिथ्यैवात्र घटोऽस्तीत्युक्ते घट उपलभ्येत । चकारेण, मृत्तिकेत्येव सत्यमिति श्रुतिरपि सत्यत्वप्रतिपादिका संगृहीता । अतो घटादिकार्याणां सत्यत्वाद् वाचारम्भणश्रुतिः कारणानन्यत्वमेव प्रतिपादयतीत्यर्थः ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

अवरस्य प्रपञ्चस्य सत्त्वात् । यदिदं किञ्च तत्सत्यमित्याचक्षते, सदेव सौम्येदमग्र आसीदित्यादिश्रुतिभ्यस्त्रैकालिकत्वाद् ब्रह्मत्वं, नतु मिथ्यात्वम् ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु, असद्वा इदमग्र आसीदिति श्रुत्या पूर्वं कार्यस्यासत्त्वमुच्यत इति चेन्न । अव्याकृतत्वरूपधर्मान्तरेण तथा व्यपदेशः, तदात्मानं स्वयमकुरुतेतिवाक्यशेषाज्ज्ञातव्यः । तत्र हि स्वस्यैव क्रियमाणत्वमुक्तम् ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

समवेतमेव कार्यं सद् उत्पाद्यत इति युक्तम् । समवायात्मकसम्बन्धस्य द्विनिष्ठत्वेन नित्यत्वेन च कार्यस्यापि कारणे स्थितिरव्यक्तरूपेण सर्वदाङ्गीकर्तव्या । कुलालादीनां प्रवृत्तिस्त्वभिव्यक्त्यर्था। शब्दान्तरं तु, सच्छब्दात्, तदात्मानं स्वयमकुरुतेत्यात्मशब्दः । अतो घटादिकार्यस्य सत्यत्वमेव युक्तं, न मिथ्यात्वम् ॥ १८ ॥

नन्वेवं घटादीनां नित्यत्वे प्रलयकालेऽप्युपलब्धिः स्यादित्याशङ्क्याह ।

## पटवच्च ॥ १९ ॥

यथा संवेष्टितः पटो न व्यक्तं गृह्यते, विस्तृतस्तु सम्यग्गृह्यते । तथाऽऽविर्भावानाविर्भावेण जगतोऽपि ग्रहणाग्रहणे ज्ञेये ॥ १९ ॥

## यथा च प्राणादिः ॥ २० ॥

यथा प्राणापानानां नियमने जीवनमात्रं सम्पद्यते । अनियमने त्वाकुञ्चनादिकमपि । नैतावता प्राणभेदो वक्तुं युक्तः । तथा जगतोऽपि पूर्वमसत्त्वं न वक्तुं शक्यम् । ज्ञानक्रियाभेदात् सूत्रद्वयमुक्तम् ॥ २० ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

नन्वनेन जीवेनात्मनानुप्रविश्येत्यादिश्रुतिभिरितरस्य जीवस्यापि ब्रह्मत्वेन व्यपदेशाद् ब्रह्मणो जगत्कारणत्वे तद्धिताकरणदोषप्रसक्तिः । जीवहिताकरणं तु जीवानां दुःखदर्शनाज्ज्ञायत इति प्राप्ते ॥ २१ ॥

उच्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

पूर्वपक्षव्यावर्तकस्तुशब्दः । यदि ब्रह्म तावदेव स्यात्तदाऽयं दोषः । तत्तु जीवाज्जडाच्चाधिकम् । आत्मा द्रष्टव्य इत्यादिवाक्येषु कर्मकर्तृभावेन भेदेन निर्देशाद् विज्ञानमय आनन्दमय इति भेदनिर्देशाद्वा । अतोऽधिकस्य नियमेनांशहितकरणादर्शनादंशभूतजीवानां दुःखादिदर्शनेऽपि न ब्रह्मणो जगत्कारणत्वे दोषः ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा हीरमाणिक्यपाषाणादीनां पलाशचम्पकचन्दनानां पार्थिवत्वाविशेषेऽप्युच्चनीचत्वं दृश्यते । तथा जीवमात्रस्य ब्रह्मांशत्वेऽपि ब्रह्मादिस्थावरान्तानामुच्चनीचत्वं कार्यवैलक्षण्यं चोपपद्यते ॥ २३ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

ननु लोके कुलालादीनां घटादिकार्यकरणे चक्रादिसाधनान्तरोपसंहारदर्शनान्न केवलस्य ब्रह्मणो जगत्कारणत्वमुपपद्यत इति चेन्न । क्षीरवद्धि । यथा दुग्धं साधनान्तरमनपेक्ष्यैव दधि भवति तथा ब्रह्मापि साधनान्तरनिरपेक्षं जगद्रूपं भवतीत्यर्थः ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

स्वतो भिन्नकार्यकरणे दृष्टान्तः । यथा देवर्षिपितरो बाह्यनिरपेक्षा एव योगसामर्थ्यात् सर्वं कुर्वन्ति । तथा ब्रह्मापि साधनान्तरनिरपेक्षमेव सर्वं करोति ॥ २५ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

ननु ब्रह्म साधनान्तरनिरपेक्षमेव स्वात्मानं जगत् कुर्यात् तदा कृत्स्नं ब्रह्मैकमेव कार्यं स्यात् । यद्यंशभेदेन जगद् भवति, तदा निष्कलं निष्क्रियं शान्तमिति निरवयवत्वश्रुतिविरोधः । अतो न जगतो ब्रह्मकारणत्वं युक्तमिति प्राप्ते ॥ २६ ॥

उच्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुः पक्षव्यावर्तकः । ब्रह्मणो जगत्कारणत्वं निरवयवत्वं चोभयमपि श्रूयते । श्रुतिसिद्धं च युक्त्या न बाधनीयम् । ब्रह्मणः शब्दमूलत्वाच्छब्दैकसमधिगम्यत्वात् । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति वाक्यात् । सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च ॥२७॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

ब्रह्मणो जगत्सृष्टौ देशकालसापेक्षतापि नास्ति । यत आत्मन्येव सर्वं सृजति । यतोऽस्य विचित्राः शक्तयः श्रूयन्ते । यद्वा, अनन्तरोऽबाह्य इतिश्रुत्यनुरोधाद् बाह्यसृष्टिं पूर्वं निरूप्यान्तरसृष्टिं निरूपयति । आत्मनीति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

प्रधानवादिनः स्वपक्षदोषा दुष्परिहराः । युक्तिविरोधात् । प्रमाणाभावेन तस्याचिन्त्यत्वकल्पनानुपपत्तेश्च ॥ २९ ॥

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सर्वशक्तिभिरुपेता युक्ता परा देवता ब्रह्मैव । चकारात् सत्यत्वादिगुणयुक्ता च । यः सर्वज्ञः सर्वशक्तिः सर्वकर्ता सर्वकाम इत्यादिश्रुतिषु तथा दर्शनात् ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

ननु लोके इन्द्रियवत एव कर्तृत्वदर्शनाद् ब्रह्मणो विकरणत्वान्निरिन्द्रियत्वान्न कर्तृत्वं सम्भवतीति चेद्, एतस्याः समाधानं पूर्वमेव, श्रुतेस्तु शब्दमूलत्वादितिसूत्रेणोक्तम् । अनवगाह्यमाहात्म्ये ब्रह्मणि श्रुतिरेव प्रमाणम् । न तु कुतर्कावकाशः ॥ ३१ ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

ननु प्रयोजनवतो लोके कर्तृत्वदर्शनाद् ब्रह्मण आप्तकामत्वेन

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रयोजनाभावान्न कर्तृत्वं सम्भवतीति प्राप्ते ॥ ३२ ॥

उच्यते ।

## लोकवत्तु लीला कैवल्यम् ॥ ३३ ॥

तुः पक्षव्यावृत्तौ । इयं हि लोकवल्लीला । न हि लीलायां किञ्चित् प्रयोजनं दृष्टम् । लीलाया एव स्वतः फलरूपत्वात् । सा लीला कैवल्यं मोक्षरूपैव । ब्रह्मणो लीलाया एवान्यस्य कीर्तने मोक्ष इत्यर्थः । यद्वा सा लीलैव केवला, नत्वस्याः प्रयोजनान्तरमित्यर्थः ॥३३॥

ननु जीवेषु सुखदुःखप्रलयकरणादर्शनादीश्वरो विषमो निर्घृणश्च स्यादित्याशङ्क्य परिहरति ।

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३४ ॥

ईश्वरस्य सुखदुःखदाने कर्मसापेक्षत्वान्नोक्तदोषः । यत, एष ह्येव साधु कर्म कारयति पुण्यो वै पुण्येन कर्मणेत्यादिश्रुतिस्तथा दर्शयति । कर्मसापेक्षतया करणेऽपीश्वरत्वं न विरुद्ध्यते । विरुद्धधर्माश्रयत्वादिति माहात्म्यम् । वस्तुतस्तु वादिबोधनायैतदुक्तम् । आत्मसृष्टेर्वैषम्यनैर्घृण्यसम्भावनैवात्र नावतरति ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

ननु कर्म न सम्भवति, अविभागात् पूर्वं कार्याणां विभागाभावादतः कथं कर्मसापेक्षमीश्वरस्य सुखादिदानमितिचेन्न । बीजाङ्कुरवत् प्रवाहस्यानादित्वात् । अतो न कर्मणामभाव इति भावः ॥३५॥

प्रवाहानादित्वे प्रमाणमाह ।

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

प्रवाहस्यानादित्वमुपपद्यते । अन्यथा जीवानामभावे कस्य संसारः स्यात् । कृतहानाकृताभ्यागमश्च स्यात् । अतो नियमार्थं कर्मणां प्रवाहस्यानादित्वमङ्गीकार्यम् । श्रुतिस्मृत्योरुपलभ्यते च प्रवहास्यानादित्वम् । अनेन जीवेनात्मनानुप्रविश्येति श्रुतौ सर्गादौ जीवप-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दप्रयोगात् प्रवाहानादित्वं सूच्यते । तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवानिति स्मृतावपि तथोक्तम् ॥ ३६ ॥

एवमखिलजगत्कारणत्वं ब्रह्मण उपपाद्योपसंहरति ।

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

वेदोक्ताः सर्वे धर्माः सर्वसमर्थत्वाद् ब्रह्मण्येवोपपद्यन्ते, न प्रधानादौ । अतस्तस्य जगत्कारणत्वं निष्प्रत्यूहमिति सिद्धम् ॥ ३७ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# द्वितीयाध्यायस्य द्वितीयः पादः ।

स्वातन्त्र्येणाखिलविरुद्धवादनिराकरणार्थं पादारम्भः । तत्र प्रथममनुपपत्त्या प्रकृतिकारणवादं निरस्यति ।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

भूर्भुवादिलोकानामचेतनेन प्रधानेन रचनाया अनुपपत्तेर्न प्रधानं जगत्कारणम् । अतो न जगत्कारणान्यथानुपपत्त्या तदनुमातव्यम् । सर्वशक्तिमता चेतनेन ब्रह्मणा जगत्कारणसम्भवादन्यथानुपपत्तिपरिक्षयाच्च ॥ १ ॥

## प्रवृत्तेश्च ॥ २ ॥

यदि प्रधानमेव जगत्कारणं तदा तत्तत्कार्यार्थं जीवानां प्रवृत्तिर्दृश्यमाना बाधिता स्यात् । सर्वस्यैव प्रधानपरिणामत्वात् । अतः प्रवृत्त्यन्यथानुपपत्त्या न प्रधानं जगत्कारणम् । यद्वा प्रधानस्य जडत्वाच्चेतनप्रेरणं विना तस्यैव प्रवृत्त्यसम्भवान्न प्रधानकारणवाद उपपद्यते ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

ननु यथा पयः स्वत एव विचित्रफेनरचनां करोति, यथा वा नद्यादिजलं स्वत एव स्पन्दते, तथा प्रधानप्रवृत्तिरपि स्वत एव भविष्यतीति चेन्न । तत्रापि पयसा विचित्रफेनरचनायां दोहनाधिश्रयणादौ चेतनप्रवृत्तिदर्शनाज्जलस्पन्दने वृष्टिकर्तृणां मेघानामेव चेतनानां सत्त्वादतोऽचेतनप्रधानप्रवृत्त्यसम्भवात् प्रधानकारणवादो न युक्तः ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

प्रधानस्यानपेक्षत्वाद् अन्यापेक्षाभावान्निरन्तरकार्यकरणमेव स्यान्न तु तद्व्यतिरेकेणावस्थितिः । पुरुषाधिष्ठानस्यापि सत्त्वात् । तथा सति मोक्षानुपपत्तिः ॥ ४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

ननु यथा तृणपल्लवजलानि स्वयमेव दुग्धादिभावेन परिणमन्ते तथा प्रधानपरिणामोऽपि युक्तोऽङ्गीकर्तुमितिचेद् अन्यत्र शृङ्गादौ वृषे च दुग्धात्मकपरिणामस्याभावान्न तथा नियमेन परिणामोऽङ्गीकर्तव्यः । चेतनक्रियाऽपि तत्र सहकारिणीति सूचनार्थं चकारः । अतो लोकदृष्टान्तासम्भवादचेतनं प्रधानं जगत्कारणत्वेन नाङ्गीकर्तव्यम् ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

यथाकथञ्चित् प्रधानस्य कारणत्वेऽङ्गीकृतेऽपि तस्य जडत्वेन प्रेक्ष्यकारित्वासम्भवान्न पुरुषार्थसिद्धिः ॥ ६ ॥

एवं केवलप्रधानस्य जगत्कारणत्वमिति मतं निरस्य पुरुषप्रेरितस्य तस्य कारणत्वं भविष्यतीत्याशङ्क्य परिहरति ।

## पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

यथा पङ्गुः पुरुषोऽन्धमारुह्य परस्परोपकाराय गच्छति । यथाऽयःकान्तः स्वसन्निधानमात्रेण लोहे क्रियामुत्पादयति । एवं पुरुषाधिष्ठितं तत्सन्निहितं वा प्रधानम् । तत्र प्रधानप्रेरकत्वं पुरुषस्य स्वतस्तदा प्रधानस्याप्रयोजकत्वं दोषः । यदि तत्प्रेरकत्वं प्रधानाधीनं तदा निरन्तरं कार्यकरणं स्यात् । प्रकृतिपुरुषयोर्नित्यसम्बन्धसत्त्वात् ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

यदि प्रकृतिपुरुषयोरङ्गाङ्गित्वं स्यात्, सम्भवेत् सा प्रक्रिया । तदेव तु न सम्भवति । पुरुषस्याङ्गित्वे ब्रह्मवादाङ्गीकार आपद्येत । मतहानिश्च स्यात् । प्रकृतेरङ्गित्वेऽनिर्मोक्षः ॥ ८ ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

ननु प्रकृतिरन्यथानुपपत्त्याऽनुमिता । तथा च तथैवानुमातव्या यथा सकलदोषाणां परिहारो भवतीति चेत् तथापि तस्या ज्ञश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्तिवियोगाज्ज्ञानशक्तेरभावान्नोक्तरीत्या दोषाणां परिहारः सम्भवतीत्यर्थः ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

साङ्ख्यमतानुवर्तिनां, केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिमिति न्यायेन परस्परं विगानादसमञ्जसमिदं दर्शनम्। वस्तुतस्तु जगत्कारणनिर्णयस्यालौकिकत्वाद्वेदानुसारेणैव स वक्तव्यो, न तु युक्त्याभासैरिति ॥ १० ॥

एवं सांख्यमतं निरस्यातः परं परमाणुकारणवादं निरस्यति।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

एवं हि नैयायिकानां प्रक्रिया। परमाणुद्वयं संयुज्य स्थूलकार्यार्थं प्रथमं द्व्यणुकं भवतीति। तत्र परमाणोरुपर्यधोभावेन मिलने तद्द्विगुणपरिमाणेन द्व्यणुकं महत् स्यात्। प्राक्पश्चाद्भावेन मिलने दीर्घवद् द्व्यणुकं स्यात्। यतः परमाणुपरिमाणं ह्रस्वं परितोमण्डलं चाङ्गीकृतम्। अनेन सूत्रेण तन्मतानुवाद उपहासार्थं कृतः ॥ ११ ॥

ततः किमत आह।

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

उभयथापि न द्व्यणुकं सम्भवति। परमाणुषु प्रदेशाभावेनोभयोः सङ्घटनाभावात् कल्पना मनोरथमात्रम्। यतः परमाणावसंयुक्तांशाभावेन परमाणुद्वयसम्बन्धे एक एव परमाणुः स्यात्। किञ्च, संयोगजकर्मापि न सम्भवति। कारणान्तरासम्भवात्। प्रयत्नवदात्मसंयोगेऽदृष्टवदात्मसंयोगे वा कारणत्वेनाभ्युपगम्यमाने पूर्वोक्त एव दोषः। प्रदेशाभावेन द्व्यणुकोत्पत्त्यसम्भवलक्षणः ॥१२॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

परमाणुद्व्यणुकयोः समवायोऽभ्युपगम्यते। स च नित्यो नित्यमेव सम्बन्धिनमपेक्षते। सम्बन्धस्योभयनिष्ठत्वात्। अतोऽपि न द्व्यणुकस्योत्पत्तिः सम्भवति। किञ्च समवायस्य सम्बन्धत्वेन संयोगतुल्यत्वात् तस्यापि सम्बन्धान्तरापेक्षा। एवं तत्सम्बन्धस्या-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पि सम्बन्धान्तरापेक्षा। एवं तत्सम्बन्धस्यापि सम्बन्धन्तरापेक्षाया- मनवस्था॥ १३॥

## नित्यमेव च भावात्॥ १४॥

परमाणूनां कारणान्तरस्य च नित्यमेव भावात् सत्त्वात् स- दैव द्व्यणुकादिकार्यं स्यात्॥ १४॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात्॥ १५॥

यद् रूपादिमत् तदनित्यमितिव्याप्त्यङ्गीकारात् परमाणोरपि रूपादिमत्त्वाद् विपर्ययोऽनित्यत्वं स्यात्। अपरमाणुत्वं च। नचेयं व्याप्तिः परमाण्वतिरिक्तविषयेति वाच्यम्। श्रुतिबलेन ब्रह्मणो जग- त्कारणत्वे सिद्धे तदर्थं परमाण्वङ्गीकारस्याप्रामाणिकत्वात्॥१५॥

## उभयथापि च दोषात्॥ १६॥

परमाणूनां रूपादिमत्त्वेऽनित्यत्वं दोषः। तेषां नीरूपत्वे कार्ये रूपानुपपत्तिर्दोषः॥ १६॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा॥ १७॥

वैदिकशिष्टानामपरिग्रहात् सर्वथानपेक्षाऽक्षपादीयदर्शने। अतस्तदुक्तं नादर्तव्यमिति भावः॥ १७॥

अतः परं बाह्यसमयं निराकरोति।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः॥ १८॥

एवं हि बाह्या मन्यन्ते। परमाणुसमूहात्मकः पृथिव्यादिभू- तसमुदाय एकः। रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकपञ्चस्कन्धस- मुदायोऽपरः। एतदुभयसमुदायसम्बन्धे जीवस्य संसारस्तस्यापगमे मोक्ष इति। तत्रोच्यते। एवमुभयहेतुकेऽपि समुदाये स्वीक्रियमाणे सर्वपदार्थानां क्षणिकत्वाज्जीवमात्रस्य क्षणिकत्वाद्वा जीवस्य तद- प्राप्तिः स्यात्। कुतस्तत्सम्बन्धे जीवस्य संसार इति भावः॥ १८॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्र-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## निमित्तत्वात् ॥ १९ ॥

एतेषां क्षणिकत्वेऽपि पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात् सन्ततेरेव जीवजडरूपत्वान्नोक्तदोष इति चेन्न । एतेषामुत्पत्तिमात्रे निमित्तत्वमङ्गीक्रियते, न तु समुदाये । अतः स्थैर्याभावेनानुसन्धानाभावात् समुदायानुपपत्तेश्च नोक्तदोषपरिहार इति भावः ॥ १९ ॥

किञ्च ।

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

अग्रिमस्योत्पत्तिरपि न सम्भवति । उत्पन्नो ह्युत्पादयति । उत्पत्तिक्षण एव तस्य नष्टत्वान्नोत्तरोत्पादकत्वं सम्भवति । एकक्षण एवोत्पत्तिस्थितिप्रलयकार्यकरणादिसर्वाङ्गीकारे विरोधात् किमपि न स्यात् ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

सर्वं क्षणिकमित्येका क्षणिकत्वप्रतिज्ञा । चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति द्वितीया प्रतिज्ञा । तत्र पदार्थस्य क्षणान्तरसम्बन्धस्वीकारे क्षणिकत्वप्रतिज्ञा हीयेत । तदनङ्गीकारे द्वितीया प्रतिज्ञा नश्यति । वस्तुनः क्षणान्तरसम्बन्धाभावेन चतुर्विधहेतुसमुदायासम्भवात् । हेतुसमुदायश्चेन्नाङ्गीक्रियते तदा नियामकाभावात् सर्वं सर्वतो युगपत् स्यात् ॥ २१ ॥

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

किञ्च, बुद्धिबोध्यं त्रयादन्यत्र संस्कृतं क्षणिकं च । त्रयं तु निरोधद्वयमाकाशं चेति बाह्याः कथयन्ति । तत्र निरोधद्वयाङ्गीकारं प्रत्याचष्टे । भावानां बुद्धिपूर्वको विनाशः प्रतिसंख्यानिरोधः । अबुद्धिपूर्वको नाशोऽप्रतिसङ्ख्यानिरोधः । एतन्निरोधद्वयमपि न प्राप्नोति । पदार्थानां सन्ततेरविच्छेदात् । भावानां च क्षणिकत्वेन नाशकसम्बन्धाभावात् प्रथमनिरोधोऽशक्यवचनः । द्वितीयनिरोधस्तु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदार्थानां क्षणिकत्वाङ्गीकारेणैवानुक्तसिद्धो विशेषतो वक्तव्यः ॥२२॥

## उभयथा च दोषात् ॥ २३ ॥

ते हि मन्यन्ते, प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधान्तर्गताविद्यानाशो मोक्ष इति । तत्राविद्यायाः सपरिकराया निर्हेतुकनाशे मोक्षसाधननिरूपकशास्त्रवैफल्यम् । अविद्यातत्कार्यातिरिक्तस्य पदार्थस्यानङ्गीकारात् सहेतुकविनाशोऽपि न सम्भवति । वन्ध्यापुत्रकृतरज्जुसर्पनाशवत् । अत उभयथा दोषान्नेदं मतं समीचीनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तैरुक्तं, प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधद्वयमावरणाभावात्मकमाकाशं चैतत्त्रयमपि निरुपाख्यमिति । तत्राकाशेऽपि पदार्थान्तरवद् वस्तुत्वव्यवहारस्याविशेषान्नायमभ्युपगमः समीचीनः ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

स एवायं घट इत्याद्यनुस्मरणदर्शनादनुभवस्मरणयोरेकाश्रयत्वादेकविषयकत्वनियमाच्च सर्वोऽपि क्षणिकवादो बाधितो मन्तव्यः ॥ २५ ॥

किञ्च, विनष्टाद् बीजादङ्कुरोत्पत्तिदर्शनान्नानुपमर्द्य प्रादुर्भावं वैनाशिका मन्यन्ते । तथा सत्यसतोऽलीकाज्जगदुत्पत्तिरिति प्राप्ते, उच्यते ।

## नासतोऽदृष्टत्वात् ॥ २६ ॥

असतो न कार्यमुत्पद्यते । शशशृङ्गादिभिरसद्भिः कार्योत्पत्तेरदृष्टत्वात् ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

अभावाद् भावोत्पत्तेरङ्गीकारे उदासीनानामपि क्षेत्रादिकमकुर्वतामपि धान्यादिसिद्धिः स्यात् । अभावस्य सुलभत्वात् ॥ २७ ॥

एवमसतः कारणत्वं निराकृत्य विज्ञानवादिसम्मतं प्रपञ्चस्यासत्यत्वं निराकरोति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## नाभाव उपलब्धेः ॥ २८ ॥

विज्ञानवादी हि विज्ञानमय एव प्रपञ्चो, न तु बाह्यः कश्चन पदार्थोऽस्तीति मनुते । तत्राह । अस्य बाह्यपदार्थजातस्याभावो नाङ्गीकर्तुं शक्यः । उपलब्धेः । बाह्यप्रपञ्चः सर्वोऽप्युपलभ्यते । यः पदार्थमुपलभन्नेव नोपलभ इति वदति स कथमाप्तः स्यात् ॥ २८ ॥

ननु यथा स्वाप्निकपदार्थ उपलभ्यते, नचासौ सत्य इति वक्तुं शक्यः कालान्तरे बाधात् । एवमसन्नेव बाह्यः पदार्थ उपलभ्यत इति नोपलब्धिमात्रेण वस्तुसत्त्वं वक्तुं शक्यमित्याह ।

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वाप्निकपदार्थानां स्वप्ने स्वप्नान्ते वाऽन्यथाभावोपलम्भान्न स्वाप्निकपदार्थवद् बाह्यो घटादिर्ज्ञातव्यः । वर्षानन्तरं दृष्टो घटादिस्तथैव दृश्यते । न तथा स्वाप्निको घटादिः । चकारात् स्वस्य मोक्षे प्रवृत्तिव्याघातश्च स्यादिति ॥ २९ ॥

यच्च तैरुच्यते, बाह्यपदार्थं विनाऽपि वासनावैचित्र्येण ज्ञानवैचित्र्यं भवतीति । तत्राह ।

## न भावोऽनुपलब्धेः ॥ ३० ॥

वासनानां न भावः सम्भवति । तव मते बाह्यार्थस्यानुपलब्धेः । उपलब्धस्य हि वासनाजनकत्वं दृष्टम् । वासनानामनादित्वस्वीकारे त्वन्धपरम्पराप्रसक्तिः । अर्थं विना वासनाया असम्भवात् । वासनां विनार्थोपलब्धेर्दृष्टत्वादन्वयव्यतिरेकाभ्यां बाह्यार्थसिद्धिरप्रत्यूहैव ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

आलयविज्ञानस्य क्षणिकत्वाद्वासनाया आधारोऽपि न सम्भवति ॥ ३१ ॥

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

बाह्यमतं यथा यथा विचार्यते तथा तथाऽनुपपन्न एव भातीति कियद् दूषणं वक्तव्यमित्यर्थः । चकाराद् वेदविरोधो मुख्यो दोषः सु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चितः । एवं सौत्रान्तिकविज्ञानवादिनौ प्रत्युक्तौ । माध्यमिकोऽत्यन्तासम्बद्धभाषित्वेनोपेक्षितः सूत्रकारेण ॥ ३२ ॥

इदानीं दिगम्बरमतं निरस्यति । ते ह्यन्तर्निग्रा बाह्यवस्तुन्युदासीना बाह्यवस्तुनिराकरणार्थं सप्तभङ्गीन्यायं प्रतिवस्तु योजयन्ति। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्तिचावक्तव्यः, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च स्यान्नास्ति चावक्तव्यश्चेति सप्तभङ्गीन्यायः । अत्र स्याच्छब्दस्तिङन्तप्रतिरूपको निपातोऽनेकान्तद्योतकः । तन्मतं दूषयति ।

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥

अयं सप्तभङ्गीन्यायो नैकस्मिन् योजयितुं शक्यः । अस्तिनास्तिशब्दप्रतिपादितयोर्भावाभावयोरेकत्रासम्भवात् ॥ ३३ ॥

ननु बाह्यपदार्थे औदासीन्यान्नास्यैकत्रासम्भवलक्षणो दोष इत्यत आह ।

## एवञ्चात्माकात्स्न्र्यम् ॥ ३४ ॥

एवं सत्यपि चात्मनो वस्तुपरिच्छेदादकार्त्स्न्यं सर्वत्वाभावः स्यात् । यद्वा तैः शरीरपरिमाण आत्माङ्गीक्रियते । तथा सति शरीराणां तुल्यत्वाभावादात्मनो, न कार्त्स्न्यं कृत्स्नशरीरतुल्यत्वाभावः प्राप्नोति ॥ ३४ ॥

## नच पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

ननु शरीराणामवयवोपचयाऽपचयानुसारेणात्मनोऽप्यवयवोपचयापचयाङ्गीकारेण तत्तुल्यत्वात् पर्यायादविरोध इति चेन्न। एवं सत्यात्मनो विकारित्वं स्यात् । आत्मनः सङ्कोचविकासाङ्गीकारेऽपि विकारित्वं दुष्परिहरमेव ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अन्त्यावस्थितिर्मोक्षसामयिकपरिमाणावस्थितिस्तस्या अङ्गीकारात् पूर्वोक्तदोषपरिहारार्थं चोभयनित्यत्वं महत्परिमाणमणुपरिमाणं चेदङ्गीक्रियते, तर्ह्युभयथापि शरीरपरिमाणव्याघातान्मतान्तरप्रवेशाच्च न नास्तिकाभिमतात्मसिद्धिः ॥ ३६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं बाह्यमतानि निरस्य तार्किकाद्यभिमतमीश्वरं निराकरोति।

पत्युरसामञ्जस्यात् ॥ ३७ ॥

ईश्वरो जीवेभ्यो भिन्नस्तेषां नियामकश्चेदङ्गीक्रियते, तदा वैषम्यनैर्घृण्यात्मकासामञ्जस्यप्रसक्तेर्नैवाङ्गीकर्तव्यः। कर्मसापेक्षत्वे स्वातन्त्र्याभावादनीश्वरत्वं प्रसज्ज्येत। अतः शुष्कतर्केण नैवमीश्वरोऽङ्गीकर्तव्यः ॥ ३७ ॥

सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

जीवब्रह्मणोर्विभुत्वेनाजसंयोगानङ्गीकारात् सम्बन्धाभावेन नियामकत्वानुपपत्तिः। तुल्यत्वादपि न नियामकत्वं सम्भवतीति सूचनार्थं चकारः ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

जगत्कर्तृत्वेन कल्प्यमान ईश्वरो लौकिकन्यायेनाधिष्ठित एव कार्यं करोतीति कल्पनीयम्। तथाचेश्वरस्याप्यधिष्ठाने कल्प्यमाने मतविरोधोऽनवस्थाप्रसक्तिश्च स्यात्। अतोऽधिष्ठानानुपपत्तेर्न तन्मतसिद्धस्येश्वरस्य कर्तृत्वं सम्भवतीत्यर्थः ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

नन्वसम्बन्धदोषपरिहारार्थं ब्रह्म करणवदङ्गीकर्तव्यमिति चेन्न। तथा सति सुखदुःखभोगादिकं प्रसज्ज्येत। करणवतो भोगनियमात् ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

प्रकृतेर्जीवस्य च नियमनार्थमीश्वरः स्वीकृतः। नियमनं चैतयोः परिच्छेदे सति सम्भवति। तथाङ्गीकारे जीवप्रकृत्योरन्तवत्त्वं भवेत्। तथाचानित्यत्वे मोक्षशास्त्रवैफल्यं प्रसज्ज्येत। एतद्दोषनिरासाय तयोर्विभुत्वे नित्यत्वे चाङ्गीकृते सम्बन्धाभावादीश्वरस्यासर्वज्ञता वा स्यात्। अतोऽसङ्गतस्तार्किकसमयः ॥ ४१ ॥

अतः परं पाञ्चरात्रिकमतेऽपि विरुद्धांशनिराकरणार्थमधि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करणान्तरमारभते । ते हि वासुदेवात् सङ्कर्षणस्तस्मात् प्रद्युम्नस्तस्मादनिरुद्ध इति चतुर्व्यूहोत्पत्तिं वदन्ति । तद् दूषयति ।

## उत्पत्त्यसम्भवात् ॥ ४२ ॥

संकर्षणस्य जीवत्वाङ्गीकाराज्जीवस्योत्पत्तेरसम्भवान्नेदं मतं युक्तमित्यर्थः । जीवस्योत्पत्त्यङ्गीकारे तु तस्यानित्यत्वप्रसक्त्या मोक्षशास्त्रवैफल्यं प्रसज्ज्येत ॥ ४२ ॥

## नच कर्तुः करणम् ॥ ४३ ॥

यदपि तैरङ्गीक्रियते, कर्तुः संकर्षणनामकजीवात् प्रद्युम्नसंज्ञकं मन उत्पद्यत इति । इदं लोकेऽप्रसिद्धम् । कुलालादिभ्यः कर्तृभ्यो दण्डादिकरणानामुत्पत्तेरदर्शनात् ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

यद्येते सर्वे परमेश्वरा विज्ञानादिमन्त इत्युच्यते, तथा सति सर्वेष्वीश्वरत्वस्याप्रतिषेधः । तथाचानेकेश्वरत्वदोषप्रसक्तिरित्यर्थः ४४

## विप्रतिषेधाच्च ॥ ४५ ॥

अस्मिन् मते कल्पनाबाहुल्याद् वेदनिन्दादर्शनाच्च विप्रतिषेधः । चकाराद् वेदप्रक्रियाविरोधश्च सूचितः । अतोऽसमञ्जसमिदं दर्शनम् ॥ ४५ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां द्वितीयाध्यायस्य द्वितीयः पादः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# द्वितीयाध्यायस्य तृतीयः पादः।

एवं पूर्वपादे वेदविरुद्धानि मतानि निराकृत्य ब्रह्मवादे जड-जीवनिरूपकश्रुतिषु विरुद्धांशनिराकरणाय तृतीयः पाद आरभ्यते। तत्र वेदान्ते सृष्टिर्द्विधा निरूप्यते। एतस्माज्जायते प्राण इतिश्रुत्यनुरोधेन भूतभौतिकं सर्वं ब्रह्मण एव विस्फुलिङ्गन्यायेन जायत इत्येकः प्रकारः। अपरस्तु वियदादिक्रमेण सृष्टिर्जायत इति। तत्र क्रमसृष्टिनिरूपणे छान्दोग्ये, तत्तेजोऽसृजतेति तेजोऽबन्नानां सृष्टिरुक्ता, न वाय्वाकाशयोः। तैत्तिरीयोपनिषत्सु, आकाशः सम्भूत इत्यादिना तयोरपि सृष्टिरुक्ता। वाक्यद्वयस्यापि क्रमसृष्टिनिरूपकत्वादेकवाक्यत्वं युक्तम्। अत आकाशस्योत्पत्तिरस्ति न वेति संशये पूर्वपक्षी नेत्याह।

## न वियदश्रुतेः ॥ १ ॥

विमतम् आकाशं नोत्पद्यते। छान्दोग्ये सृष्टिनिरूपणे तदुत्पत्तेरश्रवणात् ॥ १ ॥

## अस्ति तु ॥ २ ॥

तुः पक्षव्यावर्तकः। तैत्तिरीयके वियदुत्पत्तिरस्ति। तथाच तदेकवाक्यतायै छान्दोग्येऽपि साङ्गीकर्तव्येत्यर्थः ॥ २ ॥

शङ्कते।

## गौण्यसम्भवात् ॥ ३ ॥

तैत्तिरीयोपनिषदुक्ता वियदुत्पत्तिर्गौणी। आकाशस्य निरवयवत्वाद् व्यापकत्वाच्च मुख्योत्पत्तेरसम्भवात् ॥ ३ ॥

## शब्दाच्च ॥ ४ ॥

वायुश्चान्तरिक्षं चैतदमृतमिति, आकाशवत् सर्वगतश्च नित्य इत्यादिशब्दादाकाशस्य नित्यत्वबोधनादपि तदुत्पत्तिर्गौणी वक्तव्या ॥ ४ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नन्वाकाशः सम्भूत इत्यत्रैकस्यैव सम्भूतशब्दस्याग्न्यादौ मुख्योत्पत्तिवाचकत्वम, आकाशे गौणोत्पत्तिवाचकत्वमिति युगपद् वृत्तिद्वयविरोधान्नाङ्गीकर्तुं युक्तमत आह ।

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

एकस्यापि पदस्य क्वचिन्मुख्या वृत्तिः, क्वचिद् गौणीति स्यात्। यथा तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्मेति श्रुतौ प्रथमब्रह्मशब्दो मुख्यार्थको, द्वितीयस्तु गौणार्थकः । एवं सम्भूतशब्दोऽपीति नाकाशस्य पृथिव्यादिवन्मुख्योत्पत्तिरिति प्राप्ते ॥ ५ ॥

उच्यते ।

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

यद्याकाशस्योत्पत्तिर्नाङ्गीक्रियेत, तर्ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हीयते । अव्यतिरेकाद् आकाशस्यानुद्गमात् । अत आकाशस्यालौकिकत्वेन तज्ज्ञानस्य सर्वज्ञतायामपेक्षितत्वाल्लौकिकत्वेन जीववद् ब्रह्मरूपत्वानङ्गीकाराच्चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं तदुत्पत्तिरङ्गीकार्येत्यर्थः । नन्वाकाशस्यानुद्गमेऽपि जीववैलक्षण्येऽपि वस्तुसामर्थ्यैनैतादृशमप्येकं ब्रह्मरूपमस्तीति स्वीकारान्न प्रतिज्ञाहानिरत आह । शब्देभ्यः । येनाश्रुतं श्रुतं भवतीतिशब्दात् प्रकृतिविकारभावेनैव श्रुतिरेकविज्ञानं व्युत्पादयतीति न वस्तुसामर्थ्येन तादृशं ब्रह्मरूपमङ्गीकर्तव्यमित्यर्थः ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

आकाशोत्पत्तावसम्भावनानिरासकस्तुशब्दः । यत्किञ्चिद् विकृतं तस्य सर्वस्य विभाग उत्पत्तिर्दृष्टा । आकाशमपि लौकिकव्यवहारविषयत्वाद्विकृतम् । अतोऽस्याप्युत्पत्तिर्युक्ता । एवमाकाशोत्पत्तौ श्रुतिसिद्धायाम, आकाशवत् सर्वगतश्च नित्य इत्यादिश्रुतिभ्य आकाशनियामकतदाधिदैविकरूपब्रह्मप्रतिष्ठादिका बोध्याः ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

आकाशोत्पत्तिस्थापनेन वायोरुत्पत्तिः समर्थिता । सैषा अन-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्मिता देवतेत्यादिश्रुतिराधिदैविकवायुपरा ॥ ८ ॥

नन्‍ु यथाऽऽकाशोत्पत्तिः समर्थिता तन्नित्यत्वप्रतिपादकश्रुतीनामन्यार्थप्रतिपादनेन, तथा ब्रह्मणोऽप्युत्पत्तिरस्त्वित्यत आह ।

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

तुः पक्षव्यावर्तकः । सन्मात्रस्य ब्रह्मण उत्पत्तेरसम्भवः । न हि कार्योत्पत्तौ कारणस्योत्पत्तिरङ्गीक्रियते । कुण्डलोत्पत्तौ कनकोत्पत्तेरनभ्युपगमात् । ब्रह्मण उत्पत्तिः स्वतो न सम्भवति । अन्यतश्चेदनवस्था । यत्सर्वस्य मूलं तदेव ब्रह्मेतिस्वीकारात् । अतोऽनुपपत्तेर्ब्रह्मण उत्पत्तेरसम्भवः ॥ ९ ॥

## तेजोऽतस्तथा ह्याह ॥ १० ॥

अतो वायुभावापन्नब्रह्मणस्तेज उत्पन्नम् । तथाहि, वायोरग्निरितिश्रुतिराह ॥ १० ॥

## आपः ॥ ११ ॥

अग्नेराप इति श्रुतेस्तेजोरूपब्रह्मण आपो जाताः । सर्वश्रुतीनामविरोध इतिसूचनार्थमेकमिदं सूत्रं श्रुतिसिद्धार्थानुवादकमुक्तम् ॥ ११ ॥

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति, ता अन्नमसृजन्तेति श्रूयते । अत्रान्नशब्देन व्रीह्यादय उत पृथिवीति संशये, तैत्तिरीये, अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नमिति श्रवणाद् अन्नमयं हि सौम्य मन इत्यादौ तेजोऽबन्नानां सहचारोपलम्भात् पृथिव्योषध्यन्नानां मध्येऽभेदविवक्षया यत्किञ्चिन्निरूपणीयेऽन्नमुक्तमिति प्राप्ते, उच्यते ।

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

अत्रान्नशब्देन पृथिवी । यतोऽधिकारो भूतानामेव, नतु भौतिकानाम् । नीलं च रूपं पृथिव्या एव सम्भवति । अद्भ्यः पृथिवीति शब्दान्तरम् । एभ्यो हेतुभ्योऽन्नशब्देन पृथिव्येवोच्यते, नत्वन्नम् ॥ १२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

कार्यरूपादाकाशाद् वाय्वादीनामुत्पत्तिं तुशब्दो वारयति। किन्तु, तदभिध्यानात् तस्य ब्रह्मणोऽभिध्यानं तत्तत्कार्योत्पादनार्थं तस्यालोचनं, ततस्तदात्मकत्वं, तेन तच्छब्दवाच्यत्वं तस्मात् तद्भावापन्नब्रह्मण एव कार्यं, नत्वाकाशादिभ्यः केवलेभ्यः । तल्लिङ्गात् सर्वकार्यकर्तृत्वं लिङ्गं ब्रह्मण एवेति सर्ववेदान्तेषु निश्चितमतस्तस्मादेव कार्योत्पत्तिर्नतु केवलेभ्यो भूतेभ्यः । तस्मात् स एव सर्वं सृजतीत्यर्थः ॥ १३ ॥

उत्पत्तिक्रमं विचार्य लयक्रमं विचारयति।

## विपर्ययेण तु क्रमोऽत उपपद्यते ॥ १४ ॥

उत्पत्तिक्रमेण न लयः, किन्तु तद्विपर्ययेण । अत उत्पत्त्यनन्तरं प्रलयः । यतस्तथैवोपपद्यते । प्रवेशविपर्ययेण निर्गमनदर्शनात । इदं च क्रमसृष्टौ बोध्यम् ॥ १४ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

ननु तैत्तिरीयकेऽन्नमयादयः पञ्च कोशा निरूपिताः । तत्रान्नमयप्राणमययोः सामग्री पृथिवीवायुरूपा पूर्वं निरूपिता । आनन्दमयः परमात्मैव । अतोऽन्तरा मध्ये विज्ञानमनसी उक्ते, ते क्रमेण प्रातिलोम्यक्रमेण उत्पन्ने वक्तव्ये । तयोरग्रे कथनात्मकाल्लिङ्गात् । अतस्तयोरुत्पत्तिर्वक्तव्येति चेन्न । अविशेषात् । नामरूपात्मकविशेषयुक्तानामेवोत्पत्तिरुच्यते । एतयोस्तु विशेषाभावान्नोत्पत्तिरुक्ता । विज्ञानमयस्य जीवत्वात् । अतो भूतभौतिकसृष्टौ प्रवेशाभावान्न तयोरुत्पत्तिर्वक्तव्येत्यर्थः ॥ १५ ॥

ननु विज्ञानमयस्य जीवस्योत्पत्त्यनङ्गीकारे जातो देवदत्त इत्यादिसकलव्यवहारोच्छेदप्रसक्तिरित्याशङ्क्याह ।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तुः पक्षव्यावर्तकः । चराचरे स्थावरजङ्गमे शरीरे तयोर्विशेषेणापाश्रय आश्रयः शरीरसम्बन्धः, स तु स्यात् । न तु स्वतो जीवस्योत्पत्तिरस्ति । ननु जीवस्यानुत्पत्तौ जातकर्माद्यनुपपत्तिरत आह । तद्व्यपदेश इति । शरीरजन्ममरणादिना जीवस्य तद्व्यपदेशो जन्ममरणादिव्यपदेशो भाक्तो लाक्षणिकः । तद्भावभावित्वात् शरीरान्वयव्यतिरेकेण जीवोपलब्ध्यनुपलब्धी । अतो लक्षणया देहधर्मो जीवे उच्यते । न तु मुख्या जीवस्योत्पत्तिः ॥ १६ ॥

ननु जीवस्याप्युत्पत्तिरस्तु, किमिति लाक्षणिकत्वं स्वीक्रियत इत्याशङ्क्याह ।

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

आत्मा नोत्पद्यते, कुतः ? अश्रुतेः । नह्यात्मन उत्पत्तिः कुत्रचिदपि श्रूयते । देवदत्तो जात इति देहोत्पत्तिरेव, न तु जीवोत्पत्तिरुच्यते । विस्फुलिङ्गवदुच्चरणन्तु नोत्पत्तिः । नामरूपसम्बन्धाभावात् । किञ्च, ताभ्यः श्रुतिभ्यः, अयमात्माऽजरोऽमरः, न जायते म्रियते वेत्यादिभ्य आत्मनो नित्यत्वादपि नोत्पत्तिः ॥ १७ ॥

आत्मनो गुणान्निरूपयन् प्रथमतश्चैतन्यगुणमाह ।

## ज्ञोऽत एव ॥ १८ ॥

अत एव, विज्ञानमय इत्यादिश्रुतिभ्य आत्मा ज्ञः चैतन्यरूपो ज्ञेयः ॥ १८ ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

अत एवेत्यनुवर्तते । स यदाऽस्माच्छरीरादुत्क्रामति चन्द्रमसमेव ते सर्वे गच्छन्ति, तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इत्यादिश्रुत्युक्तानामुत्क्रान्तिगत्यागतीनां जीवसम्बन्धिनीनां श्रवणाद् यथायोग्यं तस्य परिमाणमङ्गीकर्तव्यम् । यद्यप्याराग्रमात्रो ह्यपरोऽपि दृष्ट इति श्रुतौ परिमाणमुक्तं । तथापि बहुवादिविप्रतिपत्तिनिरासाय युक्तिभिः साध्यते ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

ऊर्णनाभिर्यथा तन्तून् सृजते सञ्चरत्यपि, जाग्रत्स्वप्ने तथा जीवो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गच्छन्त्यागच्छन्ते पुनरितिश्रुत्युक्तयोर्गत्यागत्योः आत्मना स्वरूपेणैव सम्भवात् तदनुरोधेनाणुत्वं तस्य स्वीकर्तव्यमित्यर्थः । उत्क्रमणे तु देहेन्द्रियादिभिः सम्बन्धोऽप्यस्ति । अतो निःसन्दिग्धत्वाथ गत्यागतिकथनम् । अतो व्यापके गत्यागत्योरसम्भवान्मध्यमपरिमाणत्वेऽनित्यत्वप्रसक्तेरणुपरिमाणो जीव इत्यङ्गीकर्तव्यमित्यर्थः ॥ २० ॥

शङ्कते ।

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

ननु, स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेष्वित्यत्रातच्छ्रुतेरणुत्वविपरीतव्यापकत्वश्रुतेर्नाणुर्जीव इति चेन्न। इतराधिकारात् इतरस्य परब्रह्मणोऽधिकारात् । अतो ब्रह्मनिरूपणमेवास्मिन् वाक्ये कृतं, न तु जीवस्वरूपनिरूपणमित्यर्थः ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

स्वयं विहत्य स्वयं निर्मायेत्यादिश्रुतौ स्वशब्दोऽणुपरिमाणं जीवस्य ज्ञापयति । स्वप्ने व्यापकस्य शरीरपरिमाणस्य वा विहरणासम्भवात् । बालाग्रशतभागस्य, आराग्रमात्रो ह्यपरोऽपि दृष्ट इत्यादौ चोन्मानम् । चकारेण स्वप्नप्रबोधयोः सन्धा वा गतिदर्शनम् । एतैर्हेतुभिर्जीवस्याणुत्वमेव सिद्ध्यतीत्यर्थः ॥ २२ ॥

ननु जीवस्याणुत्वे सकलशरीरव्यापि चैतन्यं न सम्भवतीत्याशङ्क्याह ।

## अविरोधश्चन्दनवत् ॥ २३ ॥

चन्दनं यथैकदेशस्थितं सकलदेहसुखं करोति, अतितप्ततैलस्थितं वा तापनिवृत्तिं करोति । तथा जीवोऽप्येकदेशस्थितः सकलदेहे चैतन्यं सम्पादयतीत्यर्थः ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

ननु चन्दनेऽवस्थितिवैशेष्याद् अनुपहतत्वचि सम्यक्तयाऽवस्थानरूपात् त्वच एकत्वात् तत्र सकलशरीरे सुखमुपपद्यते, नत्वत्र तथा सम्भवतीति, चेन्न । जीवस्यापि स्थानविशेषाभ्युपगमात् । किं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत् स्थानमित्यत आह । हृदि हि । जीवस्य हृदि स्थितिरुक्ता । हिशब्देन गुहां प्रविष्टाविति युक्तिः सूचिता ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

यद्वा जीवस्य स्वरूपतोऽणुत्वेऽपि सकलशरीरव्यापिचैतन्यगुणाच्छरीरव्यापकत्वम् । लोकवत् । लोके यथा मणेरल्पत्वेऽपि तत्कान्तिर्बहुदेशं व्याप्नोति, तद्वत् ॥ २५ ॥

ननु गुणिनं विहाय गुणस्याधिकदेशेऽवस्थितिः क्वापि न दृष्टेत्याशङ्क्य दृष्टान्तमाह ।

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा चम्पकादिपुष्पाणां गन्धस्तद्व्यवहितदेशेऽप्युपलभ्यते तथा जीवस्य चैतन्यगुणोऽपीत्यर्थः । यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वातीति वेदोक्त्याऽस्य दृष्टान्तत्वं युक्तम् ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

जीवस्य हृदयस्थानत्वमणुपरिमाणं चोक्त्वाऽऽलोमभ्य आनखाग्रेभ्य इति तस्य चैतन्यगुणेन सकलशरीरव्यापित्वं दर्शयति ॥२७॥

ननु चैतन्यस्य जीवगुणत्वे किं प्रमाणमत आह ।

## पृथगुपदेशात् ॥ २८ ॥

प्रज्ञया शरीरं समारुह्येति श्रुतौ प्रज्ञायाः करणत्वेन पृथगुपदेशाच्चैतन्यस्य गुणत्वम् ॥ २८ ॥

ननु तत्त्वमस्यादिवाक्यैः परं ब्रह्मैव जीव इति कथं तस्याणुत्वं सम्भवतीत्याशङ्क्याह ।

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥

तुः पक्षव्यावर्तकः । तद्गुणसारत्वात् तस्य ब्रह्मणो गुणाः प्रज्ञातृत्वादयस्त एव जीवे सारा जडवैलक्षण्यकारिण इति हेतोस्तद्व्यपदेशः, अमात्ये राजपदप्रयोगवज्जीवे भगवद्व्यपदेशो मैत्रेयीब्राह्मणादौ । ननु निरूपणस्थले उपचारासम्भवात् कथमन्यस्यान्यधर्मव-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वेन कथनं, तत्राह । प्राज्ञवत् । यथा, तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्मेत्यादिना प्राज्ञस्वरूपमुक्तम् । न हि सुषुप्तिसाक्षिणः प्राज्ञस्यैतादृशं स्वरूपं सम्भवति । अपहतपाप्मादीनां ब्रह्मलिङ्गत्वात् । अतो ब्रह्माभेदेनैतदुक्तमिति ज्ञेयम् । एवमेव ब्रह्माभेदविवक्षया शारीरस्य जीवस्यापि ब्रह्मधर्मनिरूपिकाः श्रुतयो ज्ञेयाः ॥ २९ ॥

ननु जीवस्यात्यन्तमपकृष्टस्य सर्वोत्कृष्टत्वेन व्यपदेशोऽत्यन्तप्रत्ययिततरे वेदेऽयुक्तः । नच ब्रह्मण आनन्दांशप्राकट्यात् तद्गुणसारत्वेन व्यपदेश इति वाच्यम् । तथा सति प्राज्ञे यथाऽऽनन्दांशस्तिरोहितो भवति तथाऽत्रापि स्यादतोऽयुक्तस्तद्व्यपदेश इत्याशङ्क्याह ।

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥

यावदयमात्माऽऽनन्दांशप्राकट्येन ब्रह्म भवति तावदयं व्यपदेशः । पश्चात्तु ब्रह्मधर्माणामाविर्भावाद् ब्रह्मत्वं युक्तमेवेतिभावः । अतो न पूर्वोक्तदोषो, यतस्तदानीं ब्रह्मधर्माणां स्वास्मिन् दर्शनमस्ति । चकाराज्जीवस्याप्यानन्दांशः प्रकटित इति सूचितम् । यद्वा, अयं व्यपदेशो नात्यन्तमयुक्तस्य, किन्तु राजज्येष्ठपुत्रवद् ब्रह्मभावयोग्यस्य । तथाच न पूर्वोक्तो दोषः । तदुक्तं निबन्धे,

व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ।
आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः ॥
प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तदिति ॥ ३० ॥

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥३१॥

जीवस्य संसारदशायामप्यानन्दांशस्य नात्यन्ताभावः । किन्तु पुंस्त्वादिवत् । यथा सेकादिसामर्थ्यलक्षणं पुंस्त्वं बाल्ये विद्यमानमेव यौवने प्रकटीभवति । तथाऽऽनन्दांशस्यापि संसारदशायां तिरोहितस्य ब्रह्मभावे सत्यभिव्यक्तियोग आविर्भाव इत्यर्थः ॥ ३१ ॥

ननु जीवस्य संसारावस्थायां सच्चित्प्राकट्यमेव । मोक्षे आनन्दांशस्यापि प्राकट्यमिति कथमेवं वैरूप्यं स्वीक्रियत इत्याशङ्क्याह ।

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वाऽन्यथा ॥ ३२ ॥

यदि संसारावस्थायामपि जीवस्यानन्दांशः प्रकट इत्युच्येत, तथा सत्यानन्दांशस्य नित्यमुपलब्धिः स्यात्। तथाच संसारावस्थाया असम्भवः स्यात्। अथ जीवस्य सर्वदैवानन्दांशस्यानुपलब्धिः स्वीक्रियेत, तथा सति मोक्षदशा न स्यात्। अथान्यथानुपपत्त्याऽन्यतरनियमः स्वीक्रियेत, जीवो निरानन्द एव, ब्रह्म त्वानन्दमयमिति। तथाच, ब्रह्मैव सन् ब्रह्माप्येतीतिश्रुतिविरोधः प्राप्नोति। अतः पूर्वोक्त एव प्रकारोऽङ्गीकर्तव्य इति सिद्धम्॥ ३२॥

अतः परं साङ्ख्यानां मते कर्तृत्वं प्रकृतिगतमेवेति, तन्मतनिरासाय जीवगतकर्तृत्वव्यवस्थापनार्थमधिकरणान्तरमारभ्यते।

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

कर्ता जीव एव। ज्योतिष्टोमादिविधायकशास्त्राणामर्थवत्त्वात्। अन्यथा ब्रह्मणः कर्मणामनुपयोगाज्जडस्याशक्यत्वात्कर्मविधयो व्यर्थाः स्युः॥ ३३॥

## विहारोपदेशात् ॥ ३४ ॥

यद्यत्कामयते तत्तद्भवतीति श्रुत्या जीवस्यैव गान्धर्वादिलोकेषु विहार उपदिष्टः। तथाच साधुकारी साधुर्भवतीति श्रुतौ कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्याज्जीव एव कर्ता सिद्ध्यति॥ ३४॥

नन्विन्द्रियैः कर्मकरणदर्शनात्तेषामेव कर्तृत्वमस्त्वित्याशङ्क्याह।

## उपादानात् ॥ ३५ ॥

तदेषां प्राणानां विज्ञानेन विज्ञानमादायेतिश्रुत्युक्ताज्जीवेन सर्वप्राणानां विज्ञानोपादानाज्जीव एव कर्ता। इन्द्रियाणां तु करणत्वमेव। अतः स्वातन्त्र्याज्जीव एव कर्ता॥ ३५॥

## व्यपदेशाच्च क्रियायां नचेन्निर्देशविपर्ययः ॥ ३६ ॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेतिश्रुतौ यागादिक्रियायां विज्ञानात्मकजीवस्यैव कर्तृत्वेन व्यपदेशात् तस्यैव कर्तृत्वमि-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यर्थः । साङ्ख्यमते तु कर्मणि बुद्ध्यादीनामेव कर्तृत्वं, भोगे तु जीवस्य । साङ्ख्यमताग्रहेण पूर्वोक्तव्यपदेशाङ्गीकारो नचेत्तर्हि, विज्ञानं यज्ञं तनुत इति श्रुतौ, विज्ञानेन विज्ञानमादायेतिश्रुतिवन्निर्देशस्य विपर्ययः स्यात् । विज्ञानेन यज्ञं तनुत इति निर्देशः स्यादित्यर्थः ॥ ३६ ॥

ननु जीवस्य कर्तृत्वं चेत्तर्हि स्वस्य हिताकरणादिदोषप्रसङ्ग इत्याशङ्क्याह ।

## उपलब्धिवदनियमः ॥ ३७ ॥

चक्षुषा यथेष्टमनिष्टं चोपलभते तथेन्द्रियैः कर्म कुर्वञ्जीव इष्टमनिष्टं वा प्राप्नोतीति न हिताकरणनियम इत्यर्थः ॥ ३७ ॥

नन्वेवमपि जीवस्य क्रियायां स्वातन्त्र्यलक्षणं कर्तृत्वं चेत् स्वस्याहितं न कुर्यादित्याशङ्क्याह ।

## शक्तिविपर्ययात् ॥ ३८ ॥

जीवस्य शक्तेर्विपर्ययात् तथा सामर्थ्याभावान्न हितकरणनियम इत्यर्थः ॥ ३८ ॥

शक्तिविपर्यये हेतुमाह ।

## समाध्यभावाच्च ॥ ३९ ॥

जीवस्य क्रियाज्ञानशक्ती योगेन भवतः । समाधेरभावाच्छक्त्यभावः । चकारान्मन्त्रसामर्थ्याभावोऽपि सूचितः ॥ ३९ ॥

ननु कर्मकर्तॄणां पाचकादीनां कर्तृत्वभोक्तृत्वयोर्भेदो दृश्यते तथात्रापि भविष्यतीत्यत आह ।

## यथा च तक्षोभयथा ॥ ४० ॥

यथा तक्षा स्वयं रथं निर्माय तत्रारुह्य विहरति । परार्थनिर्माणे स्वयं तेन न विहरति च । तथा जीवोऽपि स्वार्थे परार्थे च करोति कारयति चेत्यर्थः । नच कर्तृत्वस्य दुःखरूपत्वाज्जीवे तन्नाङ्गीक्रियत इति वाच्यम् । पयःपानादिकर्तृत्वस्य सुखरूपस्य दृष्टत्वात् ॥ ४० ॥

तत्कर्तृत्वं जीवधर्मो वा, ब्रह्मधर्मो वेति संशये निर्णयमाह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## परात्तु तच्छ्रुतेः ॥ ४१ ॥

कर्तृत्वं ब्रह्मधर्म एव। परादू ब्रह्मण एव तत्कर्तृत्वं जीवे समायाति। तस्य ब्रह्मांशत्वादैश्वर्यादिवत्। कुतः? तच्छ्रुतेः। यमधोनिनीषति, सर्वकर्ता सर्वभोक्ता सर्वनियन्तेति तस्यैव कर्तृत्वश्रुतेः। ब्रह्मणः सर्वरूपत्वान्न कश्चिद्दोषः शङ्क्यः ॥ ४१ ॥

ननु ब्रह्मणः सर्वकर्तृत्वे वैषम्यं नैर्घृण्यं च स्याज्जीवानां दुःखदातृत्वात्तदनुकूलकर्मकारणाच्चेत्याशङ्क्याह।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥

पूर्वपक्षव्यावर्तकस्तुशब्दः। भगवान् फलदाने जीवकृतप्रयत्नापेक्षः। अतो जीवस्य यादृशप्रयत्नाभिनिवेशं पश्यति तादृशं कर्म कारयतीति न भगवति दोषः। अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यं स्यात् ॥ ४२ ॥

अधुना जीवस्य ब्रह्मसम्बन्धिरूपमाह।

## अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवो ब्रह्मणोंऽश एव। सर्व एवात्मानो व्युच्चरन्ति कपूयचरणा रमणीयचरणा इत्यादिनानाव्यपदेशात्। ननु ब्रह्मणो निरवयवत्वाज्जीवस्यांशत्वं न सम्भवतीति चेन्न। ब्रह्मणः स्वरूपं न लोकसिद्धं, किन्तु श्रुतिसिद्धमेव तत्। तथाच यथा श्रुतिर्वदति तत्स्वरूपं तथैवेति मन्तव्यं, नतु कुकल्पनाभिः प्रत्यवस्थातव्यम्। ननु जीवस्य ब्रह्मांशत्वे तत्सजातीयत्वमायाति। ब्रह्मदाशा ब्रह्मेमे कितवा उतेतिश्रुत्यन्तरे त्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाद्दाशादीनां ब्रह्मत्वं प्रतीयते। तत्कार्यत्व एव समञ्जसं स्यादिति चेन्न। अन्यथा प्रकारान्तरेणापि शरीरत्वेन च प्रकारेणैके शाखिनो दाशकितवादित्वमधीयते। तथाचानन्दांशस्य तिरोहितत्वान्न जीवस्य ब्रह्मसाजात्यम्। चिद्रूपेण तु साजात्याङ्गीकारे इष्टापत्तिरिति भावः ॥ ४३ ॥

## मन्त्रवर्णात् ॥ ४४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरुष एवेद१ सर्वमित्युपक्रम्य, पादोऽस्य विश्वाभूतानीत्यनेन भूतानां जीवानां पादत्वं, पादेषु स्थितत्वेन वांशत्वमुक्तमिति तदेव जीवस्य स्वरूपमित्यर्थः ॥ ४४ ॥

## अपि स्मर्यते ॥ ४५ ॥

ममैवांशो जीवलोके जीवभूतः सनातन इति जीवस्यांशत्वं स्मर्यतेऽपीत्यर्थः ॥ ४५ ॥

ननु जीवस्य ब्रह्मांशत्वे तद्दुःखेन ब्रह्मणोऽपिदुःखित्वं स्याद्, हस्तादिवेदनया शरीरस्येवेत्याशङ्क्याह ।

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

परो भगवान् एवं जीवदुःखेन दुःखी न । प्रकाशादिवत् । नाग्नेर्हि तापो न हिमस्य तत्स्यादिति न्यायेन यथा प्रकाशादिरूपाणामग्न्यादीनामन्यस्य तापकत्वेऽपि स्वस्य न तापादि । तथा द्वैतदुद्ध्यांशस्य दुःखित्वेऽपि परस्य भगवतो दुःखित्वं नेत्यर्थः । यद्वा, यथा प्रकाशादिकं प्रकाश्यदोषेण न दुष्यतिं तथा ब्रह्माप्यंशदोषेण न दुष्यतीत्यर्थः ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः, न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा, कर्मात्मा ह्यपरो योऽसौ मोक्षबन्धैः स युज्यते, एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य इत्यादिना सर्वेऽप्यृषयोंऽशिनो दुःखासम्बन्धमंशस्य च दुःखसम्बन्धं स्मरन्ति । चकारेण, तयोरन्यः पिप्पलं स्वाद्वत्तीतिश्रुतिः परिगृहीता ॥ ४७ ॥

ननु जीवस्य भगवदंशत्वेन विधिविषयत्वाभावात् कर्मसम्बन्धोऽनुपपन्नः । किञ्चैकस्यैव जीवस्यानेकदेहसम्बन्धादयं शूद्रोऽयं पतिरियं स्त्रीति ज्ञानमशक्यम् । अतः कर्ममार्गीयनियमस्यासम्भवाज्जीवस्यापि दुःखित्वं न सम्भवतीत्याशङ्क्याह ।

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनुज्ञापरिहारौ विधिनिषेधौ जीवस्य देहसम्बन्धात् । यदा यो देहो गृहीतस्तत्सम्बन्धात् । ज्योतिरादिवत् । यथा शवाग्निश्चण्डालभाण्डस्थितं जलं तद्घटादिकं च परिह्रियते । उत्कृष्टं ज्योतिरादिकं च गृह्यते । एवं जीवोऽप्युत्कृष्टापकृष्टशरीरसम्बन्धाद्विधिनिषेधौ भजत इति नोक्तदोषः ॥ ४८ ॥

ननु शरीरस्यापि बाल्यकौमाराद्यवस्थाभेदेन भेदात् कर्मकाले ब्राह्मणत्वादि कथम् । उपनयनकालीनशरीरस्य तदानीमभावात् । नच जीवैक्यादिदमुपपन्नमिति वाच्यम् । देहान्तरेऽपि तस्यैव जीवस्य सत्त्वाच्चण्डालदेहेऽपि ब्राह्मणत्वं स्यादित्याशङ्क्याह ।

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

बाल्यादिषु शरीराणां भेदेऽपि सन्ततेरैक्यादेकत्वं विवक्षितम् । जन्मान्तरे तु सन्ततेर्भेदान्न पूर्वोक्तो व्यतिकरः । अतो न कर्मणां साङ्कर्यमिति भावः ॥ ४९ ॥

ननु ब्रह्मणः सच्चिदानन्दमयत्वात्तदंशो जीवोऽपि तथा भवितुमर्हतीति कथं तस्य संसारित्वमत आह ।

## आभास एव च ॥ ५० ॥

आनन्दांशतिरोधानाज्जीवो ब्रह्माभास इत्युच्यते । नत्वाभासोक्त्या तस्य मिथ्यात्वं बोध्यम् । व्यापकस्य सर्वत्र विद्यमानस्य च ब्रह्मणः प्रतिबिम्बासम्भवात् । अतोऽस्य संसारित्वमुपपन्नमिति भावः ॥ ५० ॥

ब्रह्मणो नियामकत्वप्रतिपादनाय नैयायिकाद्यभिमतं जीवरूपं निराकरोति ।

## अदृष्टानियमात् ॥ ५१ ॥

नैयायिकादिभिर्हि, नानात्मानो व्यवस्थात इत्युक्त्या भोगव्यवस्थासिद्ध्यर्थं जीवनानात्वं स्वीकृतम्, अदृष्टस्य भोगनियामकत्वं च । स्वभोग्यवस्तूनां देशान्तरे उत्पत्त्यन्यथानुपपत्त्या जीवस्य व्यापकत्वं चोरीकृतम् । इदं सर्वथानुपपन्नम् । सर्वेषामेव व्यापकानां जीवानामनेकदेहसम्बन्धस्य सत्त्वादेतज्जीवस्येदमदृष्टमेतस्य नेति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नियमो न स्यात् । अतोऽदृष्टस्यानियमान्न तार्किकाद्यभिमतं जीवस्वरूपं युक्तमित्यर्थः ॥ ५१ ॥

ननु मनःप्रभृतीनां करणानां नियामकत्वेनाङ्गीकारात्तेषां चेश्वरेच्छया नियतत्वाद् यदीयं यत्र मनस्तच्छरीरावच्छेदेन तदीयमदृष्टं तत्रोत्पद्यत इतिनियमान्नोक्तदोष इत्याशङ्क्याह ।

## अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसन्ध्यादिषु ईश्वरेच्छामनःप्रभृतिषु नियामकत्वेनाङ्गीक्रियमाणेष्वप्येवं पूर्वोक्तदोषप्रसक्तिः । आत्मनां व्यापकत्वेन सर्वत्र सम्बन्धसम्भवादस्येदं मनोऽस्य नेतिनियमाभावादित्यर्थः । तदभिमतेश्वरनिराकरणं च, पत्युरसामञ्जस्यादिति सूत्रेण पूर्वं कृतमेव । अतो नेश्वरेच्छयापि नियमसिद्धिः ॥ ५२ ॥

नन्वात्मनो विभुत्वेऽपि तस्मिंस्तादृशः प्रदेशविशेषोऽस्ति येनाऽदृष्टनियमादिकं सम्भविष्यतीतिकल्पने नोक्तदोषापत्तिरित्याशङ्क्य परिहरति ।

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

अन्यस्यात्मनोऽपि प्रदेशस्य तत्रान्तर्भावान्न प्रदेशकल्पनेनापि दोषपरिहारः सम्भवति । यद्वा तद्देहस्यैव देशान्तरगमने पूर्वदेशस्य त्यक्तत्वात् स प्रदेशोऽन्तर्भवेत्तिरोभवेदित्यर्थः । अतो नेदं मतं समीचीनमिति भावः ॥ ५३ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# द्वितीयाध्यायस्य चतुर्थः पादः ।

पूर्वपादे जीवस्वरूपं विचार्य तच्छरीरवर्तिनां प्राणादीनां विचारार्थमग्रिमप्रकरण आरभ्यते ।

## तथा प्राणः ॥ १ ॥

प्राणा इन्द्रियाणि । यथा जीव उत्क्रान्त्यादिधर्मवांस्तथा तेऽपि बोध्याः । इन्द्रियाणां प्रियत्वसूचनाय प्राणशब्द उक्तः । मनसो मुख्यत्वात्तदभिप्रायेण प्राण इत्येकवचनम् । जीवे आनन्दमात्रांशस्य तिरोभावो, जडेषु प्राणेन्द्रियेषु चिदंशस्यापि तिरोभावात् पृथक्तया तन्निरूपणं कृतम् । नच जीव इव प्राणेषु ब्रह्मव्यपदेशाभावान्न तेषु जीवधर्मातिदेशो युक्त इति शङ्क्यम् । ये प्राणं ब्रह्मोपासत इति श्रुतौ तत्रापि तद्यपदेशस्य सत्त्वात् ॥ १ ॥

नन्विन्द्रियाणामुत्क्रान्तिश्रुतिर्गौणी भविष्यतीत्याशङ्क्याह ।

## गौण्यसम्भवात् ॥ २ ॥

इन्द्रियाणामुत्क्रमणश्रुतिर्गौणी न सम्भवति । एकस्या एव श्रुतेर्जीवे मुख्यत्वस्येन्द्रियेषु गौणत्वस्य चासम्भवात् ॥ २ ॥

## तत्प्राक् श्रुतेश्च ॥ ३ ॥

सृष्टेः प्राक् पूर्वमपि प्राणादीनां स्थितिश्रुतेरपि तेषां नित्यत्वमित्यर्थः । श्रुतिश्च, असद्वा इदमग्र आसीत्, तदाहुरित्युपक्रम्य, प्राणा वा ऋषय इत्यादिका ज्ञेया । प्राणानां जडत्वेन जीवविचारापेक्षयाऽऽधिक्येनात्र विचारः क्रियते । न च प्राणानां पूर्वं सत्त्वे सदेव सौम्येदमग्र आसीदितिश्रुतिविरोधः स्यादिति वाच्यम् । असद्वा इदमग्र इति श्रुतौ प्राणानामुत्पत्तिरेव निषिध्यते, जीवस्येवोद्गमस्तु न निषिध्यते । अत उद्गमात् पूर्वावस्थानिरूपिका, सदेव सौम्येति श्रुतिरिति न विरोधावकाशः । चकारान्मोक्षे सम्पत्तिश्रुतिः परिगृहीता ॥३॥

## तत्पूर्वकत्वाद् वाचः ॥ ४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मनः पूर्वरूपं वागुत्तररूपमितिश्रुतेर्वाचो मनःपूर्वकत्वाद् वेदात्मकवाचो यत्र नित्यत्वं तत्र तत्पूर्वरूपमनसो नित्यत्वं सुतरामेवेत्यर्थः ॥ ४ ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुतौ सप्तानां चक्षुरादीनां गतिश्रवणाद् एकीभावश्रुतौ च सप्तानां गतिभिर्जीवगतेर्विशेषितत्वाज्जीवगत्या सप्तानां गतीनां विशेषितत्वाच्च तेषां जीवतुल्यत्वमित्यर्थः । चकारेण तत्तदुपाख्यानेषु चक्षुरादीन्द्रियाणां देवतात्वं संवादश्च परस्परमुक्तः स संगृहीतः । अतः सर्वथा जीवतुल्यत्वमेतेषु ज्ञेयम् ॥ ५ ॥

केचित्त्विदं सूत्रमग्रिमसूत्रपूर्वपक्षनिरूपकं व्याचख्युः । तथाहि । ते प्राणाः किं त इत्यपेक्षायां सप्त प्राणाः प्रभवन्तीति, अष्टौ ग्रहा अष्टावतिग्रहा इति सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चाविति नव वै पुरुषे प्राणा नाभिर्दशमीति दश वै पशोः प्राणा आत्मैकादश इत्यादिश्रुतिष्वनेकविधसंख्यानां प्रतीतेः किं युक्तमितिसंशये सप्त प्राणा इत्यर्थः । कुतः? गतेः, सप्त इमे लोका इतिश्रुतौ सप्तानामेव गतिश्रवणाज्जीवस्योत्क्रमणसमये सप्तानामेव विशेषितत्वाच्च । अन्ये भेदास्त्वेतेषामेव वृत्तय इति प्राप्ते, उच्यते ।

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

पूर्वसूत्रस्य प्रथमोक्तरीत्या व्याख्याने तु पूर्वपक्ष उत्सूत्रं ज्ञेयः । तुः पूर्वपक्षव्यावर्तकः । हस्तौ चादातव्यं च, उपस्थश्चानन्दयितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं चेति श्रुतौ हस्तादयश्चत्वार इन्द्रियत्वेन गणिताः । एवं च हस्तादीनां चक्षुरादितौल्ये स्थिते सति, अतो हेतोर्नैवं, सप्तैवेति न, किन्त्वेकादशैवेन्द्रियाणीति सिद्धम् ॥ ६ ॥

## अणवश्च ॥ ७ ॥

सर्वे प्राणा अणुप्रमाणा ज्ञेयाः । गतिमत्त्वे सति नित्यत्वस्याऽणुत्वं विनाऽसिद्धेः ॥ ७ ॥

## श्रेष्ठश्च ॥ ८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रेष्ठो मुख्यप्राणः, सोऽपि नित्यगतिशीलोऽणुपरिमाणश्च ज्ञेयः ॥ ८ ॥

ननु यः प्राणः स वायुः, एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समान इति श्रुतेः, सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चेति साङ्ख्योक्तेश्च मुख्यप्राणो वायुरिन्द्रियाणां क्रिया वास्त्वित्याशङ्क्याह।

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतौ प्राणवाय्वोः पृथगुपदेशान्मुख्यः प्राणो, वायुः क्रिया वा न भवतीत्यर्थः ॥९॥

अथ मुख्यः प्राणः स्वाधीनः पराधीनो वेति संशये, सुप्तेषु वागादिषु प्राण एको मृत्युनाऽनाप्तः प्राणः संवर्ग इत्यादिश्रुत्या प्राणः स्वतन्त्र इति प्राप्ते, उच्यते।

## चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॥ १० ॥

तुः पूर्वोक्तशङ्कानिरासार्थः। चक्षुरादिवत् प्राणोऽप्यस्वतन्त्रः मुख्यतया भगवदधीनः। व्यवहारे तु जीवाधीनः। कुतः? चक्षुरादिभिः सह शासनात्। अतः प्राणः पराधीनो, न स्वतन्त्रः ॥ १० ॥

ननु प्राणस्य जीवकरणत्वे व्यापारोऽपेक्षितः। तत्र वृत्तयस्त्वेकादशैव। एकादशामी मनसो हि वृत्तय इति वाक्यात्। अतोऽस्य व्यापारान्तरमपेक्षितमित्याशङ्क्याह।

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

प्राणस्याकरणत्वान्न पूर्वोक्तो दोषः शङ्क्यः, करणस्यैव व्यापारवत्त्वनियमात्। अन्यस्योपकारकस्य तु कार्यमात्रमपेक्षितम्। तथाहि श्रुतिरेव शरीरस्थितिलक्षणं कार्यं प्राणस्य दर्शयति, तस्मिन्नुत्क्रामत्यथेतर इत्यादिना। अतो व्यापाराभावेऽपि स्वरूपस्थितिमात्रेण तस्योपकारित्वं सिद्धम् ॥ ११ ॥

ननु व्यापारं विनोपकारित्वं न सम्भवतीत्याशङ्क्याह।

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति श्रुतौ प्राणस्य पञ्चवृत्तिश्रवणान्मनोवच्चायं व्यपदिश्यते । यथा मनसः स्वरूपत एव द्वारभेदेनैकादश वृत्तय एवमेव प्राणस्यापि पञ्चधात्मानं विभज्य कार्यकरणं व्यपदिश्यते । अतो न पूर्वोक्तो दोषः ॥१२॥

## अणुश्च ॥ १३ ॥

आसन्यप्राणोऽणुः । प्राणानामुक्तमप्यणुत्वं पञ्चधात्मानं विभज्येतिवचनान्मुख्यप्राणे सन्दिग्धमतः पुनरुच्यते । चकारात्पूर्वोक्तधर्माणां समुच्चयः ॥ १३ ॥

अथ वागादीन्द्रियाणां देवताधिष्ठानयुक्तानां वदनादिकार्ये प्रवृत्तिरुत जीवाधिष्ठानभगवत्प्रेरणयोः सत्त्वात् स्वत एवेति संशये विशेषकार्यान्तरस्यादर्शनान्न देवतान्तरापेक्षेति प्राप्ते, उच्यते ।

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

तुः पक्षव्यावर्तकः । वागादीन्द्रियाणां ज्योतिरादि अग्न्यादिकमधिष्ठानमङ्गीकर्तव्यम् । अग्निर्वाग्भूत्वा मुखं प्राविशदिति श्रुतौ तदामननात् कथनादित्यर्थः ॥ १४ ॥

अथ यदग्न्यादीनां वागाद्यधिष्ठातृत्वमुक्तं तत्स्वत एवोतान्यसहितानां वेति संशये केवलाग्न्याद्यधिष्ठानेनैव कार्यसिद्धेस्तस्यापि नियामकान्तरकल्पनेऽनवस्थाप्रसक्तेस्तेषां स्वतोऽकिञ्चित्करत्वे देवतात्वव्याघाताच्च स्वत एव नियामकत्वमिति प्राप्ते, उच्यते ।

## प्राणवता शब्दात् ॥ १५ ॥

वागादिकं प्राणवता अग्न्यादिनाऽधिष्ठितमङ्गीकर्तव्यम् । सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत इत्यादिशब्दात् । अत्र परेणापहतपाप्मना प्राणेन युक्तोऽग्निर्दीप्यत इत्युक्त्या दीप्यमानस्यैवाधिष्ठातृत्वात् प्राणसहितस्याग्नेरधिष्ठातृत्वमुक्तं, नतु केवलस्येत्यर्थः ॥१५॥

ननु प्राणसहितस्याधिष्ठातृत्वे सर्वदाऽधिष्ठातृत्वं न स्यादत आह ।

## तस्य च नित्यत्वात् ॥ १६ ॥

अग्न्यादीनां प्राणसम्बन्धस्य नित्यत्वात् सर्वदैवाधिष्ठातृत्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मित्यर्थः । चकारात् प्राणस्यापि नित्यत्वं पूर्वमुक्तं सूचितम् ॥ १६ ॥

अथेन्द्रियाणां प्राणाधीनव्यापारत्वात् प्राणशब्दवाच्यत्वाच्च प्राणस्यैव वृत्तिरूपाणीन्द्रियाणि तत्त्वान्तराणि वेति संशये लाघवात् प्राणवृत्तिरूपाण्येवेति प्राप्ते, उच्यते ।

## तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

तानीन्द्रियाणि तत्त्वान्तराण्येव । कुतः ? तद्व्यपदेशात् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेतीन्द्रियशब्देन व्यपदेशात् । अतः क्वचित् प्राणशब्दवाच्यत्वेऽपि तेषां नैकत्वम् । ननु तर्हि भेदव्यपदेशादासन्योऽपि तत्त्वान्तरं स्यादत आह । अन्यत्रेति । श्रेष्ठान्मुख्यप्राणादन्यत्र भेदः । मुख्यप्राणे तु तत्त्वान्तरत्वं नास्तीत्यर्थः ॥ १७ ॥

## भेदश्रुतेः ॥ १८ ॥

यत्रापीन्द्रियेषु प्राणशब्दः प्रयुक्तः, तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रमन्तं सर्वे प्राणा अनूत्क्रामन्तीत्यादौ तत्रापि भेदेन श्रुतेर्नैकत्वमित्यर्थः ॥ १८ ॥

## वैलक्षण्याच्च ॥ १९ ॥

प्राणस्येन्द्रियाणां च वैलक्षण्यादपि नैकत्वम् । वागादिषु सुप्तेषु प्राणस्य जागरणं सर्वेन्द्रियाणां स्वामित्वं चेत्याद्यनेकविधं वैलक्षण्यं ज्ञेयम् ॥ १९ ॥

इदानीं भूतभौतिकानां सृष्टिः परब्रह्मण एवेति निर्णीय नामरूपव्याकरणमपि तत एवेति निर्णयार्थमधिकरणान्तरमारभ्यते । तत्र घटादिपदार्थानां नामरूपनिर्माणं जीवादेवोत ब्रह्मण इति संशये लोके घटादिपदार्थानां नामरूपनिर्माणस्य कुलालादिभ्यो दर्शनादलौकिकेऽपि स्थावरजङ्गमे मयूरादिसंज्ञा मूर्तिश्च हिरण्यगर्भात्मकजीवादेव भविष्यतीति प्राप्ते, उच्यते ।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

पूर्वपक्षव्यावर्तकस्तुशब्दः । पदार्थानां संज्ञामूर्त्योः क्लृप्तिर्नामरूपयोर्निर्माणं, तत् त्रिवृत्कुर्वत एव, यस्त्रिवृत् करोति तस्मादेव ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुतः ? उपदेशात् । सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकं करवाणीति श्रुतौ नामरूपव्याकरणत्रिवृत्करणयोः समानकर्तृकत्वेनोपदेशात्।त्रिवृत्कर्ता तु परमेश्वर एव । जीवस्य देहसम्बन्धानन्तरमेव कर्तृत्वात् त्रिवृत्करणेऽसामर्थ्यात् । अतो नामरूपव्याकरणमपि तत्कर्तृकमेवेति सिद्धम् ॥ २० ॥

अथान्नमशितं त्रेधा विधीयत इत्यादिश्रुतेर्वाक्प्राणमनांसि भौतिकानि, उत, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतेः स्वतन्त्राणीति संशये, पूर्वपक्षमाह ।

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

पुरीषमांसादिकं भौमं तेजोऽबन्नप्रकृतिकं ज्ञेयम् ।तत्र हेतुः यथाशब्दम् । अन्नमशितमित्यादिश्रुत्या निःसन्दिग्धं प्रतिपादनात् । ततः किमत आह । इतरयोश्च । इतरयोर्मनःप्राणयोरपि यथाशब्दं भौतिकत्वं ज्ञेयम् । एतस्माज्जायते प्राण इत्युद्गमश्रुतिस्तु तेषां स्तुतिपरा । पूर्वोक्तोपपादकश्रुतिबाधात् । अतो भौतिकान्येव मन आदीनीत्येवं प्राप्ते ॥ २१ ॥

उच्यते ।

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

मनआदि अन्नादिभिर्विशेष्यते कार्यक्षमं क्रियत इति । अतो वैशेष्यादेव हेतोर्मनः प्रभृतिष्वन्नमयत्वादिवादः । ननु कथं ज्ञायते, वैशेष्याद् गौणोऽयं वाद इति । अत्रोच्यते । अथात्मनोऽन्नाद्यमागायदिति श्रुतौ प्राणः सर्वस्यान्नस्यात्ता निर्दिष्टः । स कथं तत्परिणामकार्यमिति वक्तुं युक्तम् । सृष्टौ प्रथमतो निर्दिष्टा वागादयोऽपि तत्राऽन्नभोगार्थमनुप्रविष्टाः । अतो मनःप्रभृतीनां न भौतिकत्वं, किन्तु तत्त्वान्तराण्येवैतानीति सिद्धम् । तद्वादपदवीप्साऽध्यायसमाप्तिबोधनार्था ॥ २२ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां द्वितीयाध्यायस्य चतुर्थः पादः । समाप्तश्चायं द्वितीयोऽध्यायः ॥ २ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# अथ तृतीयाध्यायस्य प्रथमः पादः ।

तृतीयेऽध्याये साधनानां विचार्यमाणत्वात् साधनेष्वन्तरङ्गत्वात् प्रथममधिकारिणः पञ्चाग्निप्रक्रमेण जन्म विचार्यते । तत्र ब्रह्मज्ञानौपयिकशरीरान्तरनिष्पत्तयेऽस्माच्छरीरात् केवल एव जीवो निर्गच्छति, संस्कृतभूतसहितो वेति संशयः । तत्राऽलौकिकेऽर्थे श्रुत्यनुसरणस्योचितत्वात्, तत्र ते देवाः श्रद्धां जुह्वतीति वाक्ये श्रद्धारूपायामेव होमश्रवणात् केवल एव गच्छतीति प्राप्ते, उच्यते ।

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

तस्य ब्रह्मज्ञानलक्षणस्य फलस्य अन्तरे या प्रतिपत्तिस्तस्यां साधनीयायां, ब्रह्मज्ञानौपयिकजन्मार्थमिति यावत्, संस्कृतैर्भूतैः सम्परिष्वक्तः सहितो रंहति गच्छति । कुतः ? प्रश्ननिरूपणाभ्याम् । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नः । असौ वा व लोक इति निरूपणम् । प्रश्नेऽपां पुरुषत्वेन कथनाद् उत्तरे चाहुतिफलत्वेन कथनात् तेषां च पाञ्चभौतिकत्वादागन्तुकभूतानां फलत्वासम्भवात् संस्कृतभूतसहितो गच्छतीति सिद्धम् ॥ १ ॥

ननु संस्कृतपञ्चभूतैः सह गमने प्रश्नोत्तरयोरपामेव ग्रहणं कुत इत्याशङ्क्याह ।

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तुशब्दोऽद्भिरेव सहित इतिशङ्काऽपाकरणार्थः । अपां ग्रहणम् ॥ २ ॥

लौकिकयुक्त्याऽप्यपामेव ग्रहणं युक्तमित्याह ।

## प्राणगतेश्च ॥ ३ ॥

तमुत्क्रामन्तमिति श्रुत्या प्राणस्य गतेरुक्तत्वाद्, आपोमयाः प्राणा इत्यपां प्राणपोषकत्वश्रवणात् प्राणो गच्छन् स्वाप्यायकं गृहीत्वा गच्छतीति युक्तमपां ग्रहणम् ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु प्राणस्य जीवसङ्गे गमनं नोपपद्यते, यत्रास्य पुरुषस्येति श्रुत्या वाक्प्राणादीनामग्निवायुभावश्रवणादित्याशङ्क्य समाधत्ते ।

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

अग्निवायुभावबोधकश्रुतेर्मुक्तविषयत्वाद् उत्क्रमणश्रुतेरमुक्तविषयत्वेन भाक्तत्वाद् गौणत्वादित्यर्थः । अतोऽग्न्यादिभावबोधकश्रुत्योत्क्रमणश्रुतेर्बाध इति ॥ ४ ॥

ननु देवाः श्रद्धां जुह्वतीतिप्रथमाहुतिबोधकश्रुतावपामश्रवणात् कथं ताभिः परिष्वक्तो गच्छतीत्याशङ्क्य परिहरति ।

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

ता एव आपः श्रद्धाशब्देनोच्यन्ते । हि युक्तम् । श्रद्धा वा आप इति श्रुतेः । किमुपचारेण ? नेत्याह । उपपत्तेः । उपक्रमोपसंहारयोरपां श्रवणान्मध्ये श्रुतः श्रद्धाशब्दोऽपि तत्परत्व एवोपपद्यते । निष्कामकर्तुः संस्कारार्थं भूतानामेव श्रद्धाविषयत्वाच्छ्रद्धापदप्रयोगः । तस्माद् भूतैः सम्परिष्वक्तो रंहतीति सिद्धम् ॥ ५ ॥

अथ सर्वे जीवाः सम्परिष्वक्ता रंहन्त्युत ज्ञानाधिकारिण एवेति विचार्यते । तत्र पञ्चाहुतिनिरूपणे नाधिकारिणः श्रुताः । अतो विशेषाश्रवणात् सर्वेषामेव पञ्चाहुतिप्रकारेण जन्मेत्याशङ्क्य परिहरति ।

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

न । इष्टादिकारिणो हि धूमादिमार्गेण गच्छन्तः प्रथमं सोमभावं प्राप्नुवन्तीत्युक्तम् । सोऽत्रापि प्रथमं सोमभाव उच्यते । अतः श्रुतिसाम्यादपीष्टादिकारिणः सम्परिष्वक्ता गच्छन्तीति सिद्धम् ॥ ६ ॥

ननु, तं देवा भक्षयन्तीति श्रुतौ तेषां सोमभावे भक्षणोक्तेः पञ्चाहुत्यभाव इत्युत्सूत्रमाशङ्क्य परिहरति ।

## भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥

वाशब्देन शङ्का निराक्रियते । तेषां भक्षणं भाक्तं गौणम् । कुतः ? अनात्मवित्त्वात् । अन्नभावे सति मुख्यं भक्षणं भवेत् । स तु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वभक्षनश्रुतेरात्मविद् एव सम्भवति, नत्वन्यस्य । तथाहि श्रुतिरेव शब्दस्य गौणभावं दर्शयति । न स वेद यथा पशुरित्यत्र यथा पशुशब्दः पोषकपर एवमत्र भक्षणं भोग्यभावपरम् । देवास्तं स्वसेवां कारयन्तीत्यर्थः ॥ ७ ॥

सफलां प्रथमाहुतिं विचार्य द्वितीयाहुतिं विचारयितुमधिकरणान्तमारभ्यते । तत्र सोमलोके कर्मफलं भुङ्क्त इति निश्चितं, किं सर्वफलं भुक्त्वा वृष्टिर्भवत्युत सदाचारार्थं सानुशय इति संशयः । तत्र सावशेषफलभोगे प्रमाणाभावादुत्तमशरीरादेव सदाचारसिद्धेर्निरनुशय एवावरोहतीति प्राप्ते, उच्यते ।

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

कृतस्य सोमभावस्यात्यये नाशे सति, अनुशयवान् अवान्तरफलसाधकसुकृतफललेशसहितो वृष्टिभावं प्राप्नोति । कुतः? दृष्टस्मृतिभ्याम् । दृष्टं हि भोगसाधकमूलधननाशेऽपि तादृशवस्त्रोपकरणादिसहित एव तत्स्थानादपगच्छति । तथाऽत्रापि सानुशयोऽवरोहति । स्मृतिश्च, यद्यत्र नः स्वर्गसुखावशेषितमित्यादि । तर्हि ताभिः परिष्वक्तः स्यादित्याशङ्क्याह । यथेतं, यथागतम् । अन्यथा प्रश्नोत्तरयोर्बाधः स्यात् । तर्ह्यवान्तरफलसाधकसहितः स्यादत आह । अनेवं च । अनुशयलेशसहितो भिन्नप्रकाराद्भिः परिष्वक्तः । चकाराद् वैराग्यसहितोऽवरोहतीति सिद्धम् ॥ ८ ॥

ननु, तद्य इह रमणीयचरणा इत्यादिश्रुतेस्तस्य रमणीयचरणादेव सम्यग्जन्मसिद्धेः किमनुशयसहभावेनेत्याशङ्क्य परिहरति ।

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

चरणश्रुतौ या योनिरुक्ता सोपलक्षणार्था, अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका । नत्वग्रिमजन्मनि समीचीनकरणे नियामिका । ततोऽनुशयोऽपेक्ष्यते ज्ञानार्थमिति कार्ष्णाजिनिमतम् । वस्तुतस्तु चरणश्रुतेः प्रकरणान्तरीयत्वात् तदनुरोधेन पञ्चाग्निविद्यायामाशङ्कानुदयात् समाधानवैयर्थ्यं नाम्ना सूच्यते ॥ ९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु चरणश्रुतेर्मार्गान्तरेऽपि पूर्वजन्मकृतकर्मज्ञापने प्रयोजनाऽभावाद् वैयर्थ्यापत्तिभिया विधायकत्वं वाच्यम् । तत एवाग्निमदेहे रमणीयत्वप्राप्तेर्नानुशयोऽपेक्ष्यते इत्याशङ्क्य परिहरति ।

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

धूमादिमार्गस्य तच्छ्रुत्यपेक्षत्वात् काम्यकर्मिणः सुकृतफलभोगानन्तरं न्यायतो दुष्कृतभोगस्योपस्थितत्वादसमीचीनयोनिप्राप्तिर्मा भवत्विति लोकन्यायं बाधित्वा रमणीयं जन्म बोध्यते । अतः सार्थकत्वान्नानुशयाभावबोधिका श्रुतिः ॥ १० ॥

मतान्तरेणानुशयपदार्थमाह ।

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते । स्वमते तु फलांश एवानुशयः ॥ ११ ॥

ननु, ये वैके चास्माल्लोकात् प्रयान्तीति श्रुतौ सर्वपदादिष्टादिकारिव्यतिरिक्तानामपि सोमभावप्राप्तिः श्रूयते । तस्मात् सर्वेषामपि सोमभावानन्तरं जन्मेति शङ्कते ।

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

परिहरति ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः शङ्कामपनुदति । इतरेषां विहितव्यतिरिक्तकर्तॄणां संयमने यमसन्निधाने सुखं दुःखं वानुभूय, आरोहावरोहौ विशेषानुभवार्थमारोहोऽनुभूयावरोहः । कुतः ? तद्गतिदर्शनात् । वैवस्वते विविच्यन्त इति श्रुतौ तेषां विलक्षणगतेर्दर्शनात् ॥ १३ ॥

स्मरन्ति च ॥ १४ ॥

व्यासादयोऽपि, यमेन पृष्टस्तत्राहमित्यादिना यमगतिं स्मरन्ति । चकाराल्लोकप्रसिद्धिः ॥ १४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अपि सप्त ॥ १५ ॥

पापभोगार्थं यमलोकगमनमवश्यमङ्गीकर्तव्यम्। यतो नरकास्तत्र सप्त सन्ति रौरवादयः ॥ १५ ॥

ननु नरकेषु चित्रगुप्तादयो यमाद्भिन्ना एवाधिकारिणः श्रूयन्ते। तेषां स्वातन्त्र्ये पक्षान्तरं स्यादित्याशङ्क्य समाधत्ते।

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

चित्रगुप्तादीनां यमायत्तत्वात् तत्रापि नरकेष्वपि तस्यैव यमस्यैव व्यापारान्न पक्षान्तरप्राप्तिलक्षणो विरोध इत्यर्थः ॥ १६ ॥

ननु पञ्चाग्निविद्यानिरूपणे, अर्चिरादिमार्गनिरूपणे च गत्यन्तरस्यानुक्तत्वान्न यमगतिरस्तीत्याशङ्क्याह।

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

तुशब्दः पक्षव्यावर्तकः। विद्यया देवयानं कर्मणा सोमभाव इति श्रुत्या तत्र तयोरेव प्रकृतत्वात् कारणत्वेन कथनान्न यममार्ग उक्तः। नैतावता तस्य बाधः। श्रुत्यन्तरसिद्धत्वात् ॥ १७ ॥

ननु, जायस्वेत्यादिश्रुत्या यस्तृतीयः प्रवाहमार्ग उक्तस्तत्रैव यममार्गः कुतो न निविशत इत्याशङ्क्याह।

## न तृतीयेऽतथोपलब्धेः ॥ १८ ॥

तृतीये प्रवाहमार्गे तथा यमलोकवत सुखदुःखोपलब्ध्यभावान्न तस्मिन्नन्तर्भाव इत्यर्थः। कीटः पतङ्गो यदि दन्दशूक इति श्रुत्या तत्तद्योनौ निर्वृतेर्विद्यमानत्वात् तथा दुःखोपभोगाभावात्, तत्तच्छरीरदुःखस्यापि सत्त्वात् तथा सुखोपभोगाभावाच्च ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

मूर्च्छादिषु यमलोकगमनसम्भाषणादिकं लोकेऽपि स्मर्यते इति ॥ १९ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



साधकान्तरम् ।

## दर्शनाच्च ॥ २० ॥

यमपुरुषाणामजामिलप्रभृतिभिर्दर्शनात् । चकारात् तेषां वाक्यादिश्रवणादपि यममार्गे न विवदितव्यम् ॥ २० ॥

ननु तृतीयाहुतौ वृष्टेरन्नमिति श्रुतम् । तत्र, लोके बीजं विना केवलवृष्टेरन्नानुपलब्धेर्बाधितमित्याशङ्क्याह ।

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य, तस्माद् यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्त इति श्रुतेः कारणभूतजलस्य तृतीयशब्दावरोधः, तृतीयाहुतौ शब्देन वृष्टिशब्देनावरोधो ग्रहणम् । तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवतीति श्रुतेर्दैवहोमात् कारणशक्तियुक्ताभ्योऽद्भ्यो बीजान्तरनिरपेक्षाभ्योऽन्नं भवतीत्यर्थः ॥ २१ ॥

ननु समानधूममार्गश्रुतौ तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवमध्वानं पुनर्निवर्तन्त इत्युक्तेः, यथेतमिति वायुर्भूत्वा धूमो भवतीत्यादि, आकाशाच्चन्द्रमसमित्युक्तत्वात् कार्यरूपवाय्वादिसहभावेन कार्यरूपवृष्टिभावः प्रतीयते, न कारणरूप इत्याशङ्क्य परिहरति ।

## साऽऽभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

सा वाय्वादिरूपापत्तिराभाव्यापत्तिरेव वाय्वादिवदाभानमेव, न तु मुख्यं वाय्वादित्वम् । कुतः ? उपपत्तेः । गौणत्वेनान्यस्यान्यभावबोधकस्य वायुर्भूत्वेत्यस्य तथैवोपपत्तेः । तस्मान्न कार्यरूपवृष्ट्यादिभावः ॥ २२ ॥

## नातिचिरेण विशेषात् ॥ २३ ॥

वृष्टेरन्नरूपता च नातिचिरेण । कुतः ? विशेषात् । अतो वै खलु दुर्निष्प्रपतरमिति श्रुत्याऽन्नभावापन्नस्यैव विलम्बश्रवणाद् व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ष्टुकालस्थितौ हि कार्यरूपवृष्टित्वम् ॥ २३ ॥

ननु, संसर्गजैः कर्मदोषैर्याति स्थावरतां नर इत्युक्तेरस्याधिकारिणोऽन्नत्वासम्भव इत्याशङ्क्याह ।

## अन्याधिष्ठितेऽपूर्ववदभिलापात् ॥ २४ ॥

अन्यैर्जीवैराधिष्ठिते व्रीह्यादावपूर्ववत्तद्भावापत्तिः । अतिथिवत् । कुतः ? अभिलापात् । व्रीहियवा ओषधिवनस्पतय इत्यादिना जगति स्थितव्रीह्यादिभावस्यैवाभिलापात् । अतोऽन्यजीवाधिष्ठितव्रीह्यादौ सम्बन्धमात्रान्नोक्तदोष इति भावः ॥ २४ ॥

नन्वन्याधिष्ठानेऽङ्गीक्रियमाणेऽधिष्ठातृजीवानामशुद्धत्वादन्नस्याशुद्धत्वे तेन योग्यदेहानुपपत्तिरित्याशङ्क्य परिहरति ।

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

न, शब्दात् । देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवतीति श्रुतेर्देवहोमात्मकसंस्कारेणैवान्नस्य शुद्धत्वान्नोक्तदोष इत्यर्थः ॥२५॥

ननु पुरुषभक्षणमात्रादेव नान्नस्य रेतोभावो दृश्यते । बाल्यकौमारवार्द्धकेषु व्यभिचारात् । अतः श्रुतस्य पुरुषं देवैरन्नहोमाद् रेतोभावस्यानुपपत्तिरित्याशङ्क्य समाधत्ते ।

## रेतःसिग्योगोऽथ ॥ २६ ॥

अत्र श्रुतौ पुरुषशब्देन मन्त्रवद्रेतःसेचनसमर्थ उच्यते । तद्योगोऽत्र विवक्षितः । कथं ज्ञायते, तत्राह । अथ । आनन्तर्यात् । पूर्वत्र देवैर्होमे कृते फलस्य जातत्वात् कथं चतुर्थ्येवाहुतिरफला स्यात् ॥ २६ ॥

फलं निरूपयति । तस्या आहुतेर्गर्भः सम्भवतीति श्रुतम् । तत्र योनावन्तःस्थितमेव फलं बहिर्निर्गतं वेति संशयः । तत्र गर्भशब्दस्यान्तःस्थितवाचकत्वाच्छरीरपरत्वे लक्षणाप्रसङ्गः । ततश्च गर्भस्यैवाहुतिफलत्वेन कथनात् षण्मासानन्तरं गर्भे ज्ञानसम्भवात् तादृशस्याधिकारिणो गुरूपसत्त्यादिकमग्रे न कर्तव्यमिति प्राप्ते, उच्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## योनेः शरीरम् ॥ २७ ॥

योनेर्निर्गतं शरीरं गर्भशब्दो बोधयति, नत्वन्तःस्थितम् । अग्रेरुत्थितस्य फलत्वात् । शरीरपदाद् वैराग्यादिसाधनसम्पत्तिः सूचिता। अग्रे ब्रह्मज्ञानान्तरङ्गसाधनं गुरूपसत्त्यादिकं तु कर्तव्यमेव । तदर्थमेवैतादृशशरीरसम्पादनात् ॥ २७ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां तृतीयाऽध्यायस्य प्रथमः पादः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै, र्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । ( मीमांसा ) १०

(४) भाष्योपबृहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः ) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः ( मीमांसा ) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । ( मीमांसा ) २

(८) ब्रह्मसूत्र भाष्यम्-वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । ( वेदान्तः ) ६

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) २

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १३

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसंग्रहः) श्रीमद्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनाराणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम्। श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च। सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम्। १०

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्तः) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्द पूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। (वेदान्तः) १

१

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। २

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम्।

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता श्रीमदाचार्य श्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदाय विदुषा रत्नगोपालभट्टेन संशोधिता। (वेदान्त) १

पत्रादिप्रेषणस्थानम्

हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालय
बनारस सिटी।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

April. 1905.




THE

# CHOWKHAMBÂ SANSKṚIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 88.

# ब्रह्मसूत्रवृत्तिः ।

## मरीचिका

श्रीव्रजनाथभट्टकृता

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा

रत्नगोपालभट्टेन संशोधिता ।

## MARÎCHIKÂ

A GLOSS ON BRAMHASUTRA

BY

BRÂJÂ NÂTH BHAṬṬA

EDITED BY

*Ratna Gopâl Bhaṭṭa.*

FASCICULUS II.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT

BENARES.

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PANDIT JYESHTHARAMA MÛKUNDJI, BOMBAY.

*Printed by Hari Dâs Gupta Proprietor*

AT THE VIDYA-VILASA PRESS.

BENARES.

*Price Rupee One.*

*Registered According to Act XXV of* 1867.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—८८

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# तृतीयाध्यायस्य द्वितीयः पादः

पूर्वस्मिन् पादे पञ्चाग्निप्रकारेण मोक्षान्तरङ्गसाधनज्ञानभक्तिसिद्ध्यर्थमधिकारिणो योग्यदेहो निरूपितः । अस्मिन् पादे मुक्तियोग्यता निरूपणीया । तत्रोपनिषत्सु स्वाप्निकसृष्टेरप्युक्तत्वात् तस्याः सत्यत्वे तत्कृतगुणदोषसम्बन्धेन मुक्तौ प्रतिबन्धः स्यादतः स्वप्नसृष्टेर्मिथ्यात्वनिरूपणेन प्रतिबन्धकत्वाभावो निरूप्यते । तत्र सूत्रद्वयेन पूर्वपक्षमाह ।

## संध्ये सृष्टिराह हि ॥ १ ॥

सन्ध्ये स्वप्ने । तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानमिति श्रुतेः । तत्र, न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इत्यादिना तन्निषेधात्, सृजत इत्युक्तेश्च ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः, तदेव शुक्रं तद् ब्रह्मेत्यादिना काठकचतुर्थवल्ल्या एके शाखिनो भगवन्तं निर्मातारं वदन्ति । यद्यपि, न तत्र रथा न रथयोगा इत्यपि ब्रह्मप्रकरणं, तथापि तत्र जीवस्यापि कर्तृत्वप्रतीतेर्निःसन्दिग्धं वचनमुदाहृतम्, एषु सुप्तेषु जागर्तीत्यादि । तत्र जागर्तीत्यनेन कर्तुरभ्रान्तत्वात् सृष्टेः सत्यत्वमुक्तम् । कामं काममित्यनेन सृष्टेरिच्छापूर्वकत्वमुक्तम् । शतायुषः पुत्रपौत्रानित्यादिना कामविषयाः पुत्रादय उक्ताः । ते च परलोकसाधका इति लोकत्रयपरिकर उक्तः । सूत्रे चकारद्वयेन कारणकार्यधर्माः सर्वे स्वप्नसृष्टावुक्ताः । यद्यपि, एषु सुप्तेष्वितिस्वप्नसृष्टिप्रतिपादकवाक्यस्य ब्रह्मप्रकरणीयत्वाज्जीवः पृथक्त्वेन स्वसृष्टिकर्ता नास्ति, तथापि जीवस्यापि भगवदभेदेन तत्सृष्टिकर्तृत्वं सम्भवति । तथा स्वप्नसृष्टेर्जीवाधिष्ठानत्वेऽपि जीवाभेदेन ब्रह्माप्यधिष्ठानं भवत्येव । सुषुप्त्युत्क्रान्त्योरेव भेदेन व्यपदेशादन्यत्र भगवदभेदेनैव जीवस्यावस्थानात् । अतः स्वप्नसृष्टेर्विद्यमानत्वात् त-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्कृतगुणदोषसम्बन्धेन जीवस्य मोक्षप्रतिबन्धः स्यादिति प्राप्ते ॥ २ ॥
उच्यते ।

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

तुः पक्षव्यावर्तकः। स्वप्नसृष्टिर्मायामात्रम् । तत्र हेतुः, कार्त्स्न्येनेत्यादिः। यद्वस्तुनो यादृग्देशकालसापेक्षं रूपं तद्रूपेण तस्याभिव्यक्तिः कार्त्स्न्येनाभिव्यक्तिस्तदभावात्। स्वप्ने पदार्थानां विशकलिततया भानात् सा सृष्टिर्मायामात्रमेव । किञ्च । यथा, ऐतदात्म्यमिदं सर्वं, तत्सत्यमित्यादिश्रुतौ प्रपञ्चस्य सत्यत्वं निरूप्यते, न तथा क्वापि स्वप्नप्रपञ्चस्य सत्यत्वं निरूप्यते। अतः प्रदर्शनार्थत्वान्मायिकत्वमेव। तस्य लोकप्रतिच्छायरूपत्वाज्जीवतां मृतानां च दर्शनमुपपद्यते । अतः स्वप्नसृष्टेर्मायामात्रत्वान्न जीवस्य तत्कृतगुणदोषसम्बन्धेन मोक्षप्रतिबन्धः । स्वप्ने दीक्षितस्यान्नभोजनादिप्रायश्चित्तं तु, वचनबलादेव तत्र तदानीं जीवस्य कर्तृत्वारोपाद्दोषसम्बन्धं कल्पयित्वा तन्निरासाय विधीयते । अन्यत्र तु स्वप्ने जीवस्य कर्तृत्वाभावान्न गुणदोषसम्बन्धः । तत्र जीवब्रह्मणोर्विद्यमानत्वाद्देवताऽऽज्ञादिरपि युक्ता । स्वप्नपदार्थानां त्वलौकिकत्वात् क्वचिन्न संवादः, क्वचिद्भगवदावेशेनेषत्संवादोऽपि भवति । अतः स्वप्नस्य मायामात्रत्वमिति सिद्धम् ॥ ३ ॥

ननु किमर्थं तर्हि स्वप्नसृष्टिरत्राह ।

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

स्वप्नः शुभाशुभफलस्य सूचको भवति । चकारेण क्वचिदाज्ञाविशेषदानमपि तत्र दृश्यते । कलिकालाद्यनुरोधात् प्रत्यक्षत आज्ञाद्यसम्भवात् । प्रातः स्वप्नपदार्थदर्शनेऽपि तत्सूचितफलस्य दृष्टत्वात्। अस्यार्थस्य युक्तत्वं हि शब्देन द्योत्यते। अत्र प्रमाणमाह । यदा कर्मसु काम्येष्वित्यादिश्रुतेः। किञ्च तद्विदः स्वप्नाध्यायविदोऽपि तस्य, आरोहणं गोवृषकुञ्जराणामित्यादिना सूचकमाचक्षते । अतः शुभाऽशुभफलसूचनार्थं स्वप्नदर्शनम् ॥ ४ ॥

ननु जीवार्थं भगवान् सृष्टिं करोति, स्वस्य सर्वा लीलाश्च तस्मै

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रदर्शयति, भगवदंशश्चायं जीवः । तथासत्येतस्य दुःखित्वाद्यनुपपत्तिरित्याशङ्क्याह ।

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

तुः पक्षव्यावर्तकः । अस्य जीवस्य पराभिध्यानात् परस्य भगवतोऽभिध्यानं स्वस्यैतस्य जीवस्य च भोगेच्छा तस्मात् तिरोहितमैश्वर्यादि । अतो भगवदिच्छया जीवस्यैश्वर्यादिषड्गुणतिरोभावाद् यथासङ्कुचं दीनत्वसर्वदुःखसहनसर्वहीनत्वजन्माद्यापद्विषयत्वदेहाद्यहम्बुद्धिविषयासक्त्यादयो भवन्ति । अतो बन्धविपर्ययावेतस्य जातौ । हि युक्तश्चायमर्थः । एकस्य जीवस्यैकांशप्राकट्येऽपि तद्धर्मदर्शनात् । आनन्दांशस्तु पूर्वमेव तिरोहितो यतो जीवभावः । अत एवास्य काममयत्वम् । आनन्दस्याकामरूपत्वात् । निद्रायाश्च सुतरां भगवद्धर्मतिरोभावकत्वम् । अतो भगवत ऐश्वर्यादिलीलासिद्ध्यर्थं जीवस्यैश्वर्यादितिरोभाव उक्तः । अत्रायं भावः । भगवतः परमकारुणिकत्वात् तदिच्छया जीवस्य बन्धोऽसम्भावितः । अतो जीवस्य भोगेच्छयैव भगवदिच्छाया उत्तेजनम् । अथवा जीवस्य भगवदभिन्नत्वाद्भगवदिच्छयैव जीवेच्छा । तयैतस्य बन्धविपर्ययौ । अत्रानन्दतिरोभावरूपोऽनादिबन्धो देहादिष्वहम्बुद्ध्यादिरूपः पूर्वसिद्ध एव । जन्यस्तु बन्धो जीवस्य भोगेच्छया भगवदिच्छाकृत इति ज्ञेयम् । तस्मान्नपूर्वोक्तो दोषः ॥५ ॥

एवं स्वमतेन जीवस्यैश्वर्यादिधर्मतिरोभावं निरूप्य मतान्तरेण निरूपयति ।

## देहयोगाद्वा सोऽपि ॥ ६ ॥

देहयोगादेवास्य सर्वतिरोभावो विपर्ययो वा । अपिशब्दादन्यदपि ज्ञातव्यम् । अस्मिन् पक्षे देहवियोग एव पुनरैश्वर्यादिप्राप्तिः । पूर्वकल्पे विद्यमानेऽपीति शेषः ॥ ६ ॥

एवं प्रसङ्गाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं वक्तुं स्थानस्वप्नाभावौ निरूपयति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

नाडीरनुक्रम्य, तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवतीति, तथा प्राज्ञेनात्मना सपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति श्रूयते । तत्र स्वप्नवत् प्रपञ्चसृष्टिमपि भगवान् मायिकीं करोति, न वेति संशयः । तत्र, एष सुप्तेषु जागर्तीत्यत्र जीवस्वापमात्रे भगवत्सृष्टेः कथनात् स्वप्नं न कञ्चन पश्यतीत्यत्र दर्शनमात्रनिषेधान्न बाह्यं किञ्चन वेद नान्तरमिति जागरणस्वप्नप्रपञ्चयोरविशेषेणादर्शनकथनात् सुषुप्तावपि प्रपञ्चनिर्माणसम्भवान्मुक्तावपि तत् स्यात् । परं सुषुप्तावियाज्ञानमात्रम् । तथा सति सुषुप्तिवत् पुनर्बन्धप्रसङ्ग इति प्राप्ते, उच्यते । नाडीष्वात्मनि च तस्य स्वप्नस्याभावः । कुतः ? तच्छ्रुतेः प्रपञ्चाभावश्रुतेः । कामनया हि प्रपञ्चनिर्माणम् । सुषुप्तेस्तु तद्धा अस्यैतदात्मकाममित्यादिनाऽकामरूपश्रवणात् । तत्र तन्न सम्भवतीत्यर्थः । नाडीष्वात्मनि चेतिकथनात् सुषुप्तेर्द्विरूपत्वं सूच्यते । अत एव बृहदारण्यकषष्ठे, ता वा अस्यैता हिता नाड्यः, तद्धा अस्यैतदात्मकाममिति भेदेन सुषुप्तिमाह । अतः सुषुप्तौ प्रपञ्चसृष्टेरभावान्न सर्वदा प्रपञ्चनिर्माणम् । तेन नोक्तदोषः ॥ ७ ॥

प्रबोधे विचार्यते । तत्र नाडीभ्यो भगवतो वा हृदयदेशं समागत्य जागर्ति, उत यत्र स्थितस्तत एवेति संशये, प्रतियोन्याद्रवति बुद्धान्तायैवेतिब्रह्मप्रकरणीयश्रुतेर्हृदयदेशमागत्य जागर्तीति प्राप्ते, उच्यते ।

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

नाडीषु सुप्तौ,अतो नाडीभ्य एव प्रबोधः । प्रतियोन्याद्रवणश्रुतिस्तु ब्रह्मप्रकरणीयत्वाद् भगवतः प्रबोधव्यवस्थामाह । तस्माद् यत्र स्थितस्तत एव प्रबोध इति सिद्धम् ॥ ८ ॥

ननु प्रियेयेव प्राज्ञेनात्मना परिष्वक्तस्य प्रबोधेन ज्ञाने जाते मुक्तिरेवस्यान्न पुनरागमनम् । देहनिर्वाहार्थं तु भगवदिच्छयाऽन्यो जीवः समायाति । नाडीभ्यः प्रबोधे तु मुक्त्यसम्भवात् स एव जीवः समायाति । तथाच भगवति सुप्तस्य तत एव मुक्त्यसम्भवान्मोक्षार्थं प्रयत्नो व्यर्थ इत्याशङ्क्य परिहरति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

तुः शङ्कानिरासे । भगवतः प्रबोधे स एव । कुतः? कर्मानुस्मृतिशब्दविधिभ्यः । स्वामिकृतस्य लौकिककर्मणः समापनं दृश्यते । अतः स एवेति जानीमः । अनुस्मृतिरप्यनुभवितुरेव नान्यस्य सम्भवति । शब्दश्च पुण्यो वै पुण्येन कर्मणेत्यादिः । विधयश्च, श्वोभूते ब्रह्माणं वृणीत इत्याद्या अन्यस्यानुपपद्यमानाः स एवेति ज्ञापयन्ति । अतः पूर्वपक्षयुक्तीनां दुर्बलत्वात् स एव प्रतिबुध्यत इति सिद्धम् ॥९॥

ननु यत्र कर्मानुस्मृत्यादिहेतवो न सम्भवन्ति मुग्धादिषु तत्र स एवेत्यत्र नियामकाभावादन्यो भविष्यतीत्याशङ्क्य परिहरति ।

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

मुग्धे मुग्धभावे अर्द्धसम्पत्तिरेव, न सर्वा । मुग्धस्य यागादावनधिकारात् । लौकिकव्यवहारस्याप्यपूर्वस्यासाधनत्वाज्जीवनाधिकारप्राप्तकर्ममात्रकरणादर्द्धसम्पत्तिरेव ज्ञेया । परिशेषात् । स एव वा, न वेतिनिश्चयप्रमाणाभावात् सन्देहोऽवशिष्यते । अत्र जीवावस्थानामेव विचार्यत्वात् प्राणायनविघातकृता मूर्च्छा नेह विचार्यते । अत एक एव जीवः स्वप्नादिदोषसम्बन्धरहितः पञ्चाग्निसाधितदेहयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति सिद्धम् ॥ १० ॥

अथवा ज्ञानविषयनिर्णयाय ब्रह्मस्वरूपं विचार्यते । तत्र प्रथममन्योऽन्यं विरुद्धवाक्यानां निर्णयः क्रियते । तत्र पूर्वाध्यायद्वयेन समन्वयविरोधः परिहृतः । तथा ब्रह्मणि धर्मविरोधः परिहर्तव्यः अन्यथा वेदान्तानामबोधकत्वं प्रसज्ज्येत । तत्र विरुद्धानां स्वगतधर्माणामग्रिमे पादे विचारः । जडजीवधर्मत्वेन प्रतीतास्तत्र विचार्यन्ते । तत्र क्वचिज्जडजीवधर्मा भगवति बोध्यन्ते, सर्वकर्मा सर्वकाम इत्यादिना । क्वचित्त्वस्थूलादिवाक्ये प्रापञ्चिकधर्मा निषिध्यन्ते। नच सर्वकामादयो जीवधर्मा नेति वाच्यम् । तेषां जीवगतत्वेन प्रतीतेः । नच ते धर्माः कारणत्वेन ब्रह्मणि सन्तीति वाच्यम् । नेतरोऽनुपपत्तेरित्यादिना सर्वत्र जीववैलक्षण्यस्योक्तत्वाद् ब्रह्मणि तद्धर्माणां निषेधाच्च । एवं वेदान्तेषु वाक्यानां परस्परविरोधे प्राप्ते केषांचिन्मतेनाविरोधमाशङ्क्य परिहरति ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

सर्वत्र कारणत्वेन भगवतो विद्यमानत्वादस्थूलेऽस्थूलोऽनणावनणुरुच्चावचकर्तर्युच्चावचकर्ता उच्चावचकामे उच्चावचकामः पृथिव्यां गन्धो जलादावगन्धः । एवं स्थानतः परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते । अपिशब्देनावच्छेदभेदेनाचिन्त्यसामर्थ्याद्वोभयलिङ्गत्वं सम्भवतीति संगृह्यते । तत्र, कुतः ? सर्वत्र हि । सर्वत्रैव हि ब्रह्मवाक्येष्वेतादृशमेव ब्रह्मस्वरूपं निरूप्यते । अतः स्थानभेदेनोभयवाक्यसमाधानं न सम्भवतीत्यर्थः । ब्रह्मवाक्यानामनुवादकत्वे वैयर्थ्यात् स्वरूपप्रतिपादकत्वं युक्तमिति हिशब्दार्थः । अचिन्त्यसामर्थ्याङ्गीकारे ज्ञानानुदयप्रसङ्गः । अत एतन्मतानुसारेण स्थानत उभयलिङ्गवाक्यानां विरोधो न परिहर्तुं शक्यः ॥ ११ ॥

प्रकारान्तरेणाविरोधमाशङ्क्य परिहरति ।

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

भेदात् प्रपञ्चधर्मविशिष्टं ब्रह्म भिन्नं, तद्धर्माभावविशिष्टं च भिन्नमिति सर्वत्र कारणकार्येषु भेदाङ्गीकारान्न पूर्वोक्तो विरोध इति चेन्न मधुब्राह्मणे, अयमेव स योऽयमिति प्रत्येकमभेदवचनान्नानेनाऽपि प्रकारेण विरोधपरिहारः ॥ १२ ॥

## अपि चैवमेके ॥ १३ ॥

एके शाखिन एवं भेदनिषेधेनाभेदमेव वदन्ति । नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति । अत्रेवशब्दो बहुस्यामितीच्छया प्रतीतस्य भेदस्य व्यावृत्त्यर्थः ॥ १३ ॥

अतो भेददर्शनस्य प्रत्युत निषिद्धत्वात् तदङ्गीकारेण विरोधपरिहारासम्भवादुपनिषद्वाक्येषु परस्परं विरोधे प्राप्ते, एकदेशिमतेन परिहारमुच्यते ।

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वं, तद्युक्तं रूपवज्जगत् । ब्रह्म तु तद्विलक्षणम् । ननु जगतः कार्यत्वात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कार्यकारणयोरवैलक्षण्यमपि स्यादित्याशङ्क्याह । तत्प्रधानत्वाद् ब्रह्मस्वरूपप्रतिपादकवाक्येषु ब्रह्मणः प्रधानत्वान्मुख्यत्वात् तस्यैव निरूपणमुचितं, नतु जगतोऽपि । अतो ब्रह्मणो जगद्विलक्षणत्वात्तद्धर्माणां निषेध उचितः । सर्वकर्मादयस्तु जगद्धर्मा उपचारादुच्यन्ते । अत्रारूपमितिवक्तव्येऽरूपवदिति भिन्नवत्कथनं सर्वकर्मादीनां जगद्धर्माणामेवैवं निर्णयो, नतु प्रशासनाद्यसाधारणधर्माणाम् । तेषां भगवद्धर्मत्वे विरोधाभावात् । अतः प्रपञ्चवत्तद्धर्माणामपि कार्यत्वाद्भगवत्त्वं, न भगवद्धर्मत्वमिति । एवं ब्रह्मस्वरूपनिरूपकवाक्यानां मुख्यतया तन्निरूपकत्वं धर्मप्रतिपादकानां तूपचारेण तन्निरूपकत्वमित्येकदेशिमतेन विरोधपरिहारः ॥ १४ ॥

नन्वेवं निर्द्धर्मके ब्रह्मणि सर्वव्यवहाराभावे शास्त्रवैफल्यं, तं त्वौपनिषदं पुरुषं पृच्छामि, यतो वाचो निवर्तन्त इति वाक्यानां विरोधश्चेत्याशङ्क्याह ।

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा सौरः प्रकाशो व्यवहार्योऽव्यवहार्यश्च स्वतः स्थापयितुं सम्पादयितुं च न शक्यते । सूर्योदये मेघाद्यभावे च व्यवहर्तुं शक्यते। तथा ब्रह्मापि लौकिकेन्द्रियैर्व्यवहर्तुं न शक्यते । भगवत्कृपया तत्सन्निधाने तु व्यवहर्तुं शक्यते । उभयथा श्रुतिर्निरूपयतीत्यर्थः । कथमेतज्ज्ञायते, तत्राह । अवैयर्थ्यात् । अन्यथा ब्रह्मप्रतिपादकं शास्त्रं व्यर्थं स्यात् । चकारेण, आसीनो दूरं व्रजति, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादीनामलौकिकभगवद्धर्माणामकार्याणां स्वतःसिद्धानां विरोधो नास्तीत्युच्यते । तस्माद्व्यवहार्येऽपि ब्रह्मणि न शास्त्रवैफल्यम् ॥ १५ ॥

ननु श्रुत्युक्तानां दर्शनश्रवणादिधर्माणामकार्यत्वकल्पनापेक्षायामलौकिकानीन्द्रियाणि कल्पनीयानि । तथा सत्यकारणकार्यत्वपरिहारेऽपि पश्यत्यचक्षुरितिश्रुतिविरोध इत्याशङ्क्य परिहरति ।

## आह च तन्मात्रम् ॥ १६ ॥

यथा सैन्धवघनोऽनन्तरोऽबाह्य इत्यादिना श्रुतिस्तन्मात्रं प्रज्ञानघनमात्रमाह । अतः स्वरूपातिरिक्तेन्द्रियाणामभावाद् वेदात्मनिःश्वा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ससमुत्थानादिक्रियाणामपि तत एव सम्भवात् सर्वाकारस्वरूपात्मकत्वस्याङ्गीकारान्नेन्द्रियादिकल्पनया श्रुतिविरोधः शङ्क्यः। चकारेण, सर्वेन्द्रियविवर्जितमिति स्मृतिरपि संगृहीता ॥ १६ ॥

ननु ब्रह्मणः समवायनिमित्तरूपेण जगत्कारणत्वात् कारणधर्माणामेव कार्ये दर्शनात् कामादिधर्माणां च श्रुत्योक्तत्वाद् ब्रह्मणि सत्त्वमङ्गीकर्तव्यम् । तथाच निषेधकश्रुतिविरोध इति प्रकारान्तरेणाशङ्क्य परिहरति ।

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति श्रुतिरेव, अथात आदेशो नेति नेतीत्यादिना ब्रह्मणि जडजीवधर्माणामभाव इति । अग्रे, अन्यत्परमस्तीत्यनेन ब्रह्मणः प्रपञ्चातिरिक्तकथनात् प्रपञ्चधर्माणां तत्र कथनमौपचारिकमेव युक्तम् । श्रुतेरन्यार्थत्वनिराकरणाय स्मृतिसम्मतिमाह । अनादिमत्परं ब्रह्मेत्यादि स्मर्यतेऽपीत्यर्थः । अतः प्रपञ्चधर्माणामुपचाराद् ब्रह्मणि कथनं युक्तम् ॥ १७ ॥

अत्रैव निदर्शनमाह ।

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

अत एवेमं निर्णयमाश्रित्य, समः प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैरित्यादिना निरुपमस्य भगवत उपमाकथनम् । नह्येतत् तत्तद्धर्मसम्बन्धं विनोपपद्यते । स्वतन्त्रतादृशधर्मवत्त्वस्य ब्रह्मणि वक्तुमयुक्तत्वात् । नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते । सूर्यकादिवत् । सूर्येण सहितं कं जलं सूर्यकम् । यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्, एकधा दशधा चैव दृश्यते जलचन्द्रवदित्यत्र प्रतिबिम्बसहितस्य जलस्योपमानत्वम् । तथा, समः प्लुषिणेत्याद्यपि भगवतः सर्वकारणत्वेन तत्तद्धर्मसम्बन्धाद् बोध्यं, नतु स्वातन्त्र्येण भगवति ते धर्माः सम्भवन्ति । चकारस्त्वेवं विरोधाभावो वाच्योऽधिकरणं चैकदेशिनः सम्पूर्णमिति बोधनार्थः ॥ १८ ॥

अतो जडजीवधर्माणां भगवत्युपचारात् कथनं, निषेधस्तु मुख्य इत्येकदेशिमतं दूषयति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

तुः पूर्वमतव्यावृत्त्यर्थः । न तथात्वं, ब्रह्मण उपचारेण जडजीवसम्बन्धात् सर्वकामत्वादिकं न सम्भवति । कुतः ? अम्बुवदग्रहणात् । यथा स्वच्छमम्बु प्रतिबिम्बं गृह्णाति, तथा धर्माः सर्वकामत्वादयो धर्मिणं भगवन्तं न गृह्णन्ति । स्वातन्त्र्यापत्त्या धर्मव्याघातात् । सर्वाधारत्वेन ब्रह्मणस्तद्धर्मवत्त्वं तु स्वाभ्युपगमविरुद्धम् । नच वेदे भ्रमाद्धर्मकल्पनं सम्भवति । अप्रतारकत्वात् सर्वज्ञत्वाच्च । अतः सर्वकामादयो ब्रह्मधर्माः स्वाभाविका एव, नतूपाधिसम्बन्धादौपचारिकाः ॥ १९ ॥

सिद्धान्तेन विरोधं परिहरति ।

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

यथैकस्यैवाकाशस्य करकादिष्वन्तर्भावाद् वृद्धिह्रासभाक्त्वमेवमेवोभयसामञ्जस्याद् एवं तत्तदनुप्रवेशाद् ब्रह्मणोऽपि सर्वकामादयः सम्भवन्ति । नचैवं धर्माणामौपाधिकत्वप्रसङ्गः । जपाकुसुमलौहित्यवदन्यधर्मत्वाभावाद् ब्रह्मधर्माणामेवान्यत्र प्रतिभानात् ॥ २० ॥

अत्र हेत्वन्तरमाह ।

## दर्शनाच्च ॥ २१ ॥

भगवति सर्वे विरुद्धा धर्मा दृश्यन्ते, अल्पपरिमाणं, महत्परिमाणम् । एवं बाल्यकिशोरावस्थास्वपि ज्ञेयम् । नहि दृष्टेऽनुपपन्नं नाम, व्याघातात् । चकारेणोलूखलबन्धनादौ प्रत्यक्षेणैवोभयधर्मवत्त्वेन दर्शनं संगृह्यते । अतस्तद्वस्त्वेतादृशमिति मन्तव्यम । ततः श्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेर्न कश्चिद् विरोधः शङ्क्यः ॥ २१ ॥

एवं वस्तुस्वरूपविचारेण परमार्थतो विरोधं परिहृत्य युक्त्या परिहरति ।

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## च भूयः ॥ २२ ॥

प्रकृतं यदेतावत्त्वं प्राकृतधर्मवत्त्वं तदेव प्रतिषेधति श्रुतिः, नत्वलौकिकसर्वकामवत्त्वादिकम् । प्रतीतस्यैव प्रतिषेध्यत्वादप्रतीतस्य चालौकिकधर्मवत्त्वस्य प्रतिषेधायोगात् । अस्थूलादिवाक्यैर्ब्रह्मणो जगद्वैलक्षण्यमेवोच्यते । नतु वेदोक्तधर्मा निषिध्यन्ते । अत्र प्रमाणमाह । ततो ब्रवीतीत्यादि । यत्र वाक्ये धर्मान् निषेधति, पुनस्तत्रैव तान् विधत्ते, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वानित्यादौ । तस्माल्लौकिकधर्माणामेव प्रतिषेधो, न त्वलौकिकानामपीति ज्ञेयम् ॥ २२ ॥

एवं शब्दबलविचारेण विरोधं परिहृत्यार्थबलविचारेण तत्परिहारायाधिकरणान्तरमारचयति । तत्र, न चक्षुषा गृह्यते, कश्चिद्धीरः प्रत्यगात्मानमैक्षत्, नापि वाचा, सर्वे वेदा यत्पदमामनन्ति, अस्पर्शमगन्धमरसं, सर्वरूपः सर्वगन्धः सर्वरस इत्यादिविरुद्धवाक्यानां दर्शनाद् वस्तुनो द्वैरूप्यासम्भवात् स्वतःप्रमाणभूतवाक्यद्वये एकस्य प्रामाण्यमन्यस्योपचरितार्थत्वं कल्प्यम् । तत्र कस्योपचरितार्थत्वमितिजिज्ञासायां प्रत्यक्षानुरोधेन पूर्वपक्षमाह ।

## तदव्यक्तमाह हि ॥ २३ ॥

तद् ब्रह्माव्यक्तमेव भवितुमर्हति । यतः, आह हि श्रुतिप्रत्यक्षाभ्याम् । नेति नेतीत्यात्माऽग्राह्यो नहि गृह्यत इति । न हि गृह्यत इत्यनुभवं श्रुतिराह । नहि चक्षुषा वा मनसा वा कस्यापि दर्शनमस्ति । सर्वरूपत्वे तु ब्रह्मणः सर्वेषां दर्शनं स्यात् । अतो धर्मप्रतिपादकानि वाक्यान्युपचरितार्थान्येवेति प्राप्ते ॥ २३ ॥

उच्यते ।

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपिः पूर्वपक्षिगर्हणे, यतोऽसौ मूर्खः।संराधने सम्यक्प्रकारकसेवायां भगवत्तोषे जाते द्रष्टुं शक्यते । श्रद्धाभक्तिध्यानयोगादवेहि, भक्त्या त्वनन्ययेत्यादि, ज्ञातुं द्रष्टुं च तत्वेनेत्युक्तेः । किञ्च, ततस्तु तं पश्यते निष्कलं ध्यायमानः, अनेकबाहूदरवक्त्रनेत्रं पश्या-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मीत्यादिना सगुणनिर्गुणं च रूपं दृश्यत्वेनोच्यते । अतः प्रत्यक्षानुमानाभ्यां संराधकस्य स्वानुभवो, भुवादीनामनुमापकत्वात् तज्ज्ञानतमनुमानं ताभ्यां, श्रुतिस्मृतिभ्यां वा ब्रह्म साकारमनन्तगुणपूर्णं चेति, नान्यत्किमिति ज्ञेयम् ॥ २४ ॥

इममेव सिद्धान्तं प्रकारान्तरेण स्थिरीकर्तुमधिकरणान्तरमारचयति । तत्र सूत्रद्वयेन पूर्वपक्षद्वयमाह ।

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

ननु प्रत्यक्षानुरोधेन ब्रह्मण उभयरूपत्वं न सम्भवति । अतस्तत्प्रतिपादकवाक्यानां वस्तुशक्त्या निर्णय उचितः । तत्र यथा प्रकाशजलसुवर्णानां सूर्यचन्द्रमणिप्रकाशादिषु हिमतप्तकुण्डादिजलेषु सुवर्णे चानेकविधरूपस्य दृश्यभवनेऽपि नानेकविधत्वमङ्गीक्रियते, एकरूपत्वेनैव तेषां निर्णयात् । तथा ब्रह्मणोऽप्यवैशेष्यमङ्गीकर्तव्यम् । ननु साक्षात्कारानुरोधेन ब्रह्मणि तावन्तो धर्मा अङ्गीक्रियन्त इत्याशङ्क्याह । प्रकाशश्च कर्मणि । भगवतः प्रकाशस्तु तपःप्रणिधानादिकर्मणि भवति । तत्र तु भक्तेच्छानुरोधाद् यथाकामं प्रकटीभवतीति स प्रकाशो वस्तुनिर्णायको न भवतीत्यर्थः । चकारात्प्रकाशोऽन्यथा प्रकाशश्च भवति, तदप्यभ्यासात् । बहुवारमनेकरूपेण प्रकटीभवति । अतोऽनेकरूपदर्शनं न वस्तुनिर्णायकं भवतीति भावः ॥ २५ ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

अतोऽभ्यासादनन्तेन रूपेणाविर्भावः । नह्येकं वस्तु स्वतोऽनेकविधं भवति । तथा सति लिङ्गं विग्रह एव भवति, न स्वरूपम् । हीयनेन, यद्धियात उरुगाय विभावयन्तीति प्रमाणं सूचितम् । अतः श्रुतेः प्रत्यक्षस्य वा निर्णायकत्वान्निर्द्धर्मकमेव ब्रह्मेति प्राप्ते ॥२६॥

उच्यते ।

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तुः पक्षव्यावर्तकः । नहि ब्रह्मस्वरूपनिर्णयो युक्त्या कर्तुं शक्यः । शब्दैकगम्यस्य ब्रह्मणः स्वरूपनिर्णयः शब्देनैव भवति । अत उभयव्यपदेशाद् निर्गुणत्वेनानन्तगुणत्वेन सर्वविरुद्धधर्माश्रयत्वेन व्यपदेशादुभयरूपं ब्रह्म ज्ञेयम् । तदुभयमपि वास्तविकं नित्यम् । गुणानामपि तदात्मकत्वेन निर्गुणत्वम् । आश्रयाश्रयिभावरूपेण स्फुरणात् सविशेषमपि । नन्वेकस्य कथमनेकधा भानं, तत्राह । अहिकुण्डलवत् । यथैक एव सर्प ऋजुरनेकाकारः कुण्डलश्च भवति, तथा ब्रह्माप्यचिन्त्यशक्त्या सर्वप्रकारं भक्तेच्छया तथा स्फुरति।अतः प्रमाणसिद्धसकलविरुद्धधर्माश्रये भगवति, न क्वापि श्रुतिरुपचरितार्थेति सिद्धम् ॥ २७ ॥

एवं धर्मिस्वरूपविचारेण ब्रह्मणो निर्धर्मकत्वं सधर्मकत्वं च स्थापयित्वा धर्मस्वरूपविचारेणेदमेव स्थापयितुमधिकरणान्तरमाह। तत्र धर्माः, किं ब्रह्मणो भिन्नास्तत्कार्यरूपा उत ब्रह्मैवेति संशये, लोके कार्यस्यैव घटरूपादेस्तद्धर्मत्वव्यपदेशात् तन्नित्यतायां प्रमाणाभावात् स्वाभाविकत्वेन नित्यत्वोक्तौ, एकमेवाद्वितीयमितिश्रुतिविरोधाच्च धर्माः प्रपञ्चवत् कार्याः, तथाच ब्रह्म निर्धर्मकमेवेति प्राप्ते, उच्यते ।

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

वाशब्दः पूर्वपक्षव्यावर्तकः । यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः पृथक्स्थित्यभावात् । नापि प्रकाशः सूर्य एव । सूर्यस्य प्रकाशभेदेन प्रतीतेः । अतस्तद्वस्त्वेतादृशमिति मन्तव्यम् । तत्र हेतुः । तेजस्त्वात् तेजःशब्दवाच्यत्वाद्, अथ यदतः परो दिवो ज्योतिरित्यादिना । अतो ब्रह्मधर्माणामपि चिद्रूपत्वेन स्वरूपानतिरेकान्न कार्यत्वेनानित्यत्वमिति ज्ञेयम् । तस्माद् यथाश्रुतमेव ब्रह्म सधर्मकं निर्धर्मकं चेति सिद्धम् ॥ २८ ॥

पूर्वोक्तैकदेशिमतेनाप्युभयवाक्यसमाधानमाह ।

## पूर्ववद्वा ॥ २९ ॥

अथवा, अरूपवदेव हीत्यादिपञ्चसूत्र्या यः पूर्वमेकदेशिमतेन सिद्धान्त उक्तो, निर्धर्मकमेव ब्रह्म सर्वकामादिधर्मनिरूपणं तूपचारादिति तद्वद्वा ब्रह्म ज्ञेयम् । अत्रायमाशयः । उपपत्त्योत्पत्त्या च द्वेधा ब्रह्मस्वरूपविचारः। तत्र सिद्धान्तिमतेनोपपत्त्या विचारे धर्मिग्राहक-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रमाणभूतैरुपनिषद्वाक्यैर्यादृशं ब्रह्म बोध्यते सधर्मकं निर्द्धर्मकं च तादृशमेव तद्वस्तूपपद्यते। अन्यथाकल्पनस्य कल्पनामात्रत्वात्। एकदेशिमतेन सूत्पत्त्या विचारे प्रथमं ब्रह्म निर्द्धर्मकमेव। ततो, बहु स्यामिति सृष्टीच्छया प्रथमं ब्रह्म स्वधर्मरूपेण भवति। ततः क्रियादिरूपेण प्रपञ्चरूपेण चेति। अनया रीत्याऽपि ब्रह्मस्वरूपमुभयात्मकं सिद्ध्यति। अन्यथैकतरश्रुतिबाधः स्यात्। धर्माणां नित्यत्वं तु ब्रह्मात्मकत्वादेव ज्ञेयम्। अयं भावः। निर्गुणमेव ब्रह्माङ्गीकर्तव्यम्। अत्र न विवदामः। किन्तु केवलनिर्गुणत्वे सृष्टिप्रक्रियाबन्धमोक्षव्यवस्थादीनामनुपपत्तिरस्ति। ननु प्रतिबिम्बेनैव समाधेयमिति चेदुच्यते। नहि निर्द्धर्मकस्य प्रतिबिम्बं सम्भवति। लोके कुत्रापि तथाऽदर्शनात्। तस्मादचिन्त्यतदभिन्नशक्त्या सगुणमपि स्वरूपं वास्तविकमेवाङ्गीकर्तव्यम्। तदेव सृष्टिसमये गुणानाविष्कृत्य सृष्टिं करोति। ननु सधर्मकत्वे, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गः स्यादिति चेदुच्यते। गुणाः स्वस्वरूपान्नात्यन्तं भिन्नाः। तस्मात् तेषामपि तत्स्वरूपत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि सुस्थैव। अतो न कोऽपि दोषः शङ्क्यः। मतद्वयमपि सूत्रकारसम्मतमित्युपन्यस्तम्॥ २९॥

एकदेशिमते उपपत्त्यन्तरमाह।

## प्रतिषेधाच्च॥ ३०॥

एकमेवाद्वितीयं ब्रह्मेतिश्रुतावेकमेवेत्येवकारेणान्यनिषेधप्राप्तावद्वितीयमितिप्रतिषेधाद्धर्मप्रतिषेधोऽपि गम्यते। ऐक्षतेतिकथनाद्धर्माणां पुनरभिव्यक्तिः। चकारेणैकब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञा संगृहीता। अतो ब्रह्मणि न कोऽपि विरोधोऽस्तीति सिद्धम्॥३०॥

एवं धर्मधर्मिविरोधं परिहृत्य ब्रह्मणो धर्म्यन्तरपरिहारायाधिकरणान्तरमारभते। तत्र पूर्वपक्षः।

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥ ३१॥

अतो ब्रह्मणोऽपि परम् अन्यदुत्कृष्टमस्ति। तत्र चत्वारो वैदिकहेतवः। अथ य आत्मा स सेतुर्विधृतिरिति सेतुव्यपदेशः। तत्र पाप्मवितरणार्थं सेतुव्यपदेशात् तरणानन्तरं प्राप्यस्यैव फलत्वात् फलात्मकमन्यत् किञ्चिदस्तीति ज्ञायते। तथा, यावान् वायमाकाशस्तावा-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नैषोऽन्तर्हृदय आकाश इत्युन्मानव्यपदेशः। तेन परिच्छेदो निरूपितः। तथा, उभावस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्याधाराधेयसम्बन्धो निरूपितः। तथा, य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यत्रादित्याक्षिस्थितयोः पुरुषयोः परस्परं धर्मातिदेश उक्तो धर्मिभेद एव सम्भवति। धर्म्यैक्ये तु स एवायमित्युच्येत। अतोऽस्य देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेदरहितं फलरूपमन्यद् किञ्चिदस्तीति प्राप्ते ॥ ३१ ॥

उच्यते ।

## सामान्यात्तु ॥ ३२ ॥

तुः पक्षव्यावर्तकः। ब्रह्मणि संसारसागरोत्तरणोपायत्वसामान्यात् सेतुव्यपदेशः। निर्लेपायाकाशव्यपदेशः। कामादिदोहाय चतुष्पात्त्वमुक्तम्। अमृतत्वाय षोडशकलत्वं निरूपितम्। अतुलभत्वाय सम्बन्धकथनम्। दिव्यत्वज्ञापनायाक्षिस्थिते आदित्यधर्मातिदेशः। अतो गुणार्थमेव सेतुत्वादिवचनं, नतु तद्गतदोषार्थम्। अतो नातः परमन्यदस्तीति मन्तव्यम् ॥ ३२ ॥

तर्ह्यन्यसमानत्वेन कथनं किमर्थमित्याशङ्क्याह ।

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

तथा व्यपदेशो बुद्ध्यर्थो ज्ञानार्थः। तथोपासनार्थमित्यर्थः। अयुक्तत्वमाशङ्क्य दृष्टान्तमाह। पादवदिति। यथा भूतादीनां पादत्वज्ञानमुपासनार्थं तथेदमपीत्यर्थः ॥ ३३ ॥

ननु स एवायमित्यतिदेशोऽप्यक्षिस्थितस्य दिव्यत्वसिद्धौ धर्मातिदेशस्य वैयर्थ्यमित्याशङ्क्य, तथोक्तौ समानधर्मज्ञानं न स्यादित्यत्र हेतुमाह ।

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

यथा, यदादित्यगतं तेज इतिवाक्यादादित्यचन्द्राग्निगततेजसामैक्ये स्थानभेदात् समानधर्मवत्त्वं नास्ति, तथा प्रकृते तथोक्तौ दिव्यसिद्धावपि धर्मभेदः स्यादतो धर्मातिदेशः। आदिपदाद् यथैकस्यैव कालस्योपाधिविशेषसम्बन्धादुत्तरायणादेरुत्कृष्टधर्मवत्त्वं, दक्षि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



णायनाद्यपकृष्टधर्मवत्त्वं, तथेत्यपि दृष्टान्तः संगृह्यते ॥ ३४ ॥

किञ्च ।

## उपपत्तेश्च ॥ ३५ ॥

ब्रह्मणः परस्य निखिलप्रमाणविरोधादनुपपत्त्या ब्रह्मैव परमकाष्ठापन्नं फलरूपं चेत्युपपन्नमित्यर्थः ॥ ३५ ॥

## तथाऽन्यप्रतिषेधात् ॥ ३६ ॥

न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुत्याऽन्यप्रतिषेधादन्यकल्पना निर्मूला । सेतुत्वादिकथनं तूक्तमेव ॥ ३६ ॥

अथ प्रकरणमुपसंहरन् फलितार्थमाह ।

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन ब्रह्मणोऽन्यस्य परत्वनिरासेन, आयामशब्दादिभ्यः, आकाशवत् सर्वगतश्च नित्यः, ज्यायान् दिवो ज्यायानाकाशात् तेनेदं पूर्णं पुरुषेण सर्वं, सर्वतःपाणिपादमित्यादिव्यापकत्ववाचकश्रुतिस्मृतिवाक्येभ्यः साक्षात्सर्वगतप्रतिपादकेभ्य एव सर्वगतत्वं सिद्ध्यति, नतु काणादानामिव कर्तृत्वाद्यनुपपत्त्येत्यर्थः । तस्माद् ब्रह्मणि श्रुतिरेव प्रमाणमन्यत्त्वभ्युच्चयमात्रपर्यवसन्नं, सिद्धसाधनत्वादिति भावः ॥ ३७ ॥

एवं भगवतः सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा फलप्रेप्सूनां भजनप्रयोजकं फलदातृरूपं निरूपयति ।

## फलमत उपपत्तेः ॥ ३८ ॥

अत ईश्वरादेवैहिकं पारलौकिकं वा फलं भवति । उपपत्तेः, सर्वस्य वशी सर्वस्येशान इति श्रुतौ वस्तुमात्रेशितृत्वोक्त्या तस्य फलदातृत्वोक्तेः । अन्यस्य त्वन्यदीयपदार्थदाने सामर्थ्यासम्भवान्न दातृत्वं सम्भवतीति भावः ॥ ३८ ॥

## श्रुतत्वाच्च ॥ ३९ ॥

स वा एष महानज आत्माऽन्नादो वसुदान इत्यादिश्रुतौ,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चकारेण, सुखं दुःखं भवो भाव इत्यारभ्य, भवन्ति भावा भूतानां मत्त एव पृथग्विधा इति स्मृतौ भगवतः सर्वफलदातृत्वं श्रूयतेऽपीत्यर्थः ॥ ३९ ॥

अत्र कर्मवादी प्रत्यवतिष्ठते ।

## धर्मं जैमिनिरत एव ॥ ४० ॥

अत एव, श्रुतेत्यादिहेतोरुपपत्तेश्च जैमिनिः कर्मवादी धर्मं यागादिकं फलदातृत्वेन मनुते । अयं भावः । कर्मणः फलदातृपक्षेऽप्युपपत्तिश्रुती तुल्ये । एवञ्च भगवतोऽपि फलादिदाने कर्मसापेक्षत्वे असमर्थत्वम् । नैरपेक्ष्ये तु कर्मविधिवैयर्थ्यं, वैषम्यनैर्घृण्यप्रसक्तिश्च । अतः कर्मणैव फलम् । ईश्वरस्य फलदातृत्वबोधकवाक्यानि त्वर्थवादत्वेन नेयानीति प्राप्ते ॥ ४० ॥

उच्यते ।

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुः पूर्वपक्षनिरासे । बादरायण आचार्य इतः पूर्वमुक्तमीश्वरमेव फलदातृत्वेन मनुते । कुतः? हेतुव्यपदेशात् । एष एव साधु कर्म कारयतीति श्रुतौ फलदानेच्छयेश्वरस्यैव कर्मकारणे हेतुत्वेन कथनात् । वैषम्यनैर्घृण्यदोषस्त्वात्मसृष्ट्या परिहरणीयः । कर्मद्वारा फलदानान्न कर्मविधिवैयर्थ्यम् । ननु स्वतः फलदानसमर्थस्येश्वरस्य फलार्थं कर्मकारणे को हेतुः, कार्यवैचित्र्यं च कथमित्याद्याशङ्का तु, कृतप्रयत्नापेक्षस्त्विति सूत्रे निरस्ता । अतः फलार्थिभिरपि भगवानेव सेव्यो नान्य इति सिद्धम् ॥ ४१ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां तृतीयाध्यायस्य द्वितीयः पादः ॥

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# तृतीयाध्यायस्य तृतीयः पादः ।

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्वैर्वेदान्तैरनेकरूपनिरूपकैः प्रत्ययो ज्ञानं यस्य तादृशं ब्रह्म । कुतः । चोदना विधिवाक्यं, तस्याविशेषात् । यथा ज्योतिष्टोमे शाखाभेदेन धर्मभेदेऽपि ज्योतिष्टोमविधेरेकरूपत्वात् तदेकत्वं, तथाऽत्रापि शाखाभेदेष्वनेकधा एकमेव ब्रह्म निरूप्यते । शाखान्तरोक्तधर्माणामसति बाधे उपसंहार्यत्वात् ॥ १ ॥

## भेदान्नेति चेदेकस्यामपि ॥ २ ॥

ननु धर्मभेदादेकत्वं नास्तीति चेत् तत्राह । एकस्यामपि, यथैकस्यामप्यतिरात्रव्यक्तौ षोडशिग्रहणाग्रहणरूपधर्मभेदेऽप्यतिरात्रं न भिद्यते, तथाऽत्रापि धर्मभेदो धर्मिभेदको नेत्यर्थः ॥ २ ॥

नन्वेवं सति शाखान्तरीयधर्मा उपसंहर्तव्याः स्युः । तथाऽवतारान्तरेऽवतारान्तरधर्मा अपीत्याशङ्क्याह ।

## स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायस्य वेदस्य सम्बन्धी यः समाचारः सोमयागाद्यात्मकस्तस्मिंस्तथात्वेन स्वस्य शाखोक्तप्रकारेण नियमोऽन्यूनाधिककरणलक्षणोऽस्तीति शेषः । कुतः । तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारेणैव कर्मकरणेऽधिकारात् । न्यूनाधिककरणे, यदस्य कर्मण इति दोषश्रवणाच्च । दृष्टान्तेनाप्येतत् साधयति । सववत् । यथा सवा होमविशेषा आथर्वणिकानामेव कार्यत्वेन नियम्यन्ते, नान्येषां, तथेत्यर्थः । उपासनायामपि रामकृष्णादिरूपेषु तत्तद्रूपोपासकस्य तत्तदवतारधर्मा एव भावनीया, न त्ववतारान्तरधर्मा अपि । ब्रह्मणः सर्वधर्मत्वेऽपि तदवतारे तेषां विरुद्धधर्मत्वात् ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## दर्शयति च ॥ ४ ॥

अवतारान्तरधर्माणामवतारान्तरभक्तस्य स्वोपास्ये विरोधादनुपसंहर्तव्यत्वेऽपि ब्रह्मणः सर्वधर्मवत्त्वाद् वेद्यैकत्वेन विद्यानामेकत्वं, सर्वे वेदा यत्पदमामनन्तीत्यादिना दर्शयति । चकाराद् भेददर्शननिन्दां, यदा ह्येवैष इतिश्रुत्युक्तां दर्शयतीत्यर्थः ॥ ४ ॥

ननु स्वाध्यायस्येतिसूत्रेऽवतारान्तरेऽवतारान्तरधर्माणामनुपसंहार इत्युक्तम् । श्रीरामोपनिषत्तु, यो वै ये मत्स्यकूर्माद्यवतारा इत्युक्त्वा श्रीरामे, तथा श्रीभगवति, नमस्ते रघुवर्यायेत्यादिषु श्रीकृष्णेऽवतारान्तरधर्माणामुपसंहारः कथं दृश्यत इत्याशङ्क्याह ।

## उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॥ ५ ॥

इदं सूत्रं योगविभागेन सामान्यविशेषोपासकपरं योज्यम् । तथाहि । नमस्ते रघुवर्यायेत्यादिषु य उपसंहारः, स त्वर्थस्य भगवल्लक्षणस्योभयत्राप्यवतारद्वयेऽपि धर्मैरभेदाच्छुद्धब्रह्मोपासकानां, तदभिन्नस्य तदभिन्नत्वमिति न्यायेन धर्माणां भेदाभावेन विरोधभानाऽसम्भवात् सर्वधर्माणामुपसंहार इत्यर्थः । च पुनरेकान्तिभक्तानां तु समानधर्मविशये विधिशेषवत् तत्तदवतारोपासनविध्युक्तप्रकारवदविरुद्धधर्माणामुपसंहार इत्यर्थः। ननु विरुद्धधर्माणां, तेषु समानत्वाभावात् ॥ ५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

ननूपसंहारो धर्माणां भेदे सति भवति । तथाच भिन्नानां तेषां ब्रह्मणा भेदे स्वीकृतेऽनेकरसानां तेषामेकरसब्रह्मत्वस्वरूपत्वे ब्रह्मणोऽन्यथात्वं स्यात् । शब्दाद् एकत्वैकरसत्वनिरूपकश्रुतेर्ब्रह्मण एकरसत्वनिरूपकश्रुतेर्ब्रह्मण एकरसत्वेन निरूपणात् तद्विरुद्धमन्यथात्वमनेकरसत्वं स्यात् । ब्रह्मण एकरसत्वे चाङ्गीक्रियमाणेऽनेकरसधर्मैर्भेदो न स्यादिति सूत्रार्द्धेनाशङ्क्य परिहरति । न अविशेषात् । यथैकरसत्वं ब्रह्मणः श्रुतितो निर्णीयते, तथा श्रुतित एव विरुद्धधर्मवत्त्वेन निर्णयविशेषान्न दोषः ॥ ६ ॥

प्रकारान्तरेण समाधत्ते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

ज्ञानप्रकरणे ज्ञानिनं प्रत्येकरसमदृश्यमग्राह्यमिति निरूपयति श्रुतिः । भक्तिप्रकरणेन भक्तियोगस्य बहुविधत्वाद् भक्तानुभवभेदेन भिन्नभिन्नप्रकारेणाथर्वणोपनिषदि निरूपयति । एवं प्रकरणभेदात् स्वरूपस्यान्यथात्वं नास्तीत्यर्थः । तथाच ज्ञानिनः सर्वत्रैकरसत्वेन भानात् सर्वधर्माणामुपसंहारः । उत्तरतापिन्यां ज्ञानिप्रकरणे उपसंहारोक्तेः । भक्तस्य त्वनेकरसत्वेन भानात् तत्साधारणधर्माणामेवोपसंहार इति व्यवस्थितविकल्पाश्रयेण वा समाधानम् । अत्र दृष्टान्तः । परोवरीयस्त्वादिवत् । यथा परोवरीयस्त्वानामकव्रतविशेषस्य दीक्षाप्रकरणे पठितत्वाद् दीक्षासहितस्यैव परोवरीयस्त्वम् । तां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वम् । तथाऽत्रापीत्यर्थः ॥७॥

ननु ज्ञानिभक्तयोरपि ब्रह्मोपासकत्वरूपसंज्ञाया एकत्वात् तयोः प्रकरणभेद एव नास्तीति संज्ञैकत्वात् पूर्वसूत्रोक्तव्यवस्थाऽनुपपन्नेत्याशङ्क्य परिहरति ।

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

उपास्यब्रह्मण एकत्वादुपासकस्यापि ब्रह्मोपासकत्वसंज्ञाऽविशिष्टेति सर्वधर्मोपसंहारः स्यादिति चेद्, एतच्छङ्कोत्तरं पूर्वमेवोक्तं, न वा प्रकणभेदादिति । एकान्तभक्तस्य तत्स्वरूपैकनिष्ठत्वेन तत्र भक्त्यतिशयेनान्यधर्माणामनुपसंहारः । अनेकान्तभक्तस्य तु साधारणप्रकारेण श्रीरामादिस्वरूपेषु ब्रह्मत्वेन ज्ञानात् सर्वधर्मोपसंहारे बाधकाभाव इत्युक्तमित्यर्थः । संज्ञैकत्वेऽप्यान्तरनिष्ठाभेदान्नैकरूपोपासनेत्यर्थः । संज्ञैकत्वस्याप्रयोजकत्वमाह । अस्ति तु तदपि । परोवरीयस्त्वाद्युपासनेषु भिन्नेषूद्गीथोपासनेतिसंज्ञैकत्वेऽपि यथा धर्मभेदस्तथाऽत्रापीत्यर्थः ॥ ८ ॥

ननूपास्यरूपेषु बाल्यपौगण्डादिरूपा अवस्था उच्यन्ते । एवञ्च विग्रहे न्यूनाधिकभावान्मध्यमपरिमाणप्रसक्त्या सच्चिदानन्दत्वमनुपपन्नमित्याशङ्क्याह ।

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सर्वतः पाणिपादान्तमित्यादिश्रुतेः साकारमेव व्यापकं ब्रह्म, सर्वरस इति श्रुत्या रसात्मकं च यादृग्रूपेण भक्तानां सम्यग्लीलारसानुभवो भवति तादृग्रूपं प्रकटीकृत्य विहरतीति नोक्तदोषः । तद्रूपस्त्वेव प्रमाणासिद्धं तादृशमिति मन्तव्यम् ॥ ९ ॥

ननु लीलाया नित्यत्वेन तत्सम्बन्धिभक्तानामपि नित्यत्वादेकस्य भक्तस्यानेकलीलासम्बन्धोऽनुपपन्नः । तथात्वे तु लीलाया अनित्यत्वं स्याद् भक्तस्य वाऽनेकत्वम् । तदुभयमपि प्रमाणविरुद्धमित्याशङ्क्याह ।

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

लीलासम्बन्धिसर्वपदार्थानां भगवता सहाऽभेदादन्यत्राग्रिमलीलायामपि इमे एव भक्ता, न त्वन्ये । एवं लीलासम्बन्धिनां भगवद्रूपत्वाद् भगवत इव व्यापकत्वेनैकस्यैव सर्वलीलासम्बन्धित्वं न विरुद्धमिति भावः । एतेन सच्चिदानन्दात्मकसर्गादिलीलाया अपि भगवल्लीलात्वेन नित्यत्वात् तत्सम्बन्धिजीवानां विसर्गलीलासम्बन्धित्वं न स्यात् । तत्सम्बन्धित्वे तु लीलाया अनित्यत्वं स्यादित्याशङ्का परिहृता । तत्रापि सर्वाभेदात् सर्गादिलीलामध्यपातिनां सर्वेषां जीवानां पदार्थानां च ब्रह्मणा सहाभेदाद् ब्रह्मणश्चैकत्वाद् व्यापकत्वाच्च पूर्वलीलातोऽन्यत्र उत्तरलीलायामपि इमे पूर्वलीलासम्बन्धिन एव पदार्था जीवाश्चेत्यर्थकथनात् । तदुक्तं निबन्धे, व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यत इति ॥ १० ॥

ननु यथा लीलास्थितजीवानां भगवदभिन्नत्वेन व्यापकत्वमुक्तं, तथा साधकजीवानामपि ब्रह्मांशत्वेन भगवदभिन्नत्वात् पूर्णानन्दादिधर्मवत्त्वं स्यात् । नच तेषां तद्वत्त्वं वक्तुं शक्यम् । दुःखनाशार्थं भगवत्प्रार्थनदर्शनादित्याशङ्क्याह ।

## आनन्दादयः प्रधानस्य ॥ ११ ॥

पूर्णानन्दादयः प्रधानस्य भगवत एव धर्मा, न तु जीवस्य । भगवदभेदादेव ते धर्मा जीवे आविर्भवन्ति । साधकजीवानां तु भगवदभेदास्फूर्त्या पूर्णानन्दादिभगवद्धर्माविर्भावाभावाद् दुःखस्फूर्तिः । अतस्तन्नाशार्थं भगवत्प्रार्थनं तेषां युक्तमेव । श्रीभगवता सार्द्धं जीवा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नामभेदप्रकारस्तु श्रीकृष्णचैतन्यमतेऽप्येवम् । तथाहि चैतन्यगुणो-द्देशदीपिकायां धामपरिकरपरिच्छदभक्तशक्तिस्वरूपैः कृष्णस्य पञ्चतत्त्वात्मकत्वं निरूपितम् । सन्दर्भेऽपि, एकमेव तत्त्वं चतुर्द्धा विराजते स्वरूपतद्वैभवजीवप्रधानरूपेणेत्युक्तम् । अत्र वैभवशब्देन धामपरिकरपरिच्छदभक्तशक्त्यादीनां ग्रहणं ज्ञेयम् । तेषामपि तत्त्वतो व्यतिरिक्तत्वाभावात् । अतोऽनादित एव तत्तत्परिकररूपेण विराजता भगवता सार्द्धं भक्तानामभेदः । अतो यावत्पर्यन्तं साधकभक्तस्य सिद्धदेहात्मकेन भगवता सार्द्धमभेदो न स्फुरति, तावत् पूर्णानन्दस्फूर्तिः स्वस्मिन्न भवति । पूर्णानन्दादिधर्माणां भगवद्धर्मत्वात् । पूर्वोक्तप्रकारेण भगवदभेदस्फूर्तौ तु ते धर्मा जीवे स्वत आविर्भवन्ति । जीवस्य चाक्षरांशत्वादक्षरस्य गणितानन्दत्वाद् भगवदभेदस्फूर्तिं विना जीवे पूर्णानन्दास्फूर्तिर्युक्तैवेति ज्ञेयम् । सच्चिदानन्ददेहानां पूर्वसिद्धत्वं तु, अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रेतिश्लोकसुबोधिन्यामुक्तम् । सन्दर्भेऽपि, वैकुण्ठेऽनादिभूता एव सच्चिदानन्दमया देहा वर्त्तन्त इत्युक्तम् ॥ ११ ॥

ननु प्रियशिरस्त्वादिधर्माणामपि प्रधानधर्मत्वाऽविशेषात्तेषामप्युपसंहारः कर्तव्य इत्याशङ्क्याह ।

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादीनामप्राप्तिः । कुतः । प्रियमोदाद्युपचयापचयौ हि भेदे सम्भवतः । अन्तःकरणशुद्धितारतम्येन ह्यानन्दे प्रियत्वमोदत्वादयो धर्मा उपचयापचयभेदेन भासन्ते । यस्य त्वन्तःकरणशुद्धिर्जाता, तस्य तु निर्भेदमेकरसमखण्डमानन्दात्मकमेव ब्रह्म भासते । अतो न शुद्धाभेदज्ञानिनां प्रियशिरस्त्वादिधर्माणामुपसंहारः ॥ १२ ॥

ननु निर्गुणे ब्रह्मणि सगुणधर्माणामनुपसंहारे तद्धर्माणां त्यागः स्यादित्यत आह ।

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे विरुद्धधर्मा व्रजनाथत्वमत्स्यत्वरघुवर्यत्वादयः, अर्थस्य ब्रह्मणः सामान्याद् धर्मिरूपेणोपसंहार्या, न तु धर्मरूपेण । यथा रघुवर्यादिधर्माणां धर्मिरूपत्वेन अर्थस्य सामान्यान्मत्स्यादिषूपसंहा-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रः । तथा निराकारे ब्रह्मणि साकारत्वादयः, पुरुषे शृङ्गपुच्छत्वादयो धर्मा नोपसंहार्याः, किन्तु धर्मिरूपा एव त इति बोध्याः ॥ १३ ॥

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आध्यानाय हि गुणानामुपसंहारो यावता ध्यानसिद्धिस्ताव-तामेव गुणानामुपसंहारः । अन्येषां तु प्रयोजनाभावान्नोपसंहारः । तथा भक्तिमार्गीयाणां शुद्धान्तःकरणानामन्तःकरणशुद्धिरूपप्रयो-जनस्याभावान्न पक्षपुच्छादीनामुपसंहारः । तावता परोक्षवादेनोक्त-प्रियत्वादिनैव ध्यानसिद्धेः । एकान्तश्रीरामभक्तस्यापि श्रीरामोपा-सनोक्तधर्मैरेव चारितार्थ्येन न मत्स्योपासनोक्तधर्माणामुपसंहारः । कुतः । प्रयोजनाभावात् । यथा निर्गुणोपासकस्यापि स्वरूपेणैव चा-रितार्थ्ये न सर्वेषां गुणानामुपसंहारः ॥ १४ ॥

आनन्दादीनां धर्मिरूपेणोपसंहारे पक्षादीनामनुपसंहारे हेत्व-न्तरमप्याह ।

## आत्मशब्दाच्च ॥ १५ ॥

आनन्द आत्मेत्यनेन आनन्दस्यात्मत्वेन कथनात् तेषामप्या-नन्दरूपत्वादात्मस्वरूपेणैव मोदप्रमोदादीनामुपसंहारः कर्तव्यो, नतु पक्षपुच्छादिरूपेण, न वोपचयापचयरूपेण, न वा भेदेन । किन्त्वा-त्मरूपेणैवोपसंहर्तव्याः । अनेन निर्गुणोपासकैरानन्दादीनां धर्म-त्वेनोपसंहारेऽनुपपत्तिः परास्ता । आनन्दस्यात्मरूपत्वेन कथनाद् धर्मरूपत्वाभावात् ॥ १५ ॥

ननु तैत्तिरीयेऽन्नमयादिष्विवानन्दमयेऽपि, तस्यैष एव शा-रीर आत्मेत्युक्तम् । शरीराभिमानी शारीरो जीव एव । अग्रे, आन-न्दो ब्रह्मेति व्यजानादिति ब्रह्मत्वकथनादानन्दमयस्य जीवत्वमपि न वक्तुं शक्यमत आनन्दादयोऽपि धर्मरूपा एवेति पूर्वसूत्रोक्तमानन्द-स्य धर्मिरूपत्वमनुपपन्नमित्याशङ्क्याह ।

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

तस्यैष एव शारीर आत्मेति यदितरवद् आत्मगृहीतिरन्नम-यादिष्वात्मग्रहणं, तदुत्तरात् सर्वेभ्य उत्तर आनन्दमयस्तस्माद्धे-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तोः । तथाचान्नमयादिष्वप्यानन्दमयस्यात्मत्वेन कथनात् तत्प्रकारेणानन्दमयेऽपि, तस्यैष एव शारीर आत्मेतिकथनादानन्दमयस्य परमकाष्ठापन्नत्वेन ततोऽतिरिक्तब्रह्मणोऽभावान्न जीवत्वमित्यर्थः ॥१६॥

## अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

नन्वन्नमयादिष्वन्योऽन्तर आत्मेतिकथनात् प्रत्येकं भिन्नेष्वन्नमयादिषु शारीर आत्मा जीवः शरीराभिमानी भिन्नो भिन्न उच्यते । आनन्दमये तु या तथोक्तिः सा तु तस्यान्वयाद् व्यापकत्वेन सर्वत्रान्वयात् सम्बन्धान्न तु जीवत्वेनेति सूत्रार्द्धेनाशङ्क्य परिहरति । स्यात् । आनन्दमय एवान्नमयादिशरीराभिमानी स्यान्न तु भिन्नो जीवः । कुतः । एष ह्येवेत्येवकारेण तस्यैवात्मत्वेनावधारणान्निर्द्धारणादित्यर्थः ॥ १७ ॥

ननु तैत्तिरीयोपनिषत्सु, तस्माद्वा एतस्मादित्याकाशादिमहाभूतसृष्टिमुक्त्वाऽग्रे, ओषधीभ्योऽन्नम् अन्नात पुरुषः स वा एष पुरुषोऽन्नरसमय इत्युक्तम् । भार्गव्यां विद्यायामपि, अन्नं ब्रह्मेति व्यजानादित्युक्तम् । तत्र, स वा एष पुरुष इत्यत्र, स एवेति प्रत्यभिज्ञानादन्नकार्यात्मक एव पुरुषः प्रतीयते । अग्रे तस्य ब्रह्मत्वेन ज्ञानकथनं तूपासनार्थमित्याशङ्क्याह ।

## कार्याख्यानादपूर्वम् ॥ १८ ॥

अन्नकार्यभौतिकपुरुषस्याख्यानात् कथनाद् ब्रह्मत्वेन ज्ञानविषयं, स वा एष इत्यनेन प्रतिपाद्यमपूर्वं तस्यैवाध्यात्मिकरूपं वदति श्रुतिरित्यर्थः । आध्यात्मिकपुरुषरूपनिरूपणात्, स वा एष इति न प्रत्यभिज्ञानम् । आधिभौतिकाध्यात्मिकभेदस्य स्पष्टत्वादित्यर्थः ॥

अथवा बृहदारण्यके, आत्मेत्येवोपासीतेत्युपक्रम्य तस्य सर्वेभ्यः प्रियत्वमुक्त्वाऽग्रेऽन्यस्य प्रियत्वं निराकृत्य, ईश्वरो हि तथा स्याद् आत्मानमेव प्रियमुपासीतेति पठितम् । अत्रात्मपदेन जीवात्मनः प्रियत्वेनोपासनं विधीयते, उत ब्रह्मण, ईश्वरपदादिति संशये, यथा श्रुत्यन्तरे पुत्रादीनामौपाधिकप्रियत्वकथनाज्जीवात्मन एव प्रियत्वमुच्यते तथेहापि प्रतीतेर्जीवात्मन एव प्रियत्वेनोपासनो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्वेति प्राप्ते, उच्यते । कार्याख्यानादिति । प्राणन्नेव प्राणो भवतीत्या-दिपूर्वश्रुतावेकस्यैवात्मनः सर्वेन्द्रियकार्यैः कृत्वा आख्यानादपूर्वं जी-वभिन्नमीश्वरमेव श्रुतिर्वदतीत्यर्थः । अत एवात्रेश्वरो हीत्यत्रेश्वरपदं सर्वस्मादन्तरमिति चोक्तम् ॥ १८ ॥

ननु भगवद्विग्रहे चक्षुरादीनां वैलक्षण्येन प्रतीतेरात्मनश्चै-करसत्वात् सर्वेन्द्रियकार्यकर्तृत्वं ब्रह्मणि न सम्भवतीत्याशङ्क्याह ।

## समान एवञ्चाभेदात् ॥ १९ ॥

अप्यर्थे चः । एवमपि सति चक्षुःश्रोत्रादीनां वैलक्षण्येन भा-नेऽपि समान एकरूप एव भगवान् । कुतः । चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः । तथाचानन्द एव ब्रह्मण्याकारसमर्पकस्तथा तथा भातीति न वैजात्यशङ्केति भावः ॥ १९ ॥

अथ यत्र कार्यार्थं जीवविशेषे भगवदावेशस्तद्भगवदाविष्टजी-वोपासकेन सकलभगवद्धर्माणां तत्रोपसंहारः कर्तव्यो न वेत्याश-ङ्क्य सूत्रद्वयेन विकल्पमेव स्थापयति ।

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्रापि भगवदाविष्टजीवेऽपि, एवं सकलब्रह्मधर्मोपसंहा-रेणोपासनं कार्यम् । कुतः । अयोगोलके वन्हेरिव तस्मिन् भगवदावे-शलक्षणसम्बन्धादित्यर्थः ॥ २० ॥

निषेधपक्षमुपपादयति ।

## न वाऽविशेषात् ॥ २१ ॥

यस्तु भगवदाविष्टं भक्तं ज्ञात्वैतद्भजनेनैवाहं कृतार्थः स्यामिति ज्ञात्वा तं भक्तं भजते, तस्य तद्भक्तभजनमेव परमपुरुषार्थसाधकमि-ति तत्र भगवद्धर्मोपसंहारे विशेषाऽभावात् स न कार्यः ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

उपसंहारो नाम तत्रानुपलभ्यमानानां धर्माणां तत्र भावन-म् । तादृशभक्तेषु तु भगवान् सर्वधर्मान् प्रत्यक्षतो दर्शयतीति तद्भ-क्तानां नोपसंहारापेक्षेत्यर्थः ॥ २२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु तादृशभक्तेऽलौकिकभगवद्धर्मान् ऐश्वर्यादीन् दृष्ट्वा तद्भक्तैः स्वसेव्ये द्युलोकव्याप्त्यादयो धर्मा उपसंहर्तव्याः स्युरित्याशङ्क्य, नेत्याह ।

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

सकलवीर्यसम्भृतिद्युव्याप्त्यादयोऽपि धर्मा नोपसंहर्तव्याः । अतः पूर्वोक्तविशेषाभावरूपहेतोरित्यर्थः ॥ २३ ॥

ननु तैत्तिरीयोपनिषत्सु, सहस्रशीर्षा पुरुष इत्यादिना पुरुषविद्या निरूप्यते । ब्रह्मप्रपाठकेऽपि, स वा एष पुरुषोऽन्नरसमय इत्यारभ्य, प्राणमयादय आनन्दमयान्ता निरूप्यन्ते । तेषु पुरुषविधत्वं चोच्यते । एवं चान्नमयादिषु पुरुषविधत्वश्रवणात् तेष्वपि सहस्रशीर्षत्वाद्युपसंहारः कर्तव्य एवेत्याशङ्क्याह ।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

पुरुषविद्यायां सहस्रशीर्षा इत्यत्र यथाऽनेकोपलक्षकसहस्रपदेन साकारव्यापकाधिदैविकब्रह्मस्वरूपं निरूप्यते, न तथा इतरेषाम् अन्नमयादीनां भौतिकानां पुरुषविधस्याध्यात्मिकस्य चाम्नानं निरूपणम् । तस्मात् तेषु सहस्रशीर्षत्वाद्युपसंहारो न कर्तव्य इत्यर्थः ॥ २४ ॥

अतः परं भगवतो निर्दोषत्वं ज्ञात्वा भजनं कर्तव्यमिति ज्ञापनार्थमधिकरणान्तरमारभते ।

## वेधाद्यर्थभेदात् ॥ २५ ॥

बृहदारण्यके छान्दोग्ये च देवानां दैत्यपराजयार्थे यज्ञे वागादिपूद्गानसमये दैत्यैः कृतः पापवेध उक्तः । आसन्ये दैत्यैः क्रियमाणोऽपि पापवेधो नाभूदित्युक्तम् । तत्र को हेतुरित्याकाङ्क्षायामुच्यते । वागादिषु यः पापवेध, आदिपदाद् दैत्यैः पराजयश्चोक्तः, सोऽर्थस्य भगवल्लक्षणस्य भेदात् सम्बन्धाभावादित्यर्थः । आसन्यस्य तु नित्यं भगवत्सम्बद्धत्वान्न दोषसम्बन्धः । एवञ्च यत्सम्बन्धाद्दोषसम्बन्धाभावोऽन्यस्य तस्य निर्दोषत्वे किं वाच्यमित्यर्थः ॥ २५ ॥

भगवत्सम्बन्धाभावे गुणहानिमप्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दः-
स्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

हानौ जीवस्य भगवत्सकाशाद् विभागे ये जीवनिष्ठा धर्मास्तिरोहिता भगवदिच्छयाऽऽनन्दांशैश्वर्यादयस्ते भगवत्सम्बन्धे सति पुनराविर्भूता भवन्तीति, परमं साम्यमुपैतीतिश्रुतेरित्यर्थः । न तु सर्वथा सर्वभगवद्धर्मवत्त्वम् । ननु तैरेव धर्मैः साम्यं, नान्यैरत्र किं नियामकमित्याशङ्क्याह । उपायनशब्दशेषत्वात् । उपायनं प्राप्तिः सा स्वधर्माणामेव नान्येषाम् । तथाचोपायनशब्देन कथनात् तैरेव धर्मैः साम्यमित्यर्थः । नन्वानन्दादिभिः साम्ये ब्रह्माऽभेद एव स्यादित्याशङ्क्याह । कुशेत्यादि । कुशा औदुम्बर्यः समिधस्तत्सम्बन्धि यच्छन्दःस्तुत्युपगानं तद्वत् । तद्गानसम्बन्धिन्यभित्वा शूर नोनुम इत्यृचि, अच एवोपसंहृत्य भकारेण गानं क्रियते । नैतावता भकाराणामृगात्मकत्वं सम्भवति । तथात्रापीत्यर्थः । ननु तत्त्वमस्यादिवाक्यैर्जीवेऽभेदबोधनादत्राभेदोऽस्त्वित्याशङ्क्याह । तदुक्तम् । अभेदबोधनतात्पर्यं पूर्वमुक्तमित्यर्थः ॥ २६ ॥

साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

सम्यक् परस्य पुरुषोत्तमस्याऽऽयो ज्ञानं येन स सम्परायो भक्तिमार्गस्तस्मिन् प्राप्तव्ये सति तर्तव्यस्य पापस्याभावाज्ज्ञानेनैव, भक्त्या न पापनाशः, नराणां क्षीणपापानामितिवाक्यात् पूर्वमेव पापानां नष्टत्वात् । ननु सर्वं पाप्मानं तरन्तीतिश्रुत्या भक्त्या पापनाशः कुतो नाङ्गीक्रियते, तत्राह । तथा ह्यन्ये । तस्याः श्रुतेर्ज्ञानमार्गीयविषयत्वाज्ज्ञानानन्तरं पापवन्तो भक्तिमार्गीयेभ्योऽन्य इत्यर्थः । ननु भक्तेः पापनाशकत्वबोधकानां, केचित् केवलया भक्त्याऽघं धुन्वन्तीत्यादिवचनानां का गतिरिति चेत् । तत्र, यथा हि भानोरुदयो नृचक्षुषामित्युक्तरीत्या यथा सूर्येण स्वोदयात् पूर्वमेव तमो नाश्यते, न तु स्वोत्पत्त्यनन्तरमितिसूचनान्न दोषः ॥ २७ ॥

ननु तर्हि भरतस्य भक्त्युत्तरं मृगदेहारम्भकपापस्थित्यसम्भव इत्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## छन्दत उभयाविरोधात् ॥ २८ ॥

छन्दतो भक्तिमार्गे भगवतो विशिष्टफलदानेच्छातो वा भक्तेरनन्तरमपि पापनाशो भवति । नराणां क्षीणपापानामित्यादीनां, भरतस्य मृगदेहारम्भकप्रारब्धकर्मसत्त्वबोधकवचनानां चाविरोधादेवं ज्ञातव्यमित्यर्थः ॥ २८ ॥

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

गतेर्ज्ञानस्यार्थवत्त्वं फलजनकत्वमुभयथा मर्यादापुष्टिभेदेन । अन्यथा एवमनङ्गीकारे, ज्ञानेनैव हि कैवल्यं, यमेवैष वृणुत इति वाक्ययोर्विरोधः स्यात् ॥ २९ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

मुमुक्षोः सकाशाद् रहस्यभजनकर्तैवोपपन्न उपपत्तियुक्तः । कुतः । भगवल्लक्षणस्यार्थस्य पुरुषार्थस्य स्वाधीनत्वेनोपलब्धेः । अत्र दृष्टान्तः । लोकवत् । लोके यथा स्वाधीनपतिका भर्तारं स्वाधीनं फलत्वेन मनुते, न तु गृहवित्तादिकं तथेत्यर्थः ॥ ३० ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

भगवतो धारणरसनभजनध्यानादीनां समुदितानामेव फलसाधकत्वमित्यनियमः । यतः सर्वासां धारणादिभक्तीनां फलं प्रत्यविरोधः, समुदितानामेव फलसाधकत्वं, न प्रत्येकमेवंलक्षणो विरोधो नास्ति । कुतः । शब्दानुमानाभ्याम् । चिन्तयँश्चेतसा कृष्णमिति श्रुतेः, केवलेन हि भावेनेतिस्मृतेश्चेत्यर्थः ॥ ३१ ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

यस्मिञ्जीवे कार्यविशेषसाधनार्थं भगवता ये स्वकीयधर्माः स्थापितास्ते आधिकारिका उच्यन्ते । तेषां स्थितिर्यावदधिकारं यावत्कार्यम् । तस्मिन् कार्ये सम्पन्ने तान् धर्मान् भगवानाकर्षतीत्यर्थः । न तु यावत् तेषां जीवनं तावत् स्थापयति । तेषां कृतार्थता तु भक्त्यैवेति भावः ॥ ३२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३ ॥

अक्षरविषयकज्ञानानां मोक्षसाधनेषु योऽवरोधो गणना सा सामान्यतद्भावाभ्यां भवति । अत्र मुख्या मुक्तिः पुरुषोत्तमप्राप्तिरेव । ज्ञानिनां तु साक्षात् पुरुषोत्तमसम्बन्धाभावात् तत्सम्बन्ध्यक्षरसम्बन्धरूपा सामान्यमुक्तिर्भवति । सम्बन्धोऽत्राभेदसम्बन्धो बोध्यः । अत्राऽक्षरज्ञानस्य साक्षात् साधनत्वम् । भक्तानां तु ब्रह्मभावोत्तरं भगवद्भावेन पुरुषोत्तमप्राप्तिरूपा मुख्या मुक्तिः । अत्राऽक्षरज्ञानस्य परम्परासाधनत्वम् । अक्षरज्ञानेन ब्रह्मभावोत्तरं भगवद्भावात् । एवं मोक्षद्वयेऽप्यक्षरविषयकधियां सामान्यतद्भावाभ्यां साधनत्वमित्यर्थः । अक्षरब्रह्मपुरुषोत्तमयोर्ब्रह्मस्वरूपेण सामान्यम् । नन्वक्षरज्ञानवतामपि केषां चित् तत्रैव लयः, केषां चिद् भक्तिभावो भवतीत्यत्र किं नियामकं तत्राह दृष्टान्तेन । औपसदवत् । उपसदाख्ये कर्मणि यजमानः सर्वेष्वृत्विक्षु यं कामयेत, यशयशसमृच्छेत् तं प्रथमं तानूनप्त्राख्यमाज्यं स्पर्शयेत् । तत्र यथा यजमानेच्छा नियामिका तथाऽत्र भगवदिच्छेत्यर्थः । ननु भगवत्सम्बन्धिश्रवणादीनां यथा भगवत्प्रापकत्वं, तथाऽक्षरज्ञानस्य कुतो नेत्याशङ्क्याह । तदुक्तम् । गीतासु, यदक्षरं वेदविदो वदन्तीत्युपक्रम्य, स याति परमां गतिमित्यन्तेनाक्षरज्ञानेन तस्यैव प्राप्तिर्नतु भगवत इत्युक्तम् ॥ ३३ ॥

## इयदामननात् ॥ ३४ ॥

तैत्तिरीयोपनिषत्सु, आनन्दगणने अक्षरानन्द इयद् गणितत्वादल्प इत्यामननात् कथनात् । अत्रानन्दतारतम्यकथनमानन्दानुभवयोग्यलयपूर्वदशापेक्षया । अग्रे ब्रह्मणि लये तु भोक्तुरभावात् तत्र निर्धर्मके ब्रह्मणि संख्याद्यभावाच्च नानन्दतारतम्यसम्भवति । पूर्णपुरुषोत्तमस्यागणितानन्दत्वेन तदपेक्षयोत्कर्षनिरूपणं त्वचिन्त्यशक्त्याऽवसेयम् ॥ ३४ ॥

अथ ज्ञानमार्गीयाणां यथा स्वात्मत्वेन निर्विशेषब्रह्मज्ञानं भव-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ति, तथा भक्तिमार्गीयस्यापि ज्ञानिवत् स्वात्मत्वेन पुरुषोत्तमज्ञानं भविष्यतीत्याशङ्क्य निषेधति।

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

भगवता भक्तिमार्गे स्वीयत्वेनाङ्गीकृतो य आत्मा स स्वात्मा, तस्य स्वात्मत्वेन पुरुषोत्तमज्ञानम् अन्तरा भजनेऽन्तरायरूपमिति भगवाँस्तन्न सम्पादयतीत्यर्थः। एतद् दृष्टान्तेन साधयति। भूतग्रामवत्। तादृशभक्तविग्रहस्यालौकिकत्वाद् यथा तेषु लौकिको भूतग्रामो न सम्भवति तथेदं ज्ञानमपि ॥ ३५ ॥

## अन्यथाऽभेदाऽनुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा तादृशज्ञानस्य बाधकत्वे, एकादशस्कन्धे भक्तेषूद्धवादिष्वभेदज्ञानेनोपदेशानुपपत्तिरिति चेन्न। उपदेशान्तरवत्। यथा गायत्र्युपदेशेन संस्कृतं ब्राह्मणशरीरं वैदिककर्मोपयोगि भवति तथा ज्ञानोपदेशसंस्कृतो भक्तो भक्तिरसानुभवयोग्यो भवति। तदर्थमुपदेशो, नत्वभेदज्ञानार्थमित्यर्थः। ज्ञानिनां भक्तानां च लौकिकभावः सर्वथा निवर्तनीयः। तन्निवृत्तिं विनोभयोरपि फलप्राप्त्यसम्भवात्। तन्निवृत्तिस्तु ज्ञानेनैव भवति। यथा केवलसुवर्णार्थिनः सुवर्णेन कटककुण्डलार्थिनश्च सुवर्णपिण्डे धात्वन्तरभ्रमो निवर्तनीयस्तथाऽक्षरे लयप्रेप्सूनां ज्ञानिनां भगवल्लीलानुभवयोग्यानां भक्तानां च लौकिकभावो निवर्तनीयः। तन्निवृत्तिश्च ज्ञानेनैव भवतीति ज्ञानोपदेशोपयोगः ॥ ३६ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

भक्ता, अहं कृष्णः कृष्णोऽहमिति यद्विशिंषन्ति स व्यतिहारः। सोऽपीतरवज्ज्ञेयः। विप्रयोगोद्रेके यथाऽश्रुप्रलापादयो व्यभिचारिभावास्तथा व्यतिहारोऽपि। नैतावताऽभेदज्ञानस्य भक्तिफलत्वमित्यर्थः ॥ ३७ ॥

## सैव हि सत्यादयः ॥ ३८ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भक्तानां सत्यशमदमादिरूपा भक्तिरेवेति तस्य ज्ञानमार्गीय सत्यादिसाधनानि स्वत एव भवन्तीति न तदर्थं पृथक्प्रयत्नापेक्षेत्यर्थः ॥ ३८ ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

इतरत्र विहितभक्तेरन्यत्र कामाद्यौपाधिकभगवद्ध्याने कामाद्येव मुक्तिसाधनम् । किञ्चान्यमार्गे हेयत्वेनोक्तेभ्य आयतनादिभ्यो गेहादिभ्यस्तत्र मुक्तिर्भवति । भगवत्सेवासाधनत्वात् ॥ ३९ ॥

आदरादलोपः ॥ ४० ॥

वर्णाश्रमधर्माणां भगवद्धर्माणां च युगपत् करणे प्रसक्ते भगवद्धर्मेष्वादरश्रवणात् कर्मभिस्तेषामलोपः ॥ ४० ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

कर्मभगवद्धर्मयोर्युगपत्करणे उपस्थिते, अत आदराद्धेतोस्तद्वचनाद् भगवद्धर्माणामलोपवचनाद् भगवद्धर्माणां कर्माङ्गत्वेनेत्यर्थः ॥ ४१ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

मम कर्मकरणेऽकरणे वा भगवदिच्छास्तीति निर्द्धारणाऽनियम आधुनिकानामतस्तैर्निष्कामतया कर्तव्यमेव । तद्दृष्टेः तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्याऽम्बरीषोद्धवयुधिष्ठिरादेस्तस्य पृथग् जीवकृतकर्मफलाद्भिन्नमीश्वरकृतकर्मणो यत्फलं सन्मार्गरक्षालोकसंग्रहादिकं तदेव फलं, न तु स्वर्गादिकम् । पूर्वोक्तनिष्कामकर्तुस्तु अप्रतिबन्धः कर्मजप्रतिबन्धाभावः फलमित्यर्थः ॥ ४२ ॥

प्रदानवदेव तदुक्तम् ॥ ४३ ॥

तस्मात् त्वमुद्धवोत्सृज्येत्यनेन भगवतोद्धवं प्रति सर्वात्मभावोपदेशः, स प्रदानवत् प्रकर्षेण दानमेव कृतम् । न तु साधनसाध्यः सः । तदुक्तं, नायमात्मा प्रवचनेन लभ्य इतिश्रुत्या ॥ ४३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥

वरणस्य लिङ्गं सर्वात्मभावस्तस्य भूयस्त्वात् सर्वतोऽधिकत्वात् तद्वरणमेव सर्वतः कालकर्मादिभ्यो बलीयः। तस्य प्रतिबन्धकं किमपि न भवतीत्यर्थः। ननु ज्ञानमार्गीयज्ञानेन प्रतिबन्धः स्यादित्याशङ्क्याह। तदपि। उक्तमिति शेषः, अन्तरा भूतग्रामवत् स्वात्मन इतिसूत्रेण ॥ ४४ ॥

अथ सूत्रद्वयेन पूर्वपक्षमाह।

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

छान्दोग्ये सनत्कुमारनारदसंवादे, यत्र नान्यत् पश्यतीत्यादिना वरणलिङ्गभूयस्त्वं नोच्यते, किन्तु पूर्वविकल्पः स्यात्। पूर्वप्रपाठकोक्तश्वेतकेतूपाख्यानज्ञानस्यैव प्रकारभेदो निरूप्यते। आत्मप्रकरणादुभयोः प्रपाठकयोः। अत्र दृष्टान्तः। क्रियामानसवत्। बाह्या पूजा क्रियेत्युच्यते। आन्तरी मानसमित्युच्यते। परन्तु प्रकरणभेदात् पूजात्वाविशेषः। एवं प्रकारभेदेऽपि ज्ञानत्वाविशेष इत्यर्थः ॥ ४५ ॥

## अतिदेशाच्च ॥ ४६ ॥

नामैवैतन्नामोपास्वेत्यृगादिविद्या अनूद्य नामब्रह्मातिदेशादपि ज्ञानप्रकारविशेष एवायमिति प्राप्ते ॥ ४६ ॥

सिद्धान्तमाह।

## विद्यैव तु निर्द्धारणात् ॥ ४७ ॥

तुः पूर्वपक्षव्यावर्तकः। अत्र विद्यैव सर्वात्मभाव एव निरूप्यते। भूमैव सुखं, भूमा त्वेव विजिज्ञासितव्य इत्यानन्दात्मकपुरुषोत्तमस्यैव जिज्ञास्यत्वेन निर्द्धारणादित्यर्थः ॥ ४७ ॥

## दर्शनाच्च ॥ ४८ ॥

दृश्यते च सर्वात्मभाववतां व्रजभक्तानां पूर्वं सर्वविस्मृतिर्भ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गवत्स्पर्शादिनाग्रे सर्वसामर्थ्यम् । तदुक्तं ताभिरेव, चित्तं सुखेन भवताऽपहृतं गृहेष्वित्यादि । अत्रापि, तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणा इतिश्रुतिदर्शनात् सर्वात्मभाव एवोक्त इतिभावः ॥ ४८ ॥

ननु तरति शोकमात्मविदित्युपक्रमाज्ज्ञानमेवात्र प्रतिपाद्यं, न सर्वात्मभाव इत्याशङ्क्याह ।

## श्रुत्यादिबलीयस्त्वाच्च न बाधा ॥ ४९ ॥

एवमुपक्रमगतात्मवाक्यानुरोधात् सर्वात्मभावलिङ्गभूयस्त्वस्य न बाधा, वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात् । अतः श्रुतिलिङ्गानुरोधात् सर्वात्मभाव एवात्र प्रतिपाद्यो, न ज्ञानम् ॥ ४९ ॥

ननु स्वे महिम्नि प्रतिष्ठित इतिश्रुत्या न सर्वात्मभाव उच्यते, किन्तु ब्रह्मणः स्वाधारत्वमेव युक्तमिति प्रतिपाद्यत इत्याशङ्क्याह ।

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५० ॥

भूमा कुत्र प्रतिष्ठित इतिप्रश्ने, स्वे महिम्नीत्युत्तरमुक्त्वा, स वा एष एवं पश्यन्नित्यनेन तच्छब्दस्य पूर्वपरामर्शित्वाद् भूमाधिकरणसर्वात्मभावादिभ्यो हेतुभ्यः सर्वात्मभाव एवात्र प्रतिपाद्यो, न ब्रह्मणः स्वाधारत्वमित्यर्थः । अन्यथा कुत्र प्रतिष्ठित इति प्रश्ने, न क्वापीत्येव वदेत् । ननु सर्वात्मभावस्यापि फलं मुक्तिरेवेत्याशङ्क्याह । प्रज्ञान्तरपृथक्त्ववत् । सर्वात्मभाववद्भक्तप्रज्ञातो भिन्ना प्रज्ञान्तरं मुमुक्षुभक्तस्य स्वकृतार्थताविषयकं ज्ञानम् । तस्य यथा पृथक्त्वं पृथक्फलसाधकत्वं कर्मज्ञानादिफलेभ्यः पार्थक्येन मोक्षसाधकत्वं, तथा सर्वात्मभाववद्भक्तप्रज्ञाया भगवल्लीलासाधकत्वं, न तु स्वकामनासाधकत्वम् । अतः सर्वात्मभावस्य भगवल्लीलासाधकत्वं, न तु मोक्षसाधकत्वम् । अत्र व्यासः स्वानुभवमेव प्रमाणयति । दृष्टश्च । एतादृशभक्तस्य स्वरूपानुभवातिरिक्तफलाभावोऽस्माभिरेव व्रजभक्तादौ दृष्टः। अत्र शब्दोऽपि प्रमाणमित्याह । तदुक्तम् । अहं भक्तपराधीन इत्यारभ्य, वशे कुर्वन्ति मां भक्त्येति भगवतोक्तमित्यर्थः ॥५०॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥५१॥

ननु सर्वात्मभावनिरूपकसनत्कुमारनारदसंवादप्रपाठके तस्य सर्वेषु लोकेषु कामचारो भवतीत्युक्त्या सर्वात्मभाववद्भक्तस्याप्यन्यकामना दृश्यत इत्याशङ्क्याह । न । तर्हि कथमेवमुक्तं तत्राह । सामान्यादप्युपलब्धेः । तत्समानधर्मसम्बन्धादपि श्रुतौ तत्प्रयोग उपलभ्यते बहुशः । प्रकृतेऽपि विविधसुखप्रश्नानाल्लोकानां भगवत्सम्बन्धिसर्वसुखेषु कामचारो भवतीत्यभिप्रायेण तथोच्यते । ननु यथाश्रुतार्थः किमर्थं त्यज्यत इत्याशङ्क्याह । मृत्युवन्न हि लोकापत्तिः। यथा, न पश्यो मृत्युं पश्यतीति तादृशभाववतो मृत्युनिषेधः क्रियते तथा भगवत्स्वरूपातिरिक्तलोकान्तरसम्बन्धोऽपि न सम्भवतीत्यर्थः ॥ ५१ ॥

अत्र हेत्वन्तरमाह ।

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥

शब्दस्य आत्मन एवेद॰ सर्वमितिपूर्वोक्तश्रुतिवाक्यस्य, परेण, सर्वमाप्नोति सर्वश इति वाक्येन ताद्विध्यम् एकरूपत्वमस्तीति, न लोकान्तरसम्बन्धो वक्तुं शक्य इत्यर्थः । नन्वात्मन एवेद॰ सर्वमित्युक्तमेव, पुनः सर्वमाप्नोतीति किमर्थमुक्तं, तत्र हेतुमाह । तुः शङ्कानिरासे । हेतूनां बाहुल्ये दार्ढ्यं भवतीति पुनरनुबन्धः कृत इत्यर्थः ॥ ५२ ॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

अत एवैके शाखिन आत्मनो भगवतो भक्तशरीरे भावादाविर्भावात् तेन सह कामोपभोगनिरूपिकां, सोऽश्नुते सर्वान् कामानितिश्रुतिं पठन्तीत्यर्थः ॥ ५३ ॥

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

ज्ञानिनां हृदये परमव्योमाविर्भावस्य व्यतिरेकः । कुतः ? तद्भावाभावित्वात् । वरणाभावेन भगवद्भावस्याभावात् । ननु भगवतो ज्ञानविषयत्ववदाविर्भावोऽप्यस्तु तत्राह । न तूपलब्धिवत् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपलब्धिर्दर्शनं यथा साधनसाध्यं तद्वद् भगवद्वरणं विना हृदये परमव्योमाविर्भावाभावेन भगवदाविर्भावो न भवतीत्यर्थः । तस्य साधनान्तरासाध्यत्वात् ॥ ५४ ॥

तत्र निदर्शनमाह ।

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

हि यतः प्रतिवेदम् अङ्गावबद्धा ऋत्विजो हौत्रौद्गात्रादिप्रतिवेदनियतकर्मकरणार्थमवबद्धा वृता यजमानेन ते यथा सर्वशाखीयकर्मकरणसमर्था अपि तत्राधिकाराभावात् सर्वशाखासु न प्रभवन्ति, तथात्र भगवतस्तादृशवरणाभावाज्ज्ञानिनां हृदि परमव्योमाविर्भावो न भवतीत्यर्थः ॥ ५५ ॥

ननु केषांचित् कर्मज्ञाननिष्ठानामपि कृपया भक्तिमार्गे वरणं दृश्यत इति ऋत्विग्दृष्टान्तवैषम्यमित्याशङ्क्याह ।

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

यथैक एव कश्चिन्मन्त्रोऽनेककर्मसु विनियुज्यते, कश्चिद् द्वयोः, कश्चिदेकत्रैव, तथा शास्त्रे विधानात् । एवं भगवदिच्छया जीवोऽपि कश्चित् कर्मनिष्ठां प्राप्य वरणेन भक्तिनिष्ठां प्राप्नोति, कश्चित्तु ज्ञाननिष्ठामेव प्राप्य, कश्चित्तु प्रथमत एव भक्तौ व्रियत इति विरोधो नेत्यर्थः ॥५६॥

ननु लिङ्गभूयस्त्वादितिसूत्रे सर्वात्मभावस्य सर्वतोऽधिकत्वं यन्निरूपितं, तन्नोपपद्यते । सर्वात्मभाववद्भक्ते यथा सर्वत्र भगवद्भाव उक्तस्तथा लौकिकनायकस्यापि, सा सा सा सा जगति सकल इत्यादिषु सर्वत्र नायिकाभानदर्शनादतो लौकिकरसतुल्यत्वान्नास्य सर्वोत्कृष्टत्वमित्याशङ्क्याह ।

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५७॥

भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वोत्कृष्टत्वं ज्ञेयम् । न चोक्तं लौकिकरसतुल्यत्वं दोषः । क्रतुवदिति । यथा दर्शपूर्णमासादियागेषु दोहनाधिश्रयणादिकर्मणां लौकिककर्मतौल्येऽपि न लौकिकत्वम् अलौकिकप्रमाणैकसमधिगम्यत्वात् । तथास्यापि भावस्य तथात्वं ज्ञेयम् । तत्रोपपत्तिमाह । तथाहीत्यादि । तथाहि, आ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्मनः प्राणा इत्यादिश्रुतिः सर्वात्मभाववतः सर्वं भगवत एवेति द-र्शयति । लौकिकनायकप्राणानां तु तत्त्वजन्यत्वान्न सर्वात्मभाव-वद्भक्तप्राणादितौल्यम् । अतोऽस्य सर्वतो ज्यायस्त्वे कोऽपि दोषो न शङ्क्यः । इदं भक्त्यादीनामप्युपलक्षणम् । तेषामपि प्रतीत्या लौकिक-क्रियारूपत्वेऽपि भगवद्विषयत्वादलौकिकप्रमाणबोधितत्वाच्चालौकिक-त्वमेवेति ज्ञेयम् ॥ ५७ ॥

एवं सर्वात्मभावस्वरूपं विचार्य प्रक्रान्त उपासनानिर्णय उ-पसंहारे निरूपयति ।

## नाना शब्दादिभेदात् ॥ ५८ ॥

सर्वेषु श्रीरामाद्यवतारेषु नानैवोपासना कार्या, न तु सर्वा-वतारविशिष्टस्यैकस्य ब्रह्मणः । तत्तत्स्वरूपसम्बन्धिशब्दानां मन्त्राणां विधायकशब्दानाम् आदिपदादाकारचरित्राणां च भेदादित्यर्थः ॥ ५८॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

पार्थक्येन कर्तव्यानामुपासनानां विकल्पो, न त्वग्निहोत्रद-र्शपूर्णमासादिवत् समुच्चयः । कुतः । अविशिष्टफलत्वात् । एको-पासनेनैव मोक्षात्मकफलसिद्धावन्योपासनस्याविशिष्टफलत्वात् । तेनापि मोक्षस्यैव सिद्धेः ॥ ५९ ॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्व-हेत्वभावात् ॥ ६० ॥

यास्तु काम्योपासना भिन्नभिन्नफलिकास्ता यथाकामं समु-च्चीयेरन् । यस्य यत्फलकामना तेन तावत्युपासना कर्तव्या । पूर्व-हेतोरविशिष्टफलत्वस्याभावात् फलगतविशेषस्य विद्यमानत्वात् । यत्र पुनरेकोपासनस्यैव स्वकामितानेकफलसाधकत्वं तत्र तेनैव कार्यसिद्धौ, न वा उपासनानां समुच्चयो नास्तीत्यर्थः ॥ ६० ॥

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

एकफलसाधकानामुपासनानां भिन्नभिन्नस्थलेष्वाम्नातानां भिन्नाङ्गयुक्तानामङ्गेषु यथाश्रयभावः, यदङ्गं यत्राम्नातं तदङ्गविशिष्टं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तदेवोपासनं कार्यं, न त्वन्यत्राम्नातानामन्यत्रोपसंहारः कार्यः ॥ ६१ ॥
कुतः ?

## शिष्टेश्च ॥ ६२ ॥

तदङ्गानां तत्रैव शासनादन्यत्रोपसंहारे प्रमाणाभावात् ॥ ६२ ॥

## समाहारात् ॥ ६३ ॥

ज्ञानमार्गे सर्वावतारधर्माणां ब्रह्मणि समाहारात् सर्वधर्मविशिष्टब्रह्मोपासनं कार्यम् । तद्ब्रह्मैवावताररूपमित्येकस्मिन्नवतारेऽवतारान्तरधर्माणामप्युपसंहारे बाधकं नास्तीत्यर्थः ॥ ६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

ऐश्वर्यवीर्यादिगुणानां सर्वावतारेषु साधारण्यं श्रूयत इत्येकस्मिन्नवतारे सर्वावतारधर्मोपसंहारो युक्त इत्यर्थः ॥ ६४ ॥

नन्वेवमुपासनं किं नित्यं ? न, किन्त्वैच्छिकमित्याह ।

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

एकस्मिन्नवतारे सर्वावतारयुक्तोपासनं न वा, तथा रुचिश्चेत्कर्तव्यं, न तु नियमतः । तेषां रूपाणां नियततया तत्सहभावश्रवणाभावात् ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

उपासनस्य फलं दर्शनम् । तत्तु स्वधर्मविशिष्टैकावतारस्य भवति, न तु सर्वावतारधर्मविशिष्टस्य । अतो दर्शनाद्धेतोर्भक्तिमार्गीयस्य स्वधर्मविशिष्टैकावतारोपासनं युक्तमित्यर्थः । सर्वोपासनानां फलं दर्शनमिति सूत्रकृताऽन्ते तदेवोक्तम् ॥ ६६ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तृतीयाध्यायस्य चतुर्थः पादः।

### पुरुषार्थोऽतःशब्दादिति बादरायणः॥ १ ॥

पुरुषार्थो भगवानेव। अतःशब्दात्, अतः परं नान्यदणीयसं हीयतःपदघटितश्रुतिवाक्यादित्यर्थः॥ १॥

अत्र कर्मवादी प्रत्यवतिष्ठते।

### शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः॥२॥

विष्णोरिज्यत्वेन कर्मशेषत्वात् कर्माङ्गदेवतास्वरूपज्ञानं यागे फलातिशयहेतुरिति पुरुषसम्बन्ध्यर्थवादरूपं वेदान्तेष्वात्मनिरूपणम्। यथाऽन्येषु द्रव्यगुणकर्मस्वर्थवादः। यस्य पर्णमयी जुहूर्भवतीत्यादि द्रव्यनिरूपणार्थमर्थवादः। यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इति संस्कारेऽर्थवादः। यत्प्रयाजाऽनुयाजा इज्यन्त इत्यादि कर्मनिरूपणेऽर्थवादः। तद्वत्। अतो विष्णुस्तुतेरर्थवादरूपत्वेनाङ्गप्रशंसाद्वारेण कर्मण एव प्रशंसारूपत्वात् कर्मण एव फलसाधकत्वं न भगवज्ज्ञानस्येत्यर्थः॥ २॥

ननु तमेव विदित्वा मुनिर्भवतीत्यादिश्रुतौ ज्ञानवतः सर्वत्यागकथनात् पूर्वोक्तं न युक्तमित्याशङ्क्याह।

### आचारदर्शनात्॥ ३ ॥

वशिष्ठप्रभृतीनां ब्रह्मज्ञानिनामग्निहोत्राद्याचरणदर्शनान्न ज्ञानस्य कर्मबाधकत्वं सम्भवतीत्यर्थः॥ ३॥

### तच्छ्रुतेः॥ ४ ॥

जनकादीनां ब्रह्मविदां 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इत्यादिकर्मकरणनिरूपकश्रुतेर्हेतोर्न ज्ञानस्य कर्मबाधकत्वम्॥४॥

### समन्वारम्भणात्॥ ५ ॥

तं विद्याकर्मणी समन्वारभेते इति श्रुतौ ज्ञानकर्मणोः साहित्येन फलारम्भकत्वदर्शनान्न पूर्वोक्तम्॥ ५॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## तद्वतो विधानात् ॥ ६ ॥

वशिष्ठो ब्रह्मेत्यनेन ज्ञानवतो ब्रह्मत्वेन वरणकथनाज्ज्ञानस्य कर्माधिकारसम्पादकत्वमेव । बाधकत्वं तु सुदूरनिरस्तम् ॥ ६ ॥

ननु यदहरेवेत्यादिश्रुत्या त्यागस्यापि विधानात् कर्मतत्त्याग-योरैच्छिको विकल्पोऽङ्गीकार्यो नाङ्गाङ्गिभाव इत्याशङ्क्याह ।

## नियमाच्च ॥ ७ ॥

यावज्जीवाग्निहोत्रविधाननियमाद्, आश्विनं धूम्रंललाममित्यादिश्रुतौ कर्माकरणे प्रायश्चित्तविधानाच्च कर्मकरणनियम एव श्रुतेरभिमतो, न तु तत्त्याग इत्यर्थः । त्यागावधः कर्माशक्तविषयकत्वं व्यवस्थापनीयमितिभावः । अतो ब्रह्मज्ञानस्य कर्मशेषत्वेन निरूपणात् कर्मैव फलसाधकत्वात् कर्तव्यं, न तु तत्त्यागे केवलज्ञानात् फलं सिद्ध्यतीति जैमिनिमते प्राप्ते ॥ ७ ॥

उच्यते ।

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

तुः पक्षव्यावर्तनार्थः । स वा अयमात्मा सर्वस्य वशीत्यादिश्रुत्या भगवान् सर्वापेक्षयाऽधिक उपदिश्यतेऽतः कर्मसाम्यमपि न वक्तुं शक्यम् । तदङ्गत्वं तु दूरपास्तम् । अत्र विश्वासार्थमाचार्यः स्वानुभवं प्रमाणयति । बादरायणस्यैवं तद्दर्शनात् । एवं कर्मादिभ्य आधिक्येनैव तस्य भगवतो भक्तिमार्गस्य च तत्सम्बन्धिसर्वात्मभावस्य च दर्शनाद् अनुभवादित्यर्थः ॥ ८ ॥

आचारदर्शनादित्यस्योत्तरमाह ।

## तुल्यं तु दर्शनम् ॥ ९ ॥

यथा जनकादीनां कर्मकरणाचारस्तथा शुकभरतादीनां कर्मत्यागाचारः । तथाचाचारदर्शनस्य तुल्यत्वान्न ज्ञानं कर्माङ्गमित्यर्थः ॥ ९ ॥

ननु जनको ह वैदेह इति जनकस्य कर्मकरणनिरूपकश्रुतिसाहाय्यात् कर्मकरणाचारदर्शनं त्यागाचारदर्शनादधिकबलमित्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## असार्वत्रिकी ॥ १० ॥

ब्रह्मविदां सर्वेषामत्र कर्मकरणनिरूपणाभावात् कुत्र चिज्ज्ञन-कादौ कर्मकरणनिरूपिका श्रुतिरसार्वत्रिकी । य एतद्ध स्म वै इति कर्मत्यागनिरूपिका श्रुतिर्दृश्यते । अतो न सर्वेषां कर्मकरणनियम इत्यर्थः ॥ १० ॥

ननु तेषां ब्रह्मवित्त्वेऽप्येकेषां कर्मत्याग एकेषां कर्मकृतिरिति-विभागे किं नियामकमित्याशङ्क्याह ।

## विभागः शतवत् ॥ ११ ॥

तत्रैतस्यानन्दस्यान्यानि भूतानि मात्रा उपजीवन्तीतिश्रुतेर्भग-वदानन्दस्य सर्वत्र विद्यमानत्वेऽपि मानुषाद्यधिकारभेदेन तत्तदान-न्ददानाद् यथा मानुषानन्दादारभ्याक्षरानन्दपर्यन्तं शतोत्तरमानन्दो-त्कर्षरूपो विभाग उक्तस्तथा प्रकृतेऽपि येषु भगवदनुग्रहोत्कर्षेणा-न्यभावराहित्यं सर्वथा लौकिकभावराहित्यं व्यसनावस्थेति यावत्, तेषु सर्वथा कर्मत्यागः । येषु भगवदनुग्रहस्य न्यूनत्वं, तेषु लौकि-कभावसद्भावाद् व्यसनावस्थाया असम्भवेन कर्मत्यागोऽपि नास्तीति विभाग उपपद्यत इति भावः । व्यसनावस्थायामेव कर्मपरित्याग इति तु भक्तिवर्द्धिन्यादिग्रन्थे निर्णीतम् । अत्र निर्गुणब्रह्मणो यद्ग-णितानन्दत्वमुक्तं, तत्तु लयात्पूर्वानुभवमादाय । यतः पुरुषाधिका-रतारतम्येनानन्दभोगे तारतम्यं शतसंख्यया सूचितम् । ब्रह्मणि लये तु भोक्तुरेवाभावान्नानन्दतारतम्यम । अग्रे त्वानन्दमात्रावशेषात् संख्या नास्ति । तर्हि पूर्णत्वं स्यादिति चेत्, पूर्णत्वस्यापि धर्मत्वेन निर्द्धर्मके तदसम्भवात् । पूर्णत्वं तु सधर्मकत्वात् पुरुषोत्तम एव । तस्य ब्रह्मानन्दापेक्षयाऽऽधिक्यं त्वचिन्त्यशक्त्यावसेयम ॥ ११ ॥

तद्वता विधानादित्यस्योत्तरमाह ।

## अध्ययनमात्रवतः ॥ १२ ॥

वेदाध्ययनमात्रवतः कर्मण्यधिकारो, नतु ब्रह्मविदोऽपीत्यर्थः॥१२॥

यच्चोक्तमग्निहोत्रादिविधायकश्रुतिषु कर्मकरणनियमदर्शनं तत्त्यागे बाधकमिति, नियमाच्चेतिसूत्रेण, तत्राह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## नाविशेषात् ॥ १३ ॥

न कर्मणा न प्रजयेत्यादिश्रुतिषु मोक्षप्राप्तौ त्यागदर्शननियमाविशेषान्न कर्मनियमो बाधक इत्यर्थः ॥ १३ ॥

अथाग्रहेण, ब्रह्मिष्ठो ब्रह्मा भवतीत्यत्र ब्रह्मिष्ठपदेन ब्रह्मज्ञानवानेवोच्यते, न वेदाध्ययनमात्रवानित्युच्येत, तत्रापि ब्रूमः।

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

दर्शपूर्णमासावेतादृशौ यत्र ब्रह्मविदपि ब्रह्मत्वरूपार्त्विज्याधिकारीति दर्शपूर्णमासस्तुतये, न तु तत्र तस्याधिकारोऽभिप्रेतः। ब्रह्मज्ञाने कर्मापेक्षयात्कर्षस्य पूर्वमुपपादितत्वात् ॥ १४ ॥

नन्वेष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयानितिश्रुत्या ब्रह्मविदः कर्मकरणे प्राप्तगुणदोषयोर्निषेधः क्रियते। तथा च तस्य कर्मकरणमावश्यकमित्याशङ्क्याह।

## कामकारेण चैके ॥ १५ ॥

कामकारेण परानुग्रहार्थमिच्छामात्रेण यत्करणं तेन प्राप्तगोगुणदोषयोर्निषेधार्थमिदं वाक्यमेके शाखिनः पठन्ति। न त्वेतत्कथनेन करणनियमप्रसक्तिरित्यर्थः। परानुग्रहार्थमिच्छामात्रेण यत्कर्मकरणं, न तस्माद्गुणदोषयोः प्रसक्तिः। इदन्तु, पृथग्घ्यप्रतिबन्धः फलमित्यनेन पूर्वमुक्तम्। तादृशकर्मणो भक्तित्वमेव, न कर्मत्वमित्यग्रे, स्तुतिमात्रमितिसूत्रे व्युत्पादयिष्यते। ब्रह्मविदो हि यज्ञाङ्गदेवानां भगवद्भक्तत्वं ज्ञात्वा यजनं कुर्वन्तीति, न तत् कर्मरूपं भवति। भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित इति सन्दर्भोक्तकर्मलक्षणव्याप्तेः। अत एव सन्दर्भेऽप्युक्तं, तदीयाराधने तु गुणा एवेति। तस्मात् कर्मत्वाभावादेव कर्मसम्बन्धिगुणदोषयोरप्राप्तिः। किन्तु भगवदीयाराधनरूपा भक्तिरेव सेति ज्ञेयम् ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

एके शाखिनस्तत्र केन कं पश्येदित्यादिनाऽखण्डब्रह्मभाने कर्मतदधिकारादीनामुपमर्दं च पठन्तीति ज्ञानस्य कर्माङ्गत्वं सुदूर-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निरस्तं वेदितव्यम्। अखण्डब्रह्मभानं तु ब्रह्मण्येव, न त्विदं ब्रह्मणे सखण्डम्। तन्नोद्देश्यत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वम्॥ १६॥

## ऊर्ध्वरेतःसु च शब्दे हि॥ १७॥

यदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुत्या प्रव्रजनविधानादूर्ध्वरेतःसु सन्न्यासिषु कर्माभावोऽङ्गीकार्य इति कर्मशेषत्वं ज्ञाने न सम्भवति। नन्वेवमग्निहोत्रादिकर्मशेषत्वाभावेऽपि ज्ञाने सन्न्यासाश्रमीणकर्मशेषत्वमस्त्वित्याशङ्क्याह। शब्दे हि। ज्ञानस्वरूपं च शाब्दैकगम्यं, न युक्तिगम्यम्। श्रुतौ तु तमेवं विद्वानमृतो भवतीति ज्ञानस्य मोक्ष एव फलं श्रूयते। अतो न सन्न्यासाश्रमीणकर्मशेषत्वमपीत्यर्थः। ननु ज्ञानेनैव मोक्षे सन्न्यासवैयर्थ्यमिति चेद्, ब्रह्मविद्व्यतिरिक्तसङ्गस्य भगवद्भावविस्मारकत्वेन त्यागस्य भगवद्भावपोषकत्वेनोपयोगात् फलोपकार्यन्तरङ्गान्तःकरणशुद्धिसम्पादकत्वाच्च॥१७॥

अत्र पूर्वपक्षमाह।

## परामर्शं जैमिनिरचोदना चापवदति हि॥१८॥

किं प्रजया करिष्याम इत्यादिश्रुतौ ब्रह्मप्राप्तिं विना प्रजादिसर्वपदार्थानां वैयर्थ्यकथनात् सकलश्रुतिभिर्मोक्ष एव फलत्वेन परामृश्यते। तं परामर्शं कर्मस्वातन्त्र्यवादी जैमिनिरपवदति बाधत इत्यर्थः। यतो, वीरहा वा एष देवानामिति श्रुत्या कर्मत्यागस्य निन्दितत्वेन प्रव्रजननिरूपकश्रुतेरन्धपङ्ग्वादिविषयकत्वं मनुते। तथा सिद्धस्वरूपब्रह्मनिरूपणश्रुतिषु ब्रह्मज्ञानस्याविधेयत्वेन तदचोदनापि फलत्वेन मोक्षपरामर्शमपवदतीत्यर्थः। अतो जैमिनिसम्मत्या विधिसम्बन्धेन च कर्मैवाऽनुष्ठेयं, न तु मोक्षसाधनत्वेन तत्त्यागादिकमिति प्राप्ते॥ १८॥

उच्यते।

## अनुष्ठेयं बादरायणः साम्यश्रुतेः॥ १९॥

जैमिनेर्गुरुर्बादरायणोऽनुष्ठेयं कर्मापवदतीति सम्बन्धः। कुतः? साम्यश्रुतेः। यथा, वीरहेतिश्रुत्या कर्मत्यागकर्तुर्निन्दा श्रूयते, एवं भगवज्ज्ञानरहितस्यापि निन्दा, आसुर्या नामेतिश्रुत्योच्यते। वस्तु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्तु, तमेतं वेदानुवचनेनेतिश्रुत्या कर्मणां ज्ञानस्यापेक्षत्वोक्तेस्तेषां ज्ञानसाम्यं तच्छेषित्वं च दूरापास्तमिति मन्तव्यम् ॥ १९ ॥

एवं सति पूर्वकाण्डवैयर्थ्यमायातीत्याशङ्क्याह ।

## विधिर्वा धारणवत् ॥ २० ॥

कर्मणां विधिर्भक्तिसाधनत्वेनैव कर्मानुष्ठेयमितितात्पर्येणोच्यते । धारणवत् । यथा योगशास्त्रे समाधिसिद्ध्यर्थं मानस्या मूर्तेर्धारणं साधनत्वेन विधीयते तद्वत् । समाधिसिद्धौ तु, ततः किञ्चन न स्मरेदित्यादिवाक्येभ्यो यथा धारणात्यागस्तथा भक्तिसिद्धौ तु कर्मणां त्याग इति भावः ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

नन्वेष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयानितिश्रुत्या ज्ञानिनि विहितनिषिद्धकर्मणोः फलाजनकत्वेन साम्यमुक्तमिति ज्ञानस्य कर्मशेषत्वं नास्तीति यदुक्तं, तन्नोपपद्यते । यत इयं श्रुतिर्ज्ञानस्य स्तुतिमात्रम् । किञ्चानया श्रुत्या ज्ञानिनोऽपि कर्मोपादानात् कर्मकृतिस्वीकारात् । यदि ज्ञानिनां कर्मकरणं न स्यात् तदा तत्कृतगुणदोषाप्राप्त्या निषेधोऽनुपपन्नः स्यात् । प्राप्तिपूर्वकत्वान्निषेधस्य । मात्रपदेन यत्किञ्चिद्गुणदोषसम्बन्धस्तेषामस्त्येवेति सूचितम् । तथाच ज्ञानिनोऽपि कर्मकरणप्रसक्त्या कर्मशेषत्वं ज्ञानस्यायातीति चेन्नैष दोषः । ज्ञानिनः कर्मफलासम्बन्धस्यापूर्वत्वादन्यतः प्राप्त्यभावाद् विधेयत्वमेव, न तु स्तुत्यर्थं तत्कीर्तनम् । नच निषेधस्य प्राप्तिपूर्वकत्वनियमः । सूर्ये तमःकार्याभाव इत्युक्त्या तमःकार्यप्राप्तिबोधासम्भवात् । ननु लोकसंग्रहार्थं तेषामपि कर्मकरणं, तन्निर्धारणानियम इत्यत्रोक्तं, तत्कथमुक्तं ज्ञानिनां कर्मकरणाप्रसक्तिरिति । उच्यते । तादृशरीत्या यत् कर्मकरणं, तद् भक्तिरूपमेव । अत एव तत्रोक्तम्, अप्रतिबन्धः फलमिति । तस्माद् भगवदिच्छया ज्ञानिना कृतस्य कर्मणो भगवदभिप्रेतार्थकरणेन भक्तिरूपत्वेन विध्यधीनतया कृतत्वेन कर्मत्वाभावाद् देवानां भगवदीयत्वेन भजनात् सम्यगेवोक्तं ज्ञानिनः कर्मकरणाप्रसक्तिरिति ॥ २१ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु ब्रह्मविद्यानिरूपकाणां, भृगुर्वै वारुणिरित्युपाख्यानानां; पारिप्लवे शंसतानिश्रुत्या कर्माङ्गशंसनशेषत्वमुच्यते । शंसने च शब्दमात्रप्राधान्येन तदर्थस्य मन्त्रार्थवदप्रयोजकत्वात् कथं ज्ञानस्य कर्मप्राधान्यमिति चेन्न । कर्मापेक्षया ज्ञानस्य विशेषितत्वाद् विशिष्टतया कथनान्न ज्ञानस्य कर्मशेषत्वमित्यर्थः । नच ज्ञानस्य विशिष्टत्वेन कथनमाख्यानेष्वेवेति शङ्क्यम् । आख्यानातिरिक्तश्रुतौ; ब्रह्मविदाप्नोति परमित्यादौ ज्ञानोत्कर्षकथनात् ॥ २२ ॥

नन्वेवमाख्यानश्रुतीनां विद्याप्रतिपादकत्वं न स्यादित्याशङ्क्याह ।

## तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥

यथा केवलश्रुतीनां विद्याप्रतिपादकत्वं; तथैवाख्यानश्रुतीनामित्यर्थः । नह्याख्याननिरूपणस्य कोपयोगस्तत्राह । एकवाक्यतोपबन्धात् । आचार्यवान् पुरुषो वेदेतिश्रुत्यैकवाक्यताज्ञानार्थमुपाख्यानरीत्या गुरुशिष्यकथोपबन्धात् । तथाच विद्याया माहात्म्यनिरूपणार्थमाख्यानपूर्वकं निरूपणमित्यर्थः ॥ २३ ॥

पुरुषार्थोऽतः शब्दादित्यारभ्य ज्ञानस्य कर्मानपेक्षत्वं फलसाधने उक्तमिति तत्रैवोपपत्त्यन्तरमाह ।

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४ ॥

यतो ज्ञानी ज्ञानेन स्वयं यज्ञात्मको जातोऽत एव जरामर्याग्निहोत्रेऽग्नीन्धनाद्यनपेक्षोक्ता, तस्यैवं विदुषो यजमानस्येत्यादितैत्तिरीयकश्रुतौ ॥ २४ ॥

नन्वेवं कर्मकाण्डवैयर्थ्यमित्याशङ्क्य कर्मणां ज्ञाने फलोपकारित्वाभावेऽपि स्वरूपोपकारित्वमस्त्येवेत्याह ।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥

सर्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानेऽपेक्षाऽस्ति । अन्यथा यज्ञादिनिरूपकश्रुतिवैयर्थ्यं स्यात् । अत एतन्निर्णये सैव श्रुतिः प्रमाणमित्यर्थः । ननु यज्ञादिविधायकश्रुतिबलात् कर्मणामेव ज्ञानद्वारा फलसाधकत्वमस्त्वित्याशङ्कां दृष्टान्तेन निरस्यति । अश्ववत् । यथा इष्टफलसाधकदेशव्यवधायकदेशातिक्रमेऽश्वस्य साधनत्वं, न तु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्दर्शायितुमित्याह ।
तद्देशान्वितफलाभावेऽपि । तथा कर्मणां ज्ञानोत्पत्तिप्रतिबन्धकान्तःकरणदोषनिरास उपयोगो, न तु ज्ञानफलसिद्धावपीत्यर्थः ॥ २५ ॥

ननु तस्मादेवंविच्छान्तो दान्त इत्यादिना शमादीनामेव ज्ञानसाधनत्वमुच्यते, न तु यज्ञादेरित्याशङ्क्याह ।

## शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २६ ॥

आत्मन्येवात्मानं पश्येदिति ज्ञानमार्गीयज्ञानाङ्गतया शमदमादिविधेर्हेतोर्ज्ञानी शमदमाद्युपेतः स्यात् । ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात् । अन्यथा ज्ञानमवकीर्येत । अतस्तस्मादेवंविदितिश्रुतौ शमदमादीनामुक्तिः । कर्मणां तु बहिरङ्गत्वादनुक्तिरिति ज्ञेयम् । भक्तिमार्गे तु स्वत एव शमदमादयो भवन्ति, तथापि ज्ञानमार्गे तेषामावश्यकत्वाज्ज्ञानी तद्युक्तः स्यादेवेत्यर्थः ॥ २६ ॥

ननु शमादीनां सत्त्वशुद्ध्यर्थमपेक्षणात् तत्र चाहारशुद्धौ सत्त्वशुद्धिरितिश्रुत्याऽऽहारशुद्धेरन्तरङ्गसाधनत्वात् तद्विरुद्धसर्वान्नभक्षणस्य, चाक्रायणे छान्दोग्योपनिषत्सु श्रवणान्न सत्त्वशुद्धेर्ज्ञानस्यान्तरङ्गसाधनत्वमित्याशङ्क्य सर्वान्नानुमतिश्रुतिव्यवस्थामाह ।

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥

आहारदौर्लभ्येन प्राणात्यये प्राप्ते सर्वान्नानुमतिः श्रूयते, न त्वाहारसुलभत्वे । यतश्छान्दोग्योपनिषत्सु चाक्रायणे तथा दर्शनादित्यर्थः । एवञ्च ज्ञानिनोऽप्यनापदि विहितत्यागश्चित्तमालिन्यं जनयतीति सत्त्वशोधकशमादिकमवश्यमनुष्ठातव्यमित्यर्थः ॥ २७ ॥

## अबाधाच्च ॥ २८ ॥

आपदि सर्वान्नभक्षणेन चित्तदोषासम्भवाज्ज्ञाने बाधाभावाच्च न दोष इत्यर्थः ॥ २८ ॥

## अपि स्मर्यते ॥ २९ ॥

आपद्यविदुषोऽपि दुष्टान्नभक्षणे पापाभावो, जीवितात्ययमापन्न इत्यादिना स्मर्यते यत्र तत्र विदुषस्तथान्नभक्षणे दोषाभावे किं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वक्तव्यमित्यर्थः । यतस्तस्य ज्ञानाग्निरेव दोषसर्वेऽपि नाशकोऽस्तीतिभावः ॥ २९ ॥

## शब्दश्चातोऽकामकारे ॥ ३० ॥

यतो ज्ञानिनो ज्ञानाग्निरेव सर्वकर्मदहनसमर्थोऽतस्तस्य पूर्णदशायां यथेष्टाचरणेऽपि न दोषः । परं तु साधनदशायां कामनिवर्तकः शब्द, एवंविच्छान्तो दान्त इत्यादिरूपः श्रूयते । अतः साधनदशायां शमदमाद्यनापदि शिष्टान्नभक्षणं सर्वथा तेनानुष्ठेयमितिभावः ॥ ३० ॥

ननु ज्ञानाग्निः सर्वकर्माणीतिस्मृत्या ज्ञानस्य सर्वकर्मनाशकत्वकथनाज्जातज्ञानस्याश्रमकर्माणि न कर्तव्यानीत्याशङ्क्याह ।

## विहितत्वाच्चाश्रमकर्मापि ॥ ३१ ॥

यथाऽनापदि शिष्टान्नभक्षणमेव कर्तव्यं, तथा विहितत्वादाश्रमकर्मापि कर्तव्यमित्यर्थः । अन्यथा विहितत्यागजनितदूषणे चित्तमालिन्यं स्यादितिभावः ॥ ३१ ॥

ननु कृतस्यापि कर्मणो ज्ञानेन नाशात् किमर्थमपार्थकर्म ज्ञानिना कर्तव्यमित्याशङ्क्याह ।

## सहकारित्वेन च ॥ ३२ ॥

शमदमादीनां ज्ञानान्तरङ्गसाधनानां सहकारिण्याश्रमकर्माणि । अत आश्रमकर्मरहितैः शमदमादिभिर्ज्ञानं स्थिरीकर्तुमशक्यमतस्तान्यपि कर्तव्यानीत्यर्थः ॥ ३२ ॥

एवं ज्ञानमार्गीयाणां ज्ञानस्थैर्यसाधनान्युक्त्वा भक्तिमार्गीयाणां भक्तिसाधनानि श्रवणादीन्यवश्यकर्तव्यानीत्याह ।

## सर्वथापि त एवोभयलिङ्गात् ॥ ३३ ॥

यद्यपि भक्तानां श्रवणकीर्तनादीनि कर्तव्यान्येव, तथापि वर्णाश्रमधर्मादिसाधनानां श्रवणादीनां च युगपदुपस्थितौ सर्वथापि त एव श्रवणादय एव कर्तव्याः । नानुध्यायेद् बहून् शब्दान्, अन्या वाचो विमुञ्चथेतिलिङ्गात् । शृण्वन्ति गायन्तीत्यादिस्मृतिलिङ्गाच्चेत्यर्थः ॥ ३३ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अनभिभवं च दर्शयति ॥ ३४ ॥

युगपदुपस्थितौ प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्र गमनान्तरमुच्यते । यतः, सर्वं पाप्मानं तरतीत्यादिश्रुतिः कर्माकरणजदोषैर्भक्तस्यानभिभवं दर्शयतीत्यर्थः ॥ ३४ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥

भगवद्धर्मेभ्य आश्रमधर्मा न्यूना इत्यत्रमुच्यते । अपि तु तद्दृष्टेः, तस्मिन् भगवति दृष्टिरन्यभावराहित्यपूर्वकं भगवद्भावो व्यसनावस्थेतियावत् सा विद्यते यस्य तस्य वर्णाश्रमधर्मा अन्तरा फलप्राप्तौ बाधका इत्यर्थः । व्यसनावस्थापन्नस्य भक्तस्य निरन्तरं भगवद्भावनायुक्तत्वेन भगवद्धर्मकर्मकरणयोर्युगपत्स्थित्यसम्भवात् यौगपद्ये कर्मणां त्याग आवश्यकः । अत एव तादृशव्यसनावस्थापन्ना भक्ता निरपेक्षा इत्युच्यन्ते । तानुद्दिश्यैव, मद्भक्तो वाऽनपेक्षकः सलिङ्गानाश्रमांस्त्यक्त्वेति भगवतोक्तम् । सापेक्षा अपि भक्ता द्विविधाः, स्वार्थं फलापेक्षा लोकसंग्रहापेक्षाश्च । व्यसनदशापन्नानां स्वार्थापेक्षा नास्त्येव । लोके विषमदृष्टेरभावाल्लोकसंग्रहापेक्षापि नास्ति । अतस्तेषां सर्वथा निरपेक्षत्वम् ॥ ३५ ॥

## अपि स्मर्यते ॥ ३६ ॥

अपिशब्देनाश्रमधर्माणामन्तरायत्वे किं वाच्यं, यतो ज्ञानान्तरङ्गसाधनानां वैराग्यादीनामप्यन्तरायत्वं न ज्ञानं न च वैराग्यमित्यादिना स्मर्यते ॥ ३६ ॥

ज्ञानादिभ्यो भक्तेः साधनत उत्कर्षमुक्त्वा फलतोऽप्युत्कर्षमाह ।

## विशेषानुग्रहश्च ॥ ३७ ॥

ज्ञान्यपेक्षया भक्ते विशेषानुग्रहः, अहं भक्तपराधीन इत्यादिना स्मर्यते ॥ ३७ ॥

भक्त्युत्कर्षकथने फलितार्थमाह ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतः पूर्वोक्तोदाहृतश्रुतिभ्य इतरद् मुक्तेरपि भक्तिमार्गतदीयत्वमेव ज्यायः । हेत्वन्तरमप्याह । लिङ्गाच्चेति । मुक्तानां देहेन्द्रियाद्यभावेन केवलमात्मस्वरूपेणैव ब्रह्मानन्दानुभवः । भक्तानां त्वलौकिकदेहेन्द्रियादिभिः सर्वोत्कृष्टभजनानन्दानुभव इति तदीयत्वमेव सर्वोत्कृष्टमित्यर्थः ॥ ३८ ॥

ननु भक्तिमार्गस्यापि मोक्षसाधनत्वेन तत्र तदीयत्वस्य साधनोत्कृष्टावस्थारूपत्वेन मोक्षान्तरङ्गसाधनत्वमेव । एवञ्च तदीयत्वं न सर्वोत्कृष्टमित्याशङ्क्याह ।

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥

तद्भूतस्य पुष्टिमार्गे तदीयत्वं प्राप्तस्य जैमिनेरप्यतद्भावस्तद्भावराहित्यं न कदाचिदपि । दृढतया कर्ममार्गनिरूपकत्वेन भक्तिसम्बन्धाभावसूचनार्थं जैमिनेर्ग्रहणम् । एवञ्चान्यस्य भक्तिलेशवतः का वार्ता, यदि भगवत्कृपया जैमिनेरपि तदीयत्वं स्यात् तद्भावतिरोधानं कदापि न भवतीति, न तदीयत्वस्य मोक्षसाधनत्वशङ्कालेशोऽपीत्यर्थः । तत्र नियमादयो हेतवः । सदा पश्यन्ति सूरय इति सदापदोक्त्या भक्तानां भगवद्दर्शनं नित्यमेवेति नियम उक्तः । सोऽश्नुते इति श्रुत्या मुक्तस्य ब्रह्मस्वरूपानुभव उच्यते । स च वरणैकसाध्य इति तदीयत्वस्य फलरूपत्वात् साधनरूपाभावउक्तः । फलं हि साधनादुत्तमं भवति । तदीयत्वापेक्षयान्यस्योत्कृष्टस्याभावादपि न तदीयत्वस्य निर्विशेषमोक्षफलकत्वमित्यर्थः ॥ ३९ ॥

ननु ध्रुवादिभक्तानां ध्रुवादिलोकसम्बन्धिभोगस्य भगवदीयत्वस्य फलं ब्रह्मादिलोकाधिकार एवेत्याशङ्क्याह ।

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४० ॥

भगवदीयस्य भगवानाधिकारिकफलं न ददाति । कुतः । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेतिस्मृतिवाक्येन तत्र पतननिरूपणात् । किञ्च तादृशभक्तस्य निरन्तरं भक्तिरसानुभवेनाकाङ्क्षाया अभावेन तादृशफलस्यायोगाद् असम्बन्धादपि न ददातीत्यर्थः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भुवादीनां तु कार्यविशेषार्थं तदिच्छानुरोधेन च दानं, नैतावता सर्वभक्तेभ्यस्तद्दानमिति नियमः ॥ ४० ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४१ ॥

एके भक्ता आधिकारिकफले पतनमात्रं न दोषः, किन्तूपपूर्वं पतनं भक्तिसम्बन्धाभावादिति वदन्ति । परमत्राधिकारसमाप्तौ भगवदनुग्रहाशापि सम्भवति । मुक्तौ तु तदसम्भवान्महापतनमेव सेति भावः । एवं मुक्तिस्वरूपं निरूप्य भक्तिमार्गोत्कर्षार्थमाह । भावमशनवत् । भक्तिमार्गे तु साक्षात्प्रभुसम्बन्धाभावेऽपि भगवदानन्दभोगवन्मन्यते । ननु साक्षाद्भगवत्स्वरूपानुभवो जीवस्य न सम्भवतीत्याशङ्क्याह । तदुक्तम् । सोऽश्नुते सर्वान् कामान्, अत्र ब्रह्म समश्नुत इत्यादिश्रुतिषु तथोक्तमित्यर्थः ॥ ४१ ॥

ननूत्कृष्टभगवद्भावे भगवत्स्वरूपानुभवे वा सम्पन्ने गृहत्यागः कर्तव्यो न वेति संशये फलस्य सिद्धत्वान्न कर्तव्यो गृहत्याग इति प्राप्ते, उच्यते ।

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥

उभयथापि भगवद्भावमात्रे स्वरूपानुभवे वा गृहाद् बहिर्गमनं त्यागः कर्तव्यः । त्वं तु सर्वं परित्यज्येतिस्मृतेरुद्धवविदुरादीनां तथैवाचाराच्चेत्यर्थः ॥ ४२ ॥

नन्वेवं पुष्टिमार्गीयफलस्य त्यागात्मकसाधनजन्यत्वमायातीत्याशङ्क्याह ।

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥

पुष्टिभक्तस्य स्वामिनो भगवत एव फलश्रुतेर्न साधनत्वेन विहितत्वेन च त्यागः कर्तव्यः । साधनदशायां गृहादीनां भगवद्भावबाधकत्वभानेनार्थात्तेषां त्यागो भवतीति ज्ञेयम् । अत्रेर्विष्णोरवतारत्वेन भक्तिमार्गसिद्धान्तज्ञत्वात् तन्नामोक्तम् ॥ ४३ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥४४॥

औडुलोमिराचार्यस्तु जीवानां भगवल्लीलार्थमेव प्रकटितत्वेन

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लीलोपयोगस्य तेषां त्यागं विनाऽसम्भवाद् भक्तस्य सर्वत्यागपूर्वकं यद्भगवन्निकटगमनं तदार्त्विज्यम् ऋत्विक्कर्मैव मनुते । यथा ऋत्विजां कर्मणि प्रयासो यजमानकार्यार्थं तथाऽत्रापि भगवल्लीलासंपादनार्थमेव तेषां त्यागादिकमित्यर्थः । भक्तानाम् ऋत्विक्त्वनिरूपणस्य तात्पर्यान्तरमाह । तस्मै हि परिक्रीयते । तस्मै यजमानाय स्वकार्यकारणार्थम् ऋत्विक् परिक्रीयते वरणेन स्वीक्रियत इत्यर्थः । एवं प्रकृते स्वीयतल्लीलासम्पादनार्थं वृता भक्तास्तल्लीलानुभवविरोधिगृहादिकं त्यक्त्वा भगवन्निकटं गच्छन्तीत्यर्थः ॥ ४४ ॥

## श्रुतेश्च ॥ ४५ ॥

भक्तिरस्य भजनमित्यादिश्रुतिरूपप्रमाणादप्ययं सिद्धान्तो ज्ञेयः ॥ ४५ ॥

ननु वरणश्रुतिर्भगवत्प्राप्तौ वरणातिरिक्तसाधनान्तरं निषेधति । तस्मादेवंविदित्यादिश्रुतिस्तु साधनान्तराणि निरूपयति । एवं श्रुतिविप्रतिषेधे प्राप्ते मर्यादापुष्टिभेदेन तयोर्व्यवस्थामाह ।

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

जीवानां भगवदङ्गीकारो मर्यादापुष्टिभेदेन द्विधा । तत्र श्रुतौ शमदमादिसहकार्यन्तरविधिर्मर्यादापक्षेणोच्यते । पुष्टिमार्गे तु वरणातिरिक्तसाधनानपेक्षणात् तद्वतो भगवद्विषयकपरमस्नेहवतस्तृतीयं साधनं मानसिकम् । कायिकवाचनिकमानसिकभेदेन त्रिविधसाधनेषु मानसिकस्याभ्यर्हितत्वात् तद्ग्रहणम् । तथाच तादृशस्य भक्तस्य मानसिकसाधनमपि विध्यादिवज्ज्ञेयम् । यथा स्नेहवतो भक्तस्य भगवत्कार्ये प्रवृत्तौ विधिरर्थवादो वाऽप्रयोजकः । तस्य स्वत एव प्रवृत्तिसम्भवात् । तथा मनसैवाप्तव्यमितिश्रुतिबोधितं मानसिकं साधनं भगवद्भावाप्रयोजकमित्यर्थः । भगवदङ्गीकारबलेन तस्य स्वत एव प्राप्तिसम्भवात् । भगवति मनोनिवेशस्तु भावस्वाभाव्यादेव, न तु विधिबलेन । एवं मानसिकसाधनस्य पुष्टावप्रयोजकत्वकथनेन कायिकवाचनिकयोरप्रयोजकत्वमर्थादेव सिद्धम् ॥ ४६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ननु बहिस्तूभयथेत्यादिना पूर्णाभावयुक्तस्य गृहत्यागावश्यकत्वमुक्तम् । तच्छान्दोग्योपनिषदुक्तोपसंहारविरुद्धम् । तत्रान्ते, कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इति गृहस्थाश्रमस्यैव कथनादित्याशङ्क्य तत्तात्पर्यमाह ।

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

त्यागे वाङ्मनसयोरेव भगवति विनियोगः । गृहस्थाश्रमे तु कुटुम्बसाहित्येन सेवाकरणात् सर्वेन्द्रियाणां भगवद्विनियोगः, परिजनकृतार्थता चाधिका सम्पद्यत इति गृहिणोपसंहारः कृत इत्यर्थः। मर्यादामार्गीयगृहिव्यवच्छेदार्थं तुः । पूर्वोक्तत्यागावश्यकत्वं तु व्यसनदशायामेव । तादृशाधिकारस्य दुर्लभत्वेन पूर्वं गृह एव स्थित्वा भजनं कर्तव्यमित्यत्रोक्तम् । पूर्णाधिकाराभावे त्यागधर्माणामनिर्वाहात् कर्मत्यागेन विकर्मजदोषप्रसक्तेश्च ॥ ४७ ॥

किञ्च ।

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

सन्न्यासिनो यथा मौनानीहादयो धर्मा उपदिष्टास्तथात्र गृहिण इतरेषामप्युपदेशः कृतः । आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येत्यादिना । अतः सन्न्यासिधर्मापेक्षयाऽत्राधिकधर्माणामुपदेशाद् गृहिणोपसंहारो युक्तः ॥ ४८ ॥

ननु तत्र शुचौ देशे स्वाध्यायमधीयान इतिकथनात् कथं सर्वेन्द्रियाणां भगवत्सेवापरत्वं सम्भवतीत्याशङ्क्याह ।

## अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

यतो भगवता सहान्वयं सम्बन्धं प्राप्य वर्तते । अतो गृहस्थाश्रमधर्मैर्वेदाध्ययनादिभिर्भगवद्भावमनाविष्कुर्वन् भगवद्भजनं कुर्यादित्याशयेन श्रुतौ ते धर्मा उक्ता इत्यर्थः ॥ ४९ ॥

वैदिककर्मकरणे तात्पर्यमुक्त्वा लौकिकतत्करणसमयमाह ।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

यथा भगवद्भावगोपनार्थं वैदिककर्मकरणं, तथा लौकिकस्या-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्यतावश्यकत्वात् करणम् । परं तु भगवत्कार्याप्रतिबन्धेनैहिकमप-त्योत्पादनतत्संस्कारादिकं कार्यम् । ननु तेषां बाध एवास्त्वित्याशङ्क्याह । तद्दर्शनात् । धार्मिकान् विदधदिति श्रुतौ धार्मिकपुत्रविधान-दर्शनाद् गृहस्थाश्रमतद्धर्माणां बाधाभावेऽपि भगवत्सेवासमयाऽप्र-तिबन्धेन तेषां करणमित्यर्थः ॥ ५० ॥

नन्वेवंप्रकारेण भजनं कुर्वतो भक्तिमार्गीयस्य भगवद्रसानुभ-वात्मकं फलं भवति, न वेत्याशङ्क्याह ।

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदव-स्थावधृतेः ॥ ५१ ॥

एवम्भूतस्य गृहिणो जीवन्मुक्तस्य मुक्तेर्यत्फलं भगवद्रसानु-भवस्तस्यानियम एव । अत्र हेतुमाह । तदवस्थेत्यादि । न स पुनराव-र्तत इति श्रुत्या मोक्षावस्थाया एव नियमः क्रियते । न तु पुष्टिमार्गी-यफलस्य । जीवन्मुक्तिदशा तु तस्यौत्सर्गिक्येवेतिभावः । अतस्तथेत्य-र्थः । अत्र भक्तस्य भगवद्रसानुभवानियम उक्तः, स तु भक्तिमार्गी-यसर्वाभिप्रायेण । तत्र शुद्धपुष्टिभक्तस्य परमानुग्रहभाजनत्वान्मुक्ते-र्यत्फलं भगवद्रसानुभवस्तदेव तादृशसाधनसम्पत्तौ नियमेन भवति। येषां भक्तानां शुद्धपुष्टिमार्गीयसाधनं न सम्पन्नं, तेषां तु साधनाभा-वादेव न विलक्षणभगवत्सम्बन्धात्मकं फलं भवति, मोक्षस्तु भवत्येव सर्वेषामित्यभिप्रायेण मुक्तिफलानियम उक्तो, न तु शुद्धपुष्टिसाधन-सम्पत्तावपि न मुख्यं फलं भवतीत्यभिप्रायेणेति ज्ञेयमिति ॥

यद्वा, नन्वेवंरीत्या भक्तिमार्गीयगृहिणो भगवद्रसानुभवात्मकं फलमेतज्जन्माव्यवधानेन भवति न वेत्याशङ्क्याह । एवं मुक्तिफला-नियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । एवम्भूतस्य गृहिणो जीवन्मु-क्तस्य मुक्तेर्यत्फलं भगवद्रसानुभवस्तस्यानियम एव । एतज्जन्मोत्तरं जन्मान्तरव्यवधानेन वेत्यनियम इत्यर्थः । जन्मान्तरव्यवधानं तु तेषां तदिच्छानुरोधिभगवदिच्छातो भवति । तादृशभक्तानामेव ता-दृशीच्छा भवति, यदस्माकं जन्मान्तरं भवतु । तेनास्माकं भगवद्भ-जनरसानुभवो भवतु । लोकानां शिक्षणेनास्माभिः कृतार्थता सम्पा-दनीया तदुपर्यनुग्रहोऽपि सम्पद्यतामित्याकारकतदिच्छानुरोधेन भ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गवदिच्छया तेषां जन्मान्तरं भवति। परं तज्जन्म मुक्तिरूपं दुःखाऽस्पृष्टं, न तु बन्धरूपम् । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते । विष्णोरनुचरत्वं च मोक्षमाहुर्मनीषिणः । यथा सौमित्रिभरतादितिपार्षोक्तेः । आर्तभक्तानां त्वेतादृशीच्छा न भवति, तेषां भगवद्विप्रयोगस्य सोढुमशक्यत्वादिति ज्ञेयम् । अनियमे हेतुमाह । तदवस्थावधृतेस्तदवस्थावधृतेः । न स पुनरावर्तत इति श्रुत्या मोक्षावस्थाया एव नियमः क्रियते, न तु पुष्टिमार्गीयफलस्य । जीवन्मुक्तदशा तु तस्यौत्सर्गिक्येवेतिभावः । अतस्तथेत्यर्थः । आवृत्तिरध्यायसमाप्तिसूचिका ॥ ५१ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

समाप्तश्चायं तृतीयोऽध्यायः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# अथ चतुर्थाध्यायस्य प्रथमः पादः ।

तुरीयेऽध्याये फलं विचारयंस्तस्यान्तरङ्गसाधनरूपश्रवणादिषु विचारयति । तत्र, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यनेन विहितं श्रवणादिकं सकृत् कर्तव्यमसकृद्वेति संशये सकृत्करणेऽपि शास्त्रार्थसम्पादनसम्भवात् सकृदेव कर्तव्यं, नासकृद् गौरवादिति प्राप्ते, उच्यते ।

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

श्रवणादीनामावृत्तिरेव श्रुतितात्पर्यविषयः । कुतः । असकृदुपदेशात् । छान्दोग्ये श्वेतकेतूपाख्याने, ऐतदात्म्यमिदं सर्वमित्यारभ्य तत्त्वमसीत्यन्तोपदेशवाक्यस्य नवकृत्व उपदेशात् ॥ १ ॥

अत्रैव प्रमाणान्तरमाह ।

## लिङ्गाच्च ॥ २ ॥

श्रुतेरनुमापकत्वात् स्मृतिर्लिङ्गमित्युच्यते । तथाच, 'यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्' इतिस्मृतेरपि श्रवणादीनामावृत्तिरेव फलसाधिकेति ज्ञेयम् । अत्र चक्षुर्यथैवेति दृष्टान्तेनापि श्रवणादीनामावृत्तेर्दृष्टद्वारैव फलसाधकत्वं सूचितम् । अतः श्रवणादिकमसकृत् कर्तव्यमिति सिद्धम् ॥ २ ॥

एवं श्रवणादीनामावृत्तौ ज्ञानिनां फलं विचारयति ।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

ज्ञानिनो हि भगवन्तमात्मरूपेणोपासते । एवं निरन्तरमुपासने क्रियमाणेऽनेकजन्मभिस्तेषां हृदये तथैव भगवान् स्फुरति । तदा सानन्दांशस्याप्याविर्भावात् स्वाभेदेनैव तमनुभवन्ति । एवं स्थितौ किञ्चित्कालविलम्बेन प्रारब्धक्षये तत्रैव प्रविशन्ति । एतदेवाह । आत्मेति तूपगच्छन्ति । आत्मेत्युपासनात् तमेवोपगच्छन्ति प्राप्नुवन्ती-

२०

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्यर्थः । एतादृशाः सर्वोपकारिण इति परार्थमपि ज्ञानं भगवता तेषु दत्तमित्युत्तमाधिकारिण्युपस्थिते ज्ञानमुपदिशन्त्यपीत्युपदेशोऽपि तेषां फलानुभवमध्यपातीत्युपदिशन्ति चेत्युक्तम् ॥ ३ ॥

ननु ब्रह्मण आत्मत्वेन ज्ञानमुपासनार्थं, गुरौ भगवत्त्वेन ज्ञानमपीति तस्य फलत्वमनुपपन्नमित्याशङ्क्याह ।

## न प्रतीकेन हि सः ॥ ४ ॥

प्रतीकेन अन्यस्यान्यरूपेणोपासनेन स मोक्षो न भवति । अतस्मिंस्तद्बुद्धिरूपे प्रतीके भेदज्ञानस्य विद्यमानत्वात् । भेददृष्ट्याभिमानेनेतिवाक्ये भेददर्शनस्य संसारप्राप्तिफलकत्वनिरूपणात् ॥ ४ ॥

ननु सर्वं खल्विदं ब्रह्म, आत्मैवेदं सर्वमित्यादौ सर्वत्र ब्रह्मदृष्टिः प्रतीकात्मिका मोक्षसाधनत्वेनोक्ता । अतः प्रतीकोपासनस्य निर्विशेषब्रह्मप्राप्तिलक्षणमोक्षस्य साक्षादसाधनत्वकथनमनुपपन्नमित्याशङ्क्याह ।

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्वस्य वस्तुतो ब्रह्मात्मकत्वेन तत्र ब्रह्मदृष्टेः प्रतीकत्वाभावेन ज्ञानाधिकारोत्कर्षात् सा स्वत एव भवतीत्यर्थः । पूर्वोक्तवाक्येषु त्वनुवादमात्रं, न विधानम् । अतः प्रतीकोपासनस्य न साक्षान्मुक्तिसाधनत्वमिति सम्यगेव ॥ ५ ॥

ननु छान्दोग्ये, प्राचीनयोग्यकं त्वमात्मानमुपास्से इत्यादित्यमेव भगवो राजन्निति होवाचेति, पुनरिन्द्रद्युम्नप्रश्ने, वायुमेव भगवो राजन्नित्यादावाकाशाऽऽपप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः । तत्रैवासौ वा आदित्यो देवमध्वित्युक्त्वाग्रे उच्यते, य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त इति । यद्यपि, सर्वं खल्विदं ब्रह्मेतिश्रुतौ सर्वानुवादेन ब्रह्मत्वबोधनान्न प्रतीकत्वं, तथाप्यत्र तु प्रत्येकमादित्यादौ ब्रह्मत्वोक्तेः प्रतीकत्वमेव । तथोपासनेन फलकथनात् प्रतीकोपासनाया अपि फलसाधकत्वं सूचितम् । एवञ्च पूर्वत्र सर्वं खल्विदं ब्रह्मेतिवाक्ये वस्तुतः सर्वस्य ब्रह्मत्वं नाभिप्रेतं, किन्तु तथा प्रतीकोपासनम् । एवं तस्यापि फलदर्शनात् प्रतीकोपासनस्य फलासाधकत्वकथनमनुपपन्नमित्याशङ्क्याह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

भगवतः स्वरूपभूतशक्त्यात्मकादित्यादौ या ब्रह्मत्वमतय उक्तास्ताः साकारव्यापकस्य ब्रह्मणः प्रत्येकमङ्गमपि तथोपासितं फलदमिति ज्ञापनार्थम् । युक्तं चैतत् । ब्रह्मण आनन्दमात्रकरपादमुखोदरादेरङ्गमपि तादृशमिति नात्र प्रतीकोपासनमित्यर्थः ॥ ६ ॥

एवं सूत्रषट्केन श्रवणाद्यावृत्तौ ज्ञानिनां सर्वत्र जगति प्रत्येकपदार्थेषु च भगवद्रूपत्वेन भानलक्षणफलमुपपाद्याग्रिमसूत्रषट्केन पुष्टिभक्तानां भगवत्स्वरूपाविर्भावात्मकं फलं तत्प्राप्तौ साहजिकमुत्कटस्नेहात्मकं साधनं चाह ।

## आसीनः सम्भवात् ॥ ७ ॥

उत्कटस्नेहात्मकसाधनसम्भवाद् भगवांस्तदधीनः संस्तदग्रे आसीनो भवति ॥ ७ ॥

एवं बहिःप्राकट्यमुक्त्वान्तरपि तदाह ।

## ध्यानाच्च ॥ ८ ॥

उत्कटभावेन निरन्तरस्मृतिरूपध्यानादपि हृदि प्रकटः सन्नासीनो भवतीत्यर्थः ॥ ८ ॥

एवमेतादृशभक्तेच्छयैव बहिरन्तश्च भगवत्प्राकट्यमित्युक्त्वा लीलाविष्करणमपि भक्तभावाधीनमित्याह ।

## अचलत्वं चापेक्ष्य ॥ ९ ॥

भक्तेच्छामपेक्ष्याचलत्वं, चकाराच्चलत्वमपीत्यर्थः ॥ ९ ॥

## स्मरन्ति च ॥ १० ॥

केचन भक्ताः स्वरूपदर्शननिरपेक्षास्तत्स्मरणानन्दमनुभवन्तस्तेनैव विस्मारितापवर्गान्तफलास्तिष्ठन्ति । चकाराच्छ्रवणकीर्तनादिपराणां ग्रहणम् । तदुक्तम् । अथ ह वाव तव महिमाऽमृतसमुद्रविप्रुषाऽसकृल्लीढया स्वमनसि निष्पन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता एकान्तिन इति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनेन श्रवणजन्यभगवत्परत्वमुक्तम् । अथवा 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय' इत्यादिस्मृतयः पूर्वोक्ते भगवतो भक्तवश्यत्वे प्रमाणत्वेनोक्ता एतेन सूत्रेण ॥ १० ॥

ननु बहिर्भगवदाविर्भाववतो भक्तस्यान्तःसदाविर्भाववतश्च न्यूनाधिकभावोऽस्ति, न वेति विशयेऽन्तर्भगवदाविर्भावस्योत्कृष्टत्वात् तद्वतो भक्तस्याधिक्यमितिप्राप्ते, उच्यते ।

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यत्र भक्तेष्वेकाग्रता एकस्मिन् प्रकटे भगवत्स्वरूपे ग्राहकचित्तधारा, न त्वन्तर्बहिर्विज्ञानं तत्र भक्तेषु बहिर्भगवदाविर्भावयुतस्यान्तस्तदाविर्भावयुतस्य च भावे तद्विषये स्वरूपे च विशेषाभावान्न्यूनाधिकभावो नास्तीत्यर्थः । तथाच भक्तेष्वेकाग्रतैवाधिक्यसम्पादिका, न तु बहिराविर्भावोऽन्तराविर्भावो वेतिभावः ॥ ११ ॥

ननु पूर्वमन्तःप्रकटस्य भगवत उत्कटभावाद्यदा बहिराविर्भावस्तदा भक्तस्य पूर्वमिदं स्वरूपमन्तरन्वभूवमधुना बहिरनुभवामीति ज्ञानं भवति, न वेति संशयेऽन्तरनुभवबहिरनुभवयोरत्यन्तवैलक्षण्यात् तादृशज्ञानं भवत्येवेति प्राप्ते, उच्यते ।

## आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

प्रायणं हि सतामहमितिवाक्यात् प्रायणं नाम परमपुरुषार्थरूपं पारलौकिकं फलमुच्यते । एवं सति प्रायणं मर्यादीकृत्य तेषां सैवावस्था नित्या । भगवत्स्वरूपे आन्तरत्वबाह्यत्वानुसन्धानरहिताः केवलस्वरूपैकनिष्ठास्तिष्ठन्तीत्यर्थः । ननु प्रायणानन्तरं भगवति सायुज्यं भविष्यतीत्याशङ्क्याह । तत्रापि हि दृष्टमिति । तत्रापि प्रायणेऽपि पूर्ववद्भगवता सममालापाऽवलोकनश्रीमच्चरणकमलस्पर्शादिकं दृष्टमेव तस्य फलं भवति, नत्वपूर्वं सायुज्यादिकम् । यतोऽयं कृपाविषयोऽतो युक्तमेव तथेति हिशब्दार्थः ॥ १२ ॥

आवृत्तिरसकृदुपदेशादितिसूत्रषट्केन पूर्वं ज्ञानिनां ज्ञानमिश्रभक्तानां च श्रवणाद्यावृत्त्या सर्वत्र जगति भगवद्रूपत्वेन ज्ञानमुक्तम् । जातज्ञानानां तेषामेवाधुना सूत्रत्रयेण जीवन्मुक्तिदशा निरूप्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र मर्यादाभक्तेर्ज्ञानपूर्वकत्वनियमाज्ज्ञानात् पूर्वं सञ्चितकर्मणां सत्वात् तदुत्तरमपि कर्मकरणदर्शनाच्च तेषां कर्मणां भोगैकनाश्यत्वनियमान्मुक्तिरनवसरपराहतेत्याशङ्कायामाह ।

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

तस्य ब्रह्मज्ञानस्याधिगमे प्राप्तौ सत्याम् उत्तराघस्याऽश्लेषः पूर्वाघस्य विनाशश्च भवतीत्यर्थः । कुतः । तद्व्यपदेशात् । यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इतिश्रुतेः । 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ! ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इतिस्मृतेश्चेत्यर्थः ॥ १३ ॥

ननु पापस्य शास्त्रे निन्दितत्वात् तन्निवृत्तिर्ज्ञानेन भवतु, सुकृतस्य तु शास्त्रोक्तसाधनजन्यत्वात् तन्नाशो भोगेनैवेति तथैव मुक्तिरनवसरपराहतेति विशेषाशङ्कायां पूर्वोक्तन्यायमेवातिदिशति ।

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

इतरस्य पुण्यस्याप्येवं पूर्वस्याश्लेष उत्तरस्य विनाश इत्यर्थः । उभे हैवैष तरतीतिश्रुतेः, ज्ञानाग्निः सर्वकर्माणीतिस्मृतेश्च तद्व्यपदेशादित्यर्थः । ननु तादृशज्ञानिनो मर्यादामार्गीयत्वात् कदाचिद् भरतजयादिवत् सङ्गदोषेण भगवद्भावात् पाते सति विहितनिषिद्धकर्मसम्बन्धे पूर्वोक्तदोषतादवस्थ्यमित्याशङ्क्य सूत्रैकदेशेन परिहरति । पाते त्विति । एवमसंश्लेष इत्यनुषज्यते । मर्यादाभक्तौ भगवद्भावाऽच्युतिः पात इत्युच्यते । अप्यर्थे तुः । तथाच, न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्तीतिवाक्यात् तेषां पातो न सम्भवति । तथापि भगवदिच्छया मर्यादामार्गीयत्वाद् भगवांश्चेत् तथा करोति, तथाप्युत्तरसुकृतदुष्कृतकर्मणोरसंश्लेष एवेत्यर्थः ॥ १४ ॥

ननु देहस्य कर्मजत्वाद् भक्तिमिश्रज्ञानेन कर्मनाशाद्देहनाशे सति ज्ञानिनः प्रवचनानुपपत्तिर्जिज्ञासोश्च तादृशगुरोरभावेन गुरूपसत्याद्यसम्भवेन मार्गोच्छेदापत्तिश्चेत्याशङ्क्य परिहरति ।

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वं पूर्वसूत्राभ्यां ज्ञाननाश्यत्वेन प्रोक्ते सुकृतदुष्कृतकर्मणी ते अनारब्धं भोगायतनाख्यं कार्यं याभ्यां तादृशे एव नश्येते, नाशेऽ। ननु ज्ञानं सर्वकर्मदहनेऽसहायशूरमिति पूर्वमुक्तं, तत् कथमुच्यतेऽनारब्धकार्यकर्मनाशकमिति । तत्राह । तदवधेः । तत् ज्ञानेनारब्धकार्यकर्मादहनम् अवधेः कार्यमात्रस्य पूर्वावधिरूपभगवदिच्छात इत्यर्थः । तथाचाखिलकर्मदहनसर्वसमर्थस्यापि ज्ञानस्य भगवदिच्छया प्रतिबन्धात् प्रारब्धकार्यविषये सङ्कोच इत्यर्थः ॥ १५ ॥

ननु जीवन्मुक्तानां प्रारब्धकर्मभोग एव कर्तव्यो, न त्वन्यदप्यग्निहोत्रादि । दृश्यते च जनकादीनां तत्करणम्।अतः कृतस्य कर्मणः फलावश्यम्भाव इत्याशङ्क्य तेषां कर्मकरणप्रयोजनमाह ।

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

तुशब्दः पक्षव्यावर्तकः । तेषामग्निहोत्रादिकरणं तत्कार्यायैव प्रारब्धकर्मनाशायैव । तेषामग्निहोत्रादिकारकं प्रारब्धमस्तीति तद्भोगार्थं कर्म क्रियते, न त्वपूर्वफलार्थम् । कुतः । तद्दर्शनात् । यथाकारी यथाचारी तथा भवति, साधुकारी साधुर्भवति पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा भवति, पापः पापेनेतिश्रुतिदर्शनात् । एतच्छ्रुत्या पूर्वपुण्यस्य कर्मणोऽग्रिमपुण्यकर्मजनकत्वमुक्तमिति तद्भोगार्थमेवाग्रिमकर्मकरणमित्यर्थः । एवं मर्यादाभक्तस्य मर्यादयैव मोक्षप्रतिबन्धो मर्यादयैव ज्ञानेन तन्नाश इति निरूपितम् ॥१६॥

पूर्वम्, आसीनः सम्भवादिति सूत्रषट्केन पुष्टिभक्तानां भगवदाविर्भावात्मकं फलमुक्तम्।अधुना तेषामेव ज्ञानिवैलक्षण्येन भगवत्कृपया भोगं विनैव प्रारब्धाप्रारब्धकर्मनाशपूर्वकं सद्य एव भगवदङ्गात्मकं फलमुच्यते सूत्रत्रयेण ।

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

एकेषां पुष्टिभक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति। कुतः । अतः श्रुतेरित्यर्थः । यतः कर्मणो ज्ञाननाश्यत्वनिरूपकाया ज्ञानिनः प्रवचनादिनिरूपणेन ज्ञानानाश्यप्रारब्धाख्यकर्मक्षेपकश्रुतेर्भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यत इत्यादिरूपाया अन्यापि श्रुतिः पठ्यते । तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्विषन्तः पापकृत्यामिति ॥ १७ ॥

ननु ब्रह्मज्ञानानाश्यस्य प्रारब्धस्य भोगैकनाश्यस्य पुष्टिमार्गीये भक्ते कथं कृपया नाश इत्यसम्भावनां निराकर्तुं कैमुतिकन्यायेनाह ।

यदेत्र विद्ययेति हि ॥ १८ ॥

भगवज्ज्ञानशक्तेरंशभूना जीवनिष्ठा विद्या । एवञ्च यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीतिश्रुत्या भगवच्छक्त्यात्मकविद्यासम्बन्धाज्जीवकृतकर्मणो वीर्यवत्तरत्वं यत्र तत्र साक्षाद्भगवत्कृपया प्रारब्धनाशे किमु वक्तव्यमित्यर्थः ॥ १८ ॥

एवं पुष्टिमार्गे प्रतिबन्धाभावमुपपाद्य फलप्राप्तिं निरूपयति ।

भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ १९ ॥

इतरे स्थूललिङ्गशरीरे क्षपयित्वा त्यक्त्वा । अथ भगवल्लीलानुभवयोग्यालौकिकदेहसम्भवनन्तरं भोगेन सम्पद्यते । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेतिश्रुतेरित्यर्थः ॥ १९ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चतुर्थाध्यायस्य द्वितीयः पादः ।

पूर्वपादान्ते, इतरे क्षपयित्वेत्यनेन पुष्टिभक्तः स्थूललिङ्गशरीरे क्षपयित्वा भगवदानन्दं प्राप्नोतीत्युक्तम् । तत्र सर्वेन्द्रियाणां युगपदेव भगवति लयः, प्रणाड्या वेति संशये प्रणाड्यैवेति वक्तुं प्रणाडीमाह।

### वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

भक्तस्योत्कटभावेन भगवदिच्छया भगवदाविर्भावेन तद्दर्शने जाते, दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन्नितिरीत्या सर्वैन्द्रियैः स्वरूपानुभवेच्छायां प्रथमं तेन सहालापेच्छा भवतिं । ततो मानसिकभावेन भगवदाविर्भावो जात इति मनसि प्रभुनैकस्यमस्तीति तेन सम्बन्धे तत्प्राप्तिर्भविष्यतीतिं पूर्वं वाग् मनसि सम्पद्यते लीयत इत्यर्थः ·। कुतः । तद्दर्शनात् । पूर्वोक्तरीत्या तद्दर्शनानन्तरमेवम्भावजननाद् दर्शनस्य हेतुत्वम् । अत एव छान्दोग्ये वाङ् मनसिं सम्पद्यत इति श्रुतिः । दर्शनाभावे वेण्वादिशब्दश्रवणेनाऽपि सर्वेन्द्रियैः स्वरूपानुभवेच्छा जन्यत इति शब्दाच्चेत्युक्तम् ॥ १॥

### अत एव सर्वाण्यनु ॥ २ ॥

अत एव दर्शनाच्छब्दाच्च हेतोः सर्वाणीन्द्रियाणि, अनु वाग्लयानन्तरं मनसि सङ्गतानिं भगवदानन्देन सम्पद्यन्त इत्यर्थः ॥२॥

### तन्मनः प्राण उत्तरात् ॥ ३ ॥

सर्वेन्द्रिययुक्तं मनः प्राणे सम्पद्यते । कुतः । उत्तरात् । श्रुतिवाक्यादित्यर्थः । स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सौम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयत इत्युक्त्वाऽग्रे हेतुमाह, प्राणबन्धनं हि सौम्य मन इति । अतस्तथेत्यर्थः ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स सर्वेन्द्रिययुक्तमनःसहितः प्राणोऽध्यक्षे प्रकटे भगवति सम्पद्यत इत्यर्थः । कुतः । तदुपगमादिभ्यः । तस्य भगवत उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकारः । आदिपदाद् भगवद्वशीकरणसमर्थः स्नेहो भगवत्प्राप्तिप्रतिबन्धकपदार्थत्यागस्तत्प्रसादानुकूलं भजनं च संगृह्यते ॥ ४ ॥

एवं पुष्टिभक्ते सर्वेन्द्रियलयप्रकारो निरूपितः । ज्ञानिनः, तदधिगमेत्यादिसूत्रत्रयेण जीवन्मुक्तिदशा निरूपिता । अधुना तस्येन्द्रियाणां लयोऽपेक्षित इति तल्लये प्रकारान्तरमाहैकेन सूत्रेण ।

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

मर्यादाभक्तानामिन्द्रियाणि भूतेषु लीयन्ते । कुतः । तच्छ्रुतेः । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयत इति श्रुतेः ॥५॥

ननु मर्यादामार्गीयौ भक्तो ज्ञानी च भवतः । पूर्वोक्तनिर्णयस्तु ज्ञानिविषय एव । मर्यादाभक्तं तु कदाचिद् भगवान् पुष्टावङ्गीकरोतीत्याशङ्क्याह ।

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन् ज्ञानिनि नियमेन मर्यादायामङ्गीकार इति नियमो न, किन्तु मर्यादाभक्ते ज्ञानिनि चोभयोरेव मर्यादायामङ्गीकार इति नियम इत्यर्थः । न तु कदाचिन्मर्यादाभक्तं पुष्टावपि प्रवेशयतीत्यर्थः । कुतः । दर्शयतो हि । यतो याज्ञवल्क्यार्तभागौ तथैव दर्शयतः । तथाहि । यत्रायं पुरुषो म्रियत उदस्मात् प्राणा उत्क्रामन्त्याहो नेत्यार्तभागप्रश्ने याज्ञवल्क्योऽत्रैव समवलीयन्त इत्युक्त्वाग्रे, यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येतीत्यारभ्य रेतश्च निधीयत इत्यन्तमुक्तवान् । ततः क्वायं पुरुषो भवतीति प्रश्ने, उभाभ्यां विचारितमुत्तरमुच्यते, तौ ह यदूचतुः कर्म हैव तदूचतुरित्यादिना । अत्र प्राणानामत्रैव लयोक्त्या मुक्तविषयेयं श्रुतिरिति युक्तम् । अमुक्तस्य



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्राणलयासम्भवात् । तथाच मुक्तस्य कर्मणि स्थितेरसम्भवात् कर्मशब्देन मर्यादैव ग्राह्या । तथाच मुक्तिविषयौ ज्ञानिमर्यादाभक्तौ कर्मणि मर्यादायामेव तिष्ठतो, न तु कदाचित् पुष्टावपीति तयोरभिप्रायो ज्ञायते । तथाच ज्ञानिमर्यादाभक्तयोरुभयोर्मर्यादायामङ्गीकारनियमो, न त्वेकास्मिन्ज्ञानि भावः ॥ ६ ॥

नन्वेवं मर्यादापुष्ट्योर्नियतविषयत्वे किं नियामकमित्याकाङ्क्षायां तयोः स्वरूपमेव तादृशमित्याह ।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

मर्यादामार्गे हि साधनक्रमेणैव मुक्तिः, पुष्टिमार्गे तु श्रवणाद्यतिरिक्तज्ञानकर्मादिसाधनं विनैव मुक्तिप्राप्तिरिति नियतम् । तदाह । आसृत्युपक्रमात् समाना । सृतिर्जीवानां भगवतः पृथग्भूय संसरणम् । तस्या उपक्रममारम्भं मर्यादीकृत्य मोक्षपर्यन्तं साधनेनैव मुक्तिरेवंरूपा मर्यादा समाना मध्ये नान्यथा भवतीत्यर्थः । एवं पुष्टिमार्गे अमृतत्वं चानुपोष्य । अत्रोपोषणपदं साधनमात्रोपलक्षकम् । तथाच साधनमात्रमकृत्वा केवलकृपया अमृतत्वमपि तन्मार्गे नियतमित्यर्थः ॥ ७ ॥

नन्वेवमपि मर्यादामार्गीयशुद्धजीवस्य मोक्षसम्भवाद् याज्ञवल्क्यार्तभागाभ्यां कर्म हैव तत्प्रशशंसतुरित्यनेन तन्मुक्तेः कर्मत्वेन कथनं कुत इत्याशङ्क्याह ।

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा पुष्टिफलदशायाम् अपीतेर्मर्यादामार्गीयमोक्षस्य संसारव्यपदेशात् तन्मुक्तौ भगवत्स्वरूपानन्दानुभवाभावात् संसारतुल्यतेति ताभ्यां तथा निरूपितमित्यर्थः ॥ ८ ॥

ननु पुष्टिमार्गीयं तत्त्वमेतादृशं यत्र मुक्त्यात्मकफलस्यापि संसारत्वेन गणना, तर्हि तस्यैवाभ्यर्हितत्वात् स्तुतेर्युक्ततया मुक्तिस्तावकवाक्यानां प्रतारकत्वापत्तिरित्याशङ्क्याह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः । तस्यानुभवैकवेद्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वादनुभवस्य च दुर्लभाधिकारिविषयत्वादन्यावेद्यमेव तत्। मोक्षस्य च शुद्धाधिकारिमात्रविषयत्वात् स्तुतेरबाधितविषयत्वात् तद्वेदकमार्गस्य न प्रतारकत्वमिति भावः। नन्वेवमतिनिगूढपुष्टितत्त्वसद्भावे किं मानमित्याशङ्क्याह। प्रमाणतश्च तथोपलब्धेः। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति श्रुतौ पूर्वार्द्धेन मनोवागगम्यत्वेन दुर्ज्ञेयत्वमुक्त्वोत्तरार्द्धेन विद्वानिति तत्सत्ता बोध्यते। अतस्तद् दुर्ज्ञेयत्वेनैव श्रुतिबोधितमिति तत्सद्भावे न विवदितव्यम्। चकारात् तादृशभक्तानुभवोऽपि मानमिति सूच्यते॥ ९॥

नन्वेतादृशपुष्टितत्त्वसत्त्वे यथा ब्रह्मविदः स्वमार्गीयं तत्त्वमुपदिशन्ति, तथैतेऽपि कुतो नोपदिशन्तीत्याशङ्क्य तत्र निदानमाह।

## नोपमर्देनातः॥ १०॥

ऐश्वर्यभावे ह्युपदेशनम्। तेषां तु विरहदशा भगवत्सङ्गमदशा चेति दशाद्वयम्। तत्र विरहे तद्भावेनान्यभावानामैश्वर्यभावादीनामुपमर्देनोपदेशो न सम्भवति। सङ्गमे तु अतः पुरःप्रकटानन्दात्मकप्रभुस्वरूपाद्धेतोस्तदानन्दानुभवनिमग्नचित्तत्वेनान्येभ्यः सख्यादिभ्योऽप्युपदेशो न सम्भवतीत्यर्थः॥ १०॥

ननु रसो वै सः, रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवतीतिश्रुते रसात्मकभगवत्स्वरूपानुभवेनानन्दिनानां तेषामानन्दतिरोधानात्मकविरहदुःखं न सम्भवतीत्याशङ्क्याह।

## अस्यैव चोपपत्तेरूष्मा॥ ११॥

अस्यैव आनन्दात्मकभगवत एव धर्म ऊष्मा विरहताप इत्यर्थः। नन्वानन्दात्मकस्य दुःखरूपो धर्मः कथमित्याशङ्क्याह। उपपत्तेरिति। शृङ्गारस्थायिभावात्मकप्रभुस्वरूपस्यान्तरनुभावकत्वात् सोऽपि सुखस्वरूप एवोपपद्यते, न तु दुःखात्मकः। निर्वेदग्लान्यादिरूपव्यभिचारिभावात् तथा भानमात्रमित्यर्थः॥ ११॥

ननु, न पश्यो मृत्युं पश्यति नरो तदुदुःखमित्यादिश्रुतेर्निर्वेदग्लान्यात्मकदुःखस्याप्यसम्भव इत्याशङ्क्य श्रुतेस्तात्पर्यमाह।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

अत्र श्रुतौ शारीरमेव दुःखं प्रतिषिध्यते, न तु शृङ्गाराख्यभि-चारिभावात्मकं, रोगसहपाठादितिभावः ॥ १२ ॥

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां शाखिनां प्रभुस्वरूपप्राप्त्यनन्तरं दुःखनिवृत्तिरूपोऽर्थः स्पष्टः पठ्यते, रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दीभवतीत्यादिना ॥ १३ ॥

## स्मर्यते च ॥ १४ ॥

भगवद्भावस्य मरणहेतुत्वं, तेनैव जीवनं, तद्भावस्याखिलदुर्लभत्वं च श्रीभागवते स्मर्यते । ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः । ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमित्यारभ्य धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चनेति भगवद्वचनेन । एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनिरूढभावाः । वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्येति श्रीमदुद्धववचनेन ॥ १४ ॥

नन्वेवं भगवदाविर्भावस्तददर्शनेन विरहौत्कण्ठ्यं, ततः प्रभुप्राकट्येन पूर्णानन्ददानमित्यादिकं वैकुण्ठेऽपि दुर्लभं कुत्र दृष्टमित्याकाङ्क्षायामाह ।

## तानि परे तथा ह्याह ॥ १५ ॥

तान्युक्तानि वस्तूनि परे वैकुण्ठादप्युत्कृष्टे श्रीगोकुले श्रीगोवर्द्धने चसन्तीति शेषः । तथाहि, ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयास इत्यादिका श्रुतिराह ॥ १५ ॥

ननु परमकृपया कमपि भक्तं नित्यलीलायां प्रवेशयति चेत् तदा कञ्चित्कालं तत्र स्थापयित्वा ततस्तं वियोजयति, उत तत्रैव स्थापयति नित्यमित्याशङ्कायां सिद्धान्तमाह ।

## अविभागो वचनात् ॥ १६ ॥

तत्र प्राप्तस्याविभाग एव ततः । कुतः । वचनात् । तद्धिणो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परमं पदं सदा पश्यन्ति सूरय इतिश्रुतेरित्यर्थः । एवं पुष्टिभक्तफलानुभवप्रकारो निरूपितः ॥ १६ ॥

भूतेषु तच्छ्रुतेरित्यनेन ज्ञानिन इन्द्रियाणां भूतेषु लयो निरूपितः । अधुना निरिन्द्रियस्य तस्योत्क्रमणप्रकारं पञ्चसूत्रैराह ।

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दाऽनुगृहीतः शताधिकया ॥ १७ ॥

स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीतिश्रुतेस्तस्यात्मन ओकः स्थानं हृदयं तदग्रं प्रथमं ज्वलति । पूर्वमप्रकाशमानमपि तदा प्रकाशते । तेन प्रकाशितं द्वारं गमनमार्गो यस्य तादृश उत्क्रामति । तस्य हैतस्य हृदयस्याग्रं प्रद्योतत इत्यादिश्रुत्याऽप्ययमेवार्थ उक्तः । इदं सर्वं जीवसाधारणं निष्क्रमणम् । विदुषस्तु मार्गे विशेषमाह । शताधिकया । एकशततम्या, शतं चैका हृदयस्य नाड्यस्तासां मूधार्नमभिनिःसृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वगत्या उत्क्रमणे भवन्तीतिश्रुत्युक्तया निष्क्रामति । यतः स हार्दानुगृहीतो हृदयस्थितेन भगवताऽनुगृहीतः । तदनुग्रहे हेतुः । विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्चेति । ब्रह्मविद्यासामर्थ्यात् । तस्या विद्यायाः शेषभूता अङ्गभूता या गतिः प्रव्रजनरूपा तत्र या भगवतोऽनुस्मृतिः स्मरणं तत्संबन्धाद् यो भगवदनुग्रहस्तेन तथा निष्क्रामतीत्यर्थः ॥ १७ ॥

नन्वोकोऽग्रज्वलनादेः सर्वसाधारण्येऽपि यथा हार्दानुग्रहाद्विदुष एव सुषुम्णयोत्क्रमणमुक्तं, तथाऽथैतैरेव रश्मिभिरूर्ध्वमाक्रामतीतिश्रुत्युक्तं रश्मिद्वारमाक्रमणं सर्वसाधारणं, विदुष एव वेति संशये सिद्धान्तमाह ।

रश्म्यनुसारी ॥ १८ ॥

विद्वानेव रश्मिद्वारा गच्छतीत्यर्थः ॥ १८ ॥

ननु विदुष उत्क्रमणे यथा हार्दानुग्रहकृतो विशेषस्तथा दिनायनात्मककालविशेषकृतोऽपि भविष्यतीति शङ्कां निराकुर्वन्नहोरात्रकृतविशेषमाशङ्क्य निराकरोति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

निशि विदुष उत्क्रमणं नेति चेन्न । कुतः । सम्बन्धस्य यावद्देहभावित्वात् । अनुग्रहहेतुभूतो यो गत्यनुस्मृतिसम्बन्धस्तस्य यावद्देहभावित्वात् तज्जन्यानुग्रहस्य सत्त्वात् तद्बलेन कालस्याप्रयोजकत्वमित्यर्थः । यतः श्रुतिरेव दर्शयति । एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति ॥ १९ ॥

अतोऽयनकृतोऽपि विशेषो नास्तीत्याह ।

## अतश्चायनेऽपि दक्षिणे ॥ २० ॥

उत्क्रमणनियमो विदुषो नास्तीत्यर्थः ॥ २० ॥

ननु श्रीभगवद्गीतास्वनावृत्तिमार्गमुपक्रम्याग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्, तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इत्युक्त्या विदुषोऽपि कालविशेषापेक्षास्तीत्याशङ्क्याह ।

## योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥

अयं कालनियमो योगिनं प्रति स्मर्यते, न ब्रह्मविदं प्रति । यत एते योगसाङ्ख्ये स्मार्ते । श्रौतस्य तु ज्ञानमार्गस्यासहायशूरत्वान्नान्यःसापेक्षत्वमिति भावः ॥ २१ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां चतुर्थाध्यायस्य
द्वितीयः पादः ॥ ४ ॥ २ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चतुर्थाध्यायस्य तृतीयः पादः ।

पूर्वपादे ब्रह्मविद उत्क्रमणप्रकारमुक्त्वा मोक्षमार्गमस्मिन् पादे विचारयति । तत्र श्रुतावर्चिरादिमार्गेण गमनमुक्तम् । तज्ज्ञानमार्गीयमर्यादाभक्तयोरुभयोरुत ज्ञानिन एवेति संशये निर्णयमाह ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अर्चिरादिमार्गेण प्रायशो ज्ञानमार्गीय एव गच्छति कश्चिन्न तु मर्यादाभक्तोऽपि । तस्य प्रायः सद्यो मुक्तेरेव सम्भवादिति भावः । कुतः । तत्प्रथितेः । तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीत्यादिना ज्ञानमार्गीयस्यैव तत्रोत्कर्षकथनात् ॥१॥

नन्वर्चिरादिमार्गनिरूपकच्छान्दोग्यश्रुतौ वायुलोको न पठ्यते । कौशीतकिश्रुतौ त्वग्निलोकानन्तरं स पठ्यत इत्युभयश्रुत्यैवैक एवार्चिरादिमार्गः प्रतिपाद्यत इति वायुलोकोपसंहारावश्यकत्वे छान्दोग्ये कुत्र तस्योपसंहार इत्याकाङ्क्षायामाह ।

### वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

छान्दोग्ये मासेभ्यः संवत्सरं संवत्सरादादित्यमित्यत्र संवत्सरादुत्तरं वायुलोको निवेशयितव्यः । कुतः । अविशेषविशेषाभ्याम् । अर्चिरारभ्य संवत्सरान्तानां भूसम्बन्धित्वेनाविशेषात् तन्मध्ये वायुर्न निवेशनीयः । भूलोकादुपर्यन्तरिक्षलोकस्तदुत्तरं द्युलोकः । एवञ्च, वायुरन्तरिक्षस्याधिपतिरितिश्रुतेः, सूर्यो दिवोऽधिपतिरितिश्रुतेरेतयोः पौर्वापर्ये विशेषो हेतुरस्तीति सूर्यलोकात्पूर्वं वायुलोको निवेशनीय इत्यर्थः ॥ २ ॥

### तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

चन्द्रमसो विद्युतमित्यत्रोक्तविद्युल्लोकात् परतो वरुणलोको निवेशनीयः । कुतः । सम्बन्धात् । तडितो जलसम्बन्धित्वाद् वरुणस्याप्पतित्वात् सम्बन्धः ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

वरुणलोकात् परमिन्द्रलोकः प्रजापतिलोकश्च निवेशनीयः। अत्र सम्बन्धादित्यनुवर्तते । एवं चेन्द्रस्य सर्वदिक्पालेषु मुख्यत्वात् प्रजापतेः सर्वदेवाधिपतित्वात् सम्बन्धोऽस्तीति भावः ॥ ४ ॥

ननु श्रुतौ विद्युल्लोकानन्तरं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीत्युक्त्या, यावद्वचनं वाचनिकमितिन्यायेन येषां विद्युदनन्तरमेव ब्रह्मप्राप्तिस्तेषामातिवाहिकसम्बन्धो, येषां तु तदनन्तरं वरुणेन्द्रप्रजापतिलोकप्राप्तिस्तेषां तत्सम्बन्धो न भविष्यतीत्याशङ्क्याह ।

## आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥

एकस्मिन्नेव मार्गेऽन्यत्रोक्तानामुपसंहारान्मार्गभेदे प्रमाणाभावात् प्रजापतिलोकोत्तरमातिवाहिका उपसंहर्तव्याः । कुतः । तल्लिङ्गात् । तत्पुरुषोऽमानव इत्यत्र पुरुषस्य ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते । एवञ्च यथान्यलोकप्राप्तिर्विद्याबलान्न तथा ब्रह्मप्राप्तिः, किन्तु तदीयपुरुषसम्बन्धेनैवेति ज्ञाप्यते ॥ ५ ॥

ननु देवयानमार्गं प्राप्तानां तेषामिह न पुनरावृत्तिरस्तीत्यादिश्रुतिभ्योऽवश्यं ब्रह्मवित्त्वेन सद्यो मुक्तिं परित्यज्य तत्तल्लोककामना कुतः । अथ च, यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्, सर्वं तद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा, स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छतीति भगवद्वाक्याद् भक्तस्याप्येतद्विषयिणी वाञ्छा फलं च सम्भवति । तद्भक्तिरसं हित्वा कुत इत्याकाङ्क्षायामाह ।

## उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥

देवयानमार्गस्यापि भगवतैव सृष्टत्वाद्धीनाधिकारिणां तदयोग्यत्वादुत्तमाधिकारिणां चेत् तत्कामना न स्यात् तदा मार्गसृष्टिर्व्यर्था स्यात् । एवञ्च स्वकृतमार्गसाफल्याय भगवानेव काँश्चन ज्ञानिनो मर्यादाभक्ताँश्च व्यामोहयतीति तत्कामनातस्तेषां तत्फलभोग इत्यर्थः ॥६॥

ननु विद्युल्लोकाद् वरुणादिलोकप्राप्तिर्यस्य भवति तस्य वैद्युतः पुरुष एव ब्रह्मप्रापक, उत स स्वत एव ब्रह्म प्राप्नोतीतिसंशये निर्णयमाह ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥

नहि ब्रह्मप्राप्तिः स्वतो भवति, किन्तु ब्रह्मसम्बन्धिपुरुषसामर्थ्येन । एवञ्च यतो ब्रह्मप्राप्तिस्ततस्तत्सम्बन्धिपुरुषेणैव । कुतः । तच्छ्रुतेः । तान् वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान्गमयतीति-श्रुतेः । अत्र वैद्युतलोकमागच्छतीति वैद्युत उक्तो, नतु तल्लोकवासित्वेन । एत्येतिकथनात् । अत एव भगवन्मनोऽभिलषितं भक्तं प्रापयतीति मानस उक्तः ॥ ७ ॥

अत्र स एतान् ब्रह्म गमयतीत्यत्र ब्रह्मपदेन कार्यब्रह्मलोक, उत परब्रह्मैवेतिसंशये परब्रह्मणो व्यापकत्वाद् गन्तव्यत्वानुपपत्तेर्ब्रह्मलोकपरमिति बादरिमतमुपन्यस्यति ।

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥

स एतान् ब्रह्म गमयतीत्यत्र कार्यं ब्रह्मोच्यते । कुतः । अस्य गन्तुस्तत्रैव गमनमुपपद्यते, न तु परब्रह्मणि व्यापकत्वादितिभावः॥८॥

## विशेषितत्वाच्च ॥ ९ ॥

ब्रह्मलोकान् गमयतीतिश्रुतौ बहुत्वेन लोका विशेषिताः । तेषु ब्रह्मलोकेषु पराः परावतो वसन्तीतिश्रुतौ वासकर्तृत्वेन गन्तारो विशेषिता इति कार्यं ब्रह्मैव ग्राह्यं, न परं ब्रह्म तस्यैकत्वात् ॥ ९ ॥

तर्हि तत्र ब्रह्मपदप्रयोगे को हेतुरित्याशङ्क्याह ।

## सामीप्यात्तु तद्व्यपदेशः ॥ १० ॥

तल्लोकप्राप्तौ लोकान्तरप्राप्तिं विनैव परब्रह्मप्राप्तिरिति ब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः ॥ १० ॥

नन्वाब्रह्मभुवनाल्लोकाः पुनरावर्तिन इति वाक्यात् ततः पुनरावृत्तिः श्रूयते । श्रुतौ तु, तेषामिह न पुनरावृत्तिरस्तीत्युच्यते । अतः परब्रह्मैवात्र ग्राह्यमित्याशङ्क्याह ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥११॥

कल्पावसाने कार्यब्रह्मलोकस्यात्यये नाशे तदध्यक्षेण चतुर्मुख-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ब्रह्मणा सह अतो ब्रह्मणः परमीश्वरं प्राप्नोतीत्यतोऽपुनरावृत्तिश्रुतेर्न विरोधः । कुतः । अभिधानात् । वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ' इति श्रुतौ तथाभिधानादित्यर्थः ॥ ११ ॥

## स्मृतेश्च ॥ १२ ॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमितिस्मृतेः पूर्वोक्त एवार्थः ॥ १२ ॥

एवं प्राप्ते सिद्धान्तमाह ।

## परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥

स एतान् ब्रह्म गमयतीति ब्रह्मपदेन परं ब्रह्मैवेति जैमिनिराचार्यो मन्यते । कुतः । मुख्यत्वात् । ब्रह्मपदस्य मुख्या वृत्तिः परब्रह्मण्येव, गौणी त्वन्यत्र । तथा च मुख्यसम्भवे गौणार्थस्यायुक्तत्वात ॥ १३ ॥

## दर्शनाच्च ॥ १४ ॥

स एतं देवयानं पन्थानमापद्येत्यादिश्रुतौ, स प्रजापतिलोकं स ब्रह्मलोकमिति प्रजापतिलोकात् पार्थक्येन ब्रह्मलोककथनदर्शनादित्यर्थः ॥ १४ ॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥

ब्रह्मविदाप्नोति परमित्युक्त्वा तद्विवरणवाक्ये, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यनेन भगवता सह सर्वकामोपभोगलक्षणा प्रतिपत्तिरुच्यते । सा कार्यब्रह्मलोके न सम्भवतीत्यर्थः । अतोऽत्र परमेव ब्रह्म ग्राह्यमिति भावः ॥ १५ ॥

क्रममुक्त्यधिकारिणः प्रारब्धभोगानन्तरममानवपुरुषप्रापिताः परं ब्रह्म प्राप्नुवन्तीत्युक्तम् । अत्रार्चिरादिलोकप्राप्तान् सर्वानेवामानवः पुरुषो ब्रह्म गमयत्युत कांश्चिदेवेति विशये, ब्रह्मप्रापणार्थमेव तस्य नियुक्तत्वादर्चिरादेर्ब्रह्मलोकमार्गत्वात् तत्र गतान् सर्वानेव ब्रह्म प्रापयतीति प्राप्ते, उच्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १६ ॥

उपास्यरूपाणि वस्तुनोऽब्रह्मरूपाणि, तेषु ब्रह्मत्वेनोपासनं वेदबोधितत्वात् सफलमिति ज्ञात्वा य उपासते ते प्रतीकालम्बनाः । एवमपि वेदबोधितत्वेनोपासनायाः कृतत्वात् तेषामर्चिरादिलोकप्राप्तावपि तानमानवः पुरुषो ब्रह्म न नयति, किन्तु तद्भिन्नान् । ये वस्तुतः सर्वं ब्रह्मेति ज्ञात्वा तत्त्वेनोपासते तानेव नयतीति बादरायण आचार्यो मनुते । कुतः । उभयथा दोषात् । वस्तुनो ब्रह्मरूपेऽब्रह्मत्वनिश्चय उपासनार्थं, तत्र ब्रह्मत्वज्ञानं चेत्युभयथा दोषात् तेषां न ब्रह्मप्राप्तावधिकार इति, न तान् प्रापयतीत्यर्थः । योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणेति तादृशभावनाया निषिद्धफलकथनात् । एवं ज्ञानमार्गीये भेदद्वयं निरूप्य भक्तिमार्गीयव्यवस्थामाह । तत्क्रतुश्च । स भगवद्भजनलक्षणः क्रतुर्यस्य स तत्क्रतुः । स तु भक्तिबलात् स्वयमेव परं ब्रह्म गच्छतीत्यर्थः ॥ १६ ॥

पूर्वम्, अविभागो वचनादित्यनेन पुष्टिभक्तस्य लीलापरिकरादविभागो भवतीति फलमुक्तम् । तस्यैव ज्ञानिफलाद्विशेषं वक्तुमधिकरणारम्भः । तत्र सर्वाण्युपास्यरूपाणि शुद्धब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेवेत्युक्तम् । तत्र ज्ञानमार्गीयाणामुपासकानां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिर्भवत्युत कश्चन विशेषोऽस्तीति संशये, उभयोरपि ब्रह्मोपासकत्वाविशेषेणैव भवतीति प्राप्ते, उच्यते ।

## विशेषं च दर्शयति ॥ १७ ॥

श्रुतिरिति शेषः । सा च 'ब्रह्मविदाप्नोति परमिति, नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य' इति च । एवंच यस्य वरणविशिष्टब्रह्मज्ञानं तस्य परब्रह्मप्राप्तिर्यस्य तु केवलब्रह्मज्ञानं तस्याऽक्षरप्राप्तिरिति विशेषो बोध्यः ॥ १७ ॥

इति श्रीब्रह्मसूत्रवृत्तौ मरीचिकाख्यायां चतुर्थाध्यायस्य तृतीयपादः ॥ ४ ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चतुर्थाध्यायस्य चतुर्थः पादः ।

पूर्वपादान्ते वरणयुक्तब्रह्मविदः पुष्टिमार्गीयस्य परप्राप्तिरुक्ता। तत्र स सायुज्यं प्राप्य भगवदानन्दमनुभवत्युत देहेन्द्रियादिसङ्घातं प्राप्य भेदेनानुभवतीति संशये, न स पुनरावर्तत इति, तेषामिह न पुनरावृत्तिरस्तीति च श्रुतेस्ततो जन्माभावात् सायुज्यं प्राप्यैवानुभवतीति प्राप्ते, उच्यते ।

### सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

सम्पद्य ब्रह्म प्राप्य स्थितस्य जीवस्य भगवदत्यन्तानुग्रहवशात् तस्य स्वरूपानन्ददित्सायामाविर्भावो, न तु जन्म । सोऽपि स्वेन भगवत्सामर्थ्येन, न तु कर्मादिना । तथाचोक्तश्रुत्योः प्राकृतजन्माभावनिषेधकत्वं, न तु स्वरूपात्मकालौकिकदेहेन्द्रियादिना प्राकट्यनिषेधकत्वम् । कुतः । शब्दात् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेतिश्रुतेरित्यर्थः । भगवता सहानेकविधकामाशनं देहेन्द्रियादिकं विना न सम्भवतीति भगवद्दत्तालौकिकदेहेन्द्रियादिकं प्राप्य तत्स्वरूपानुभवं करोतीत्यर्थः ॥ १ ॥

ननु कामभोगानाममुक्तकर्तृकत्वात् तत्प्रतिपादिका श्रुतिरमुक्तविषयेत्याशङ्क्याह ।

### मुक्तप्रतिज्ञानात् ॥ २ ॥

ब्रह्मविदाप्नोति परमित्यनेन मुक्तं प्रतिज्ञाय तद्विवरणं सोऽश्नुते सर्वान् कामानित्यनेन क्रियते । अतो मुक्तप्रतिज्ञानाद्धेतोः पुष्टिमार्गीयमोक्षरूपत्वं कामाशनस्य, न तु लौकिकत्वमित्यर्थः ॥ २ ॥

ननु कामभोगस्य गुणाधीनत्वात् परब्रह्मणो गुणातीतत्वात्, सह ब्रह्मणेत्यत्र ब्रह्मपदं कार्यब्रह्मपरमिति न तत्प्राप्तेर्मोक्षरूपत्वमित्याशङ्क्याह ।

### आत्मा प्रकरणात् ॥ ३ ॥

सह ब्रह्मणेत्यत्र ब्रह्मपदेन आत्मा व्यापको मायागुणसम्ब-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



णधरहित एवोच्यते । कुतः । प्रकरणात् । ब्रह्मविदाप्नोति परमित्यस्य गुणातीतप्रतिपादकत्वात् तत्प्रकरण एव सोऽश्नुत इत्यस्य पाठात् परं ब्रह्मैवात्र प्रतिपाद्यं, न कार्यं ब्रह्मेत्यर्थः ॥ ३ ॥

ननु ब्रह्मविदाप्नोति परमिति भिन्नं वाक्यं, सोऽश्नुत इयमृक् भिन्ना । अतो नैकं प्रकरणमिति ब्रह्मपदेन प्राकृतगुणसहितमेवात्रोच्यत इत्याशङ्क्य परिहरति ।

## अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्ववाक्येन सहाविभागेनैवेयम् ऋक् पठिता । कुतः । दृष्टत्वात् । तदेषाऽभ्युक्तेत्यनेन, ब्रह्मविदितिवाक्योक्तार्थप्रतिपादकत्वेनेयमृगुक्तेति दृष्टत्वादित्यर्थः । अतः पूर्वोत्तरवाक्ययोरेकार्थप्रतिपादकत्वात् परब्रह्मैवात्र प्रतिपाद्यत इति ॥ ४ ॥

मुक्तो जीवो भगवदनुग्रहाद् बहिराविर्भूय गुणातीतेन पुरुषोत्तमेन सह सर्वकामोपभोगं करोतीति पूर्वमुक्तम् । तत्र बहिराविर्भूय प्राकृतेन शरीरेण भुङ्क्ते, किंवाऽप्राकृतेनेति संशये भोगायतनस्य प्राकृतस्यैव दृष्टत्वात् प्राकृतेनैव भुङ्क्त इति प्राप्ते, उच्यते ।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

ब्राह्मेण ब्रह्मसम्बन्धिना सच्चिदानन्दात्मकेन शरीरेण, ब्रह्मणः सर्वान् कामानश्नुत इति जैमिनिराचार्यो मन्यते । कुतः । उपन्यासादिभ्यः । ब्रह्मविदाप्नोति परमित्युपन्यस्य सोऽश्नुत इतिकथनात् । किञ्च, परप्राप्तेः पुष्टिमार्गीयमोक्षरूपत्वेन लौकिकशरीरेण तद्भोगासम्भवाद् अक्षरब्रह्मणः पुरुषोत्तमाधिष्ठानत्वात् तदात्मकशरीरेण भगवदानन्दं भुङ्क्त इति युक्तम् । कर्मवादिनो जैमिनेरप्यत्र सम्मतिस्तत्रान्येषां किमुतेति सूचनार्थं जैमिनिग्रहणम् ॥ ५ ॥

औडुलोमिस्तु मुक्तो जीवश्चिन्मात्ररूपेणाऽलककरचरणादिभावं भगवद्विग्रहे प्राप्य भगवदानन्दमनुभवति, न तु पृथगलौकिकविग्रहेणेत्याह ।

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

चिति, स यथा सैन्धवघन इतिश्रुत्युक्तचिद्रूपे ब्रह्मणि तन्मा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते, न त्वलौकिकदेहेन्द्रियादिना। कुतः । तदात्मकत्वात् । जीवस्य तदात्मकत्वादित्यौडुलोमिराचार्यो मन्यते । इत्यश्चौडुलोमिमतं अलौकिकदेहादिकं विनैव चिन्मात्ररूपेणालकादिवद् भगवत्प्राप्तिरेव मोक्ष इति सिद्धम् ॥ ६ ॥

परमाचार्या बादरायणस्त्वौडुलोम्युक्तं चिन्मात्रेणैव जीवस्य भगवत्प्राप्तिर्मोक्ष इत्यत्र चिन्मात्रेणैवेति नियमांशं खण्डयित्वाऽलौकिकदेहेन्द्रियादिभिर्भक्तानां भगवता सह कामाशनं मोक्षो, ज्ञानमिश्रभक्तानां तु चिन्मात्रेणैव रूपेण भगवद्विग्रहेऽलकादिरूपप्राप्तिरेव मोक्ष इति ज्ञानिभक्तशुद्धभक्तव्यवस्थया सिद्धान्तमाह ।

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

परमाचार्यो बादरायणोऽलौकिकविग्रहेणापि भोगेऽविरोधं मनुते । कुतः । एवमप्युपन्यासात् । ब्रह्मविदाप्नोति परमित्यस्यैवमपि विग्रहवत्त्वेनाप्युपन्यासात् । तथाहि । ब्रह्मविदाप्नोतीत्युक्त्वा परप्राप्तौ ब्रह्मविदः स्वातन्त्र्यं बोध्यते । तदेव, ब्रह्मणा सहेत्यृचोपन्यस्तम् । एवञ्च कामभोगेषु ब्रह्मणः साहित्यं भक्तस्य मुख्यत्वमित्युक्तं भवति । तच्चालौकिकविग्रहेणैव समञ्जसं भवति, नान्यथेति युक्तमलौकिकदेहेन्द्रियादिवत्त्वम् । अत्रैवमप्युपन्यासादित्यपिशब्दोक्त्या चिन्मात्रेण रूपेण भगवद्विग्रहेऽलकादिभावप्राप्तिरित्यौडुलोमिमतं ज्ञानमिश्रभक्तविषयमिति सूचितम् । अपिशब्देन तन्मतस्याप्यङ्गीकारसूचनात् । किञ्च, भक्तविविधभावद्रष्टा विविधभोगचतुरेण चेत्यर्थकविपश्चितेत्युक्त्याऽलौकिकदेहेन्द्रियादिवत्त्वं प्राप्यते । ननु विग्रहस्य जन्यत्वेन लौकिकत्वाद् ब्रह्मणा सह भोगो न सम्भवतीत्याशङ्क्याह । पूर्वभावादिति । भक्तस्य भगवत्प्राप्तेः पूर्वमेव भगवद्भोगानुकूलविग्रहाद्यां भावाश्च कृतिमत्त्वमित्यर्थः । एवञ्च भगवत्स्वरूपानन्दानुभवयोग्यशरीराणि नित्यानि सन्ति । येष्वनुगृह्य स्वरूपानन्ददानेच्छा ताञ्जीवाँस्तत्र योजयतीतिभावः ॥ ७ ॥

ननु भक्तिमार्गीयेष्वपि कतिपयेषु स्वरूपानन्ददानं, न सर्वेष्वित्यत्र किं नियामकमित्याशङ्क्य तदाह ।

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भजनानन्ददानार्थं सङ्कल्पादेव हेतोस्तद्विषय एव तदान-न्दमनुभवति । कुत एतज्ज्ञातं, तदाह । तच्छ्रुतेः । नाय-मात्मेत्यारभ्य, यमेवैष वृणुते तेन लभ्य इति श्रुतेः । अत्र भग-वत्प्राप्तिं प्रति वरणातिरिक्तस्यासाधनत्वोक्त्या वरणमात्रलभ्यत्वो-क्त्या च वरणात्मकसङ्कल्पप्राप्यत्वं वदति श्रुतिः । सूत्रे एवकारेण सङ्कल्पातिरिक्तसाधनाप्राप्यत्वं ज्ञाप्यते । चकारात् कृपार्जितफल-प्राप्त्यनुकूलपरमार्तिः संगृह्यते ॥ ८ ॥

उक्तमर्थं सूत्रान्तरेण द्रढयति ।

## अत एव चानन्याधिपतिः ॥ ९ ॥

येषां साधनं फलं च प्रभुस्वरूपातिरिक्तं नास्ति, तेऽनन्याः । तेषामधिपतिर्यतः । येषां साधनात्मना फलात्मना च हृदि भगवानेव स्फुरति, नान्यस्तेषामाधिपत्यमपि स्वयमेव करोति । अन्यत्र तु विभूतिरूपैराधिपत्यं करोति, न स्वयम् ॥ ९ ॥

पूर्वमप्रतीकालम्बनान्नयतीतिसूत्रेणाप्रतीकालम्बनानां ज्ञानि-नामक्षरप्राप्तिरुक्ता । तत्राक्षरस्य साकारनिराकारभेदेन द्वैरूप्याज्ज्ञा-निनां साकाराक्षरप्राप्तिर्निराकाराक्षरप्राप्तिर्वेति संशये निराकाराक्षर-प्राप्तिरिति बादरिमतेनाह ।

## अभावं बादरिराह ह्येवम् ॥ १० ॥

बादरिराचार्यो मुक्त्यवस्थायां देहाद्यभावं मनुते । कुतः । आह ह्येवम् । यतो ब्रह्मविदो मुक्तिनिरूपिका श्रुतिर्यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्युपक्रम्य, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदितिरूपा तस्य द्वितीयज्ञाननिषेधमाह । एवञ्च तस्य कामभो-गवार्ता तु दूरे, कामभोगाक्षेप्यदेहस्तु सुतरामेव न सम्भवतीति बा-दरिमतम् ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिराचार्यो मुक्तस्य पुंसो देहादर्भावं सत्तां मनुते । ननु पूर्वोक्तबाधकवाक्यानां का गतिरित्याशङ्क्याह । विकल्पामननात् । ब्रह्मविदाप्नोति परमितिश्रुत्या ब्रह्मज्ञानस्य परप्राप्तिहेतुत्वमुक्तम् । ना-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यमात्मेति श्रुत्या वरणैकलभ्यत्वमुक्तम् । सोऽश्नुते सर्वान् कामान्निति श्रुत्या परप्राप्तिर्विवृता । इहैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येतीत्यपि श्रुत्यन्तरम् । एवञ्च मिथोऽविरोधाय पुष्टिमार्गेऽङ्गीकृतो भगवता सहालौकिकदेहेन्द्रियादिकं प्राप्य कामानश्नुते । ज्ञानमार्गीयस्तु, ब्रह्मैव सन् ब्रह्माप्येतीत्युक्त्याऽक्षरे लयं प्राप्नोतीति व्यवस्थितविकल्पाश्रयणान्मुक्तस्याप्यलौकिकदेहेन्द्रियादिसत्त्वे बाधकं नास्तीत्यर्थः । तत्केन कं पश्येदित्यपि ब्रह्मज्ञानदशानिरूपणमिति ज्ञेयम् ॥ ११ ॥

जैमिनिमते साकाराक्षरात्मकविग्रहप्राप्तिर्भक्तानां, निराकाराक्षरे लयस्तु ज्ञानिनां मोक्ष इत्युक्ते साकारनिराकारभेदेनाक्षरे भेदशङ्का स्यात् । तन्निवारणायाचार्य एकमेवाक्षरं जीवानामधिकारभेदेन द्वादशाहवद् द्विरूपेणास्तीत्याह ।

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

भगवता सह, सोऽश्नुत इतिश्रुत्युक्तकामभोगसाधनस्याक्षरस्य भक्तान् प्रति भगवद्रसभोगार्थं शरीररूपेणाविर्भावेन भोगायतनत्वाच्छरीरत्वम् । भक्तदेहेन्द्रियादीनामक्षरात्मकत्वात् । ज्ञानिनां तु भौतिकत्वाभावमात्रेण निराकारत्वेन स्वस्मिँल्लयसम्पादकत्वादशरीरत्वमपीति बादरायण आचार्यो मन्यते । अतः श्रुतेरित्यर्थः । सा तु तस्य ह वा एतस्यैवं पश्यत इत्यारभ्य, आत्मन एवेदꣳ सर्वमित्यन्ता । तेन प्राकृतशरीरराहित्यं सिद्ध्यति । नन्वेकस्यैव विरुद्धमशरीरत्वं शरीरत्वं च कथमित्याशङ्क्य वैदिकदृष्टान्तेन समाधत्ते । द्वादशाहवत् । यः कामयेत प्रजायेयेति, स द्वादशरात्रेण यजेतेति विधानाद् यागत्वम्, द्वादशाहमृद्धिकामा उपेयुः, य एवं विद्वाꣳसः सत्रमुपयन्तीति च विधानात् सत्रत्वं यथा द्वादशाहस्य तथा प्रकृतेऽपि ज्ञेयम् । प्रमाणसिद्धत्वादिति भावः ॥ १२ ॥

ननु श्रीकृष्णाद्यवतारस्वरूपमानन्दमयमेवेति तत्र प्रमाणेषु प्रतिपादितम् । परन्तु तत्राऽप्यवतारसमकालैः पुरुषैः प्राकृतविधावस्थाविशेषा दृश्यन्ते । तत् कुत इत्याशङ्क्य परिहरति ।

## तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्दर्शनस्य वास्तवत्वनिरासकस्तु शब्दः । तत् प्राकृततुल्याऽवस्थादर्शनम् अभावे प्राकृतत्वस्याभावे एव भवति, न तु प्राकृत्योऽवस्थास्तत्र सन्ति । नन्वविद्यमानविषयस्य कथं दर्शनं स्यादत आह । सन्ध्यवदिति । सन्ध्यं तृतीयस्थानमितिश्रुतेः सन्ध्ये स्वप्ने यथाऽविद्यमानानेव मायिकान् पदार्थान् पश्यति निद्रामोहित एवं येष्वासुरेषु भगवतः स्वरूपाज्ञापनेच्छा तेषु मायया स्वरूपेऽविद्यमानानेव धर्मान् भासयतीति नानुपपन्नं किञ्चित् । ते तु, प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा, इत्यारभ्य, मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिमित्यन्तेन गीतायामुक्ताः ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

अप्राकृतलीलापदार्थस्य यत् तत्त्वेन दर्शनं तद् भावे विषयसद्भावे भवति । तद्दर्शनं सविषयकमेव, न तु मायिकविषयकम् । तत्र दृष्टान्तः । जाग्रद्वत् । जाग्रद्दशासामयिकज्ञानं सत्यविषयकमेव भवति, निद्रामोहितस्य तु विपरीतं, तद्वदित्यर्थः ॥ १४ ॥

ननु सोऽश्नुते सर्वान् कामान् सह ब्रह्मणेत्यत्र भक्तस्य भगवता सह कामभोग उपपादितः । परन्तु भगवतः पूर्णज्ञानक्रियाशक्तिमत्त्वेन भक्तस्य ततो न्यूनत्वे न सम्भवति । तत्रापि प्राधान्यं सुतरामेव न सम्भवतीत्याशङ्क्याह ।

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥

न हि तदा भक्तस्य स्वसामर्थ्येन प्राधान्येन भगवता सह भोगः, किन्तु भगवदावेशेन । प्रदीपवत् । यथा प्रदीपः स्नेहयुक्तवर्त्यन्तरं सम्बद्धः सँस्तामपि स्वसमानां करोति, तथा भगवानपि फलदानार्थं भक्ते सम्बद्धस्तमपि स्वसमानसामर्थ्यं करोतीत्यर्थः । अत्र प्रमाणमाह । तथाहि दर्शयति । श्रुतिरितिशेषः । स तु भर्ता सन् भ्रियमाणो बिभर्ति, एको देवो बहुधा निविष्ट इति च ॥ १५ ॥

ननु न तदश्नोति कश्चन न तदश्नाति कश्चनेति श्रूयते । ब्रह्मणा सह कामभोगोऽपि, सोऽश्नुत इति श्रूयते । एवञ्च श्रुतिविप्रतिषेधनिराकरणाय निर्गुणं ब्रह्म, न तदश्नोतीतिश्रुतेर्विषयः । सोऽश्नुत



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


इतिश्रुतेस्तु प्राकृतगुणसहितं ब्रह्म विषय इति व्यवस्थायां सवसामञ्जस्यमिति प्राप्ते, उच्यते ।

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥१६॥

स्वाप्ययः स्वमपीतो भवतीतिश्रुत्युक्ता सुषुप्तिः । सम्पत्तिर्ब्रह्मसम्पत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्षः । तयोरन्यतरापेक्षमुभयश्रुत्याविष्कृतम् उक्तमित्यर्थः । एवञ्च प्रस्वापदशायां ब्रह्मस्वरूपस्य सम्यगनुभवाभावात् तद्विषयिणी न तदश्नोतीति निषेधिका श्रुतिः । सम्पत्त्यात्मकपुष्टिमार्गीयमोक्षे तु स्वरूपस्याऽनेकधाऽनुभवात् तन्निरूपिका, सोऽश्नुत इत्यादिश्रुतिरिति न प्राकृतगुणयुक्तत्वनिर्गुणत्वभेदेन व्यवस्थाकल्पनमुचितमित्यर्थः । परास्य शक्तिर्विविधैव श्रूयत इत्यादिश्रुत्याऽचिन्त्यानन्तशक्तिमति स्वतः सर्वभवनसमर्थे ब्रह्मणि गुणानां प्रयोजनाभावात् ॥ १६ ॥

ननु ब्रह्मणा सह कामभोगे लौकिकव्यापारसाहित्यमस्ति न वेति संशये भोगस्य लौकिकव्यापारसाहित्यदर्शनादस्तीति प्राप्ते, उच्यते ।

## जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

भगवता सह भोगो जगद्व्यापारवर्जं भवति । जगत्सम्बन्धी लौकिको यो व्यापारस्तद्रहित इत्यर्थः । कुतः । प्रकरणाद् असन्निहितत्वाच्च । ब्रह्मविदाप्नोतीत्यस्य मुक्तिप्रकरणस्थत्वात् तत्र लौकिकव्यापारो न सम्भवति । लीलायाः प्रकृतिकालाद्यतीतत्वाच्च लौकिकं जगत् ततो दूरतरमिति न तत्र लौकिकव्यापारसम्भावना सन्निधानाभावात् ॥ १७ ॥

ननु मुक्तिप्रकरण एव छान्दोग्ये, सर्वं ह पश्यतीति सर्वविषयज्ञानकथनात् पूर्वोक्तं लौकिकव्यापाररहित्यं नोपपद्यत इति सूत्रार्द्धेनाशङ्क्य समाधत्ते ।

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः॥ १८॥

देशकालभेदेनानेकविधायां लीलायामधिकृतो यो भक्तस्तस्य यानि तत्तल्लीलानुभवार्थं नानारूपाणि तान्याधिकारिकाणि । तेषां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मण्डलं समूहः । तत्र स्थितं वस्तुमात्रमाधिकारिकमण्डलस्थम् । तत्रैव सर्वं ह पश्यतीत्यनेन दर्शनोक्तिर्न तु लौकिकवस्तुनः । अत एवाग्रे, सर्वमाप्नोति सर्वशः, स एकधा भवतीत्यादि च पठ्यते । अतः, सर्वं ह पश्यतीतिश्रुत्याऽप्यलौकिकलीलाविषयकसर्वज्ञानकथनान्मुक्तिदशायां न लौकिकव्यापारसम्भावनापीति भावः ॥ १८ ॥

ननु तत्तद्देशकालविशिष्टलीलाया नित्यत्वात्, श्वस्त्वद्गेहमायास्य इति भगवतोक्ते भक्तानां तदाकाङ्क्षया स्थितिरनुपपन्ना । तत्तद्देशकालभगवदागमनस्य नित्यत्वेन तदापि सत्त्वाद् भगवतोऽप्येवं कथनासम्भवाच्चेत्याशङ्क्याह ।

## विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥

अस्मिञ्छास्त्रे । भगवल्लीलायाः प्रकृतित्वेन कथनात् तद्विरुद्धोऽर्थो विकारशब्दवाच्यो भवति । यथाऽऽम्रादिफलेषु विकारेण रसनाशो भवतीति लोके दृष्टं, तद्वदत्रापि भगवतः श्वस्त्वद्गेहमायास्य इति भक्तविशेषं प्रति कथनसमयेऽपि तद्गृहागमनलीलाया नित्यत्वेन तस्मिन् काले सत्त्वेऽपि तदा तस्या अनुभवे भगवदागमनप्रतीक्षाहेतुविप्रयोगरसस्य नाशो भवतीति तस्मिन् काले स्वगेहे भगवत्स्थित्यनुभवो विकारो भवति । एवञ्च भक्तानां पूर्वोक्तरीत्या भगवदुक्त्यनन्तरं यत्तदागमनप्रतीक्षात्मकं ज्ञानं तद् विकाराऽवर्ति भवति । मद्गेहे पूर्वं भगवानागतोऽभूद्, अधुना पुनरप्यायास्यतीति भूतभविष्यत्स्वगेहस्थित्यनुभवविषयकमपि ज्ञानं न भवति। विरहौत्कण्ठ्यानापत्तेः । किन्तु कदा आयास्यतीति केवलं प्रतीक्षैव तदा भवति । इदं सङ्क्षेपत उक्तम् । यद्यद्रसनाशकं भवति तादृशं ज्ञानं तस्य न भवति, पोषकमेव भवतीति लौकिकभिन्नं लीलानुभवात्मकमेव तज्ज्ञानम् । एवञ्च तल्लीलाविशिष्टप्रभोः सर्वदा तद्गेहे सत्त्वेऽपि तदा तस्य ज्ञानं न भवतीत्यर्थः । भक्तानामपि सर्वज्ञत्वेऽपि यादृशं रसाभासजनकं तादृशमाच्छाद्य रसपोषकं ज्ञानं प्रकटयति । अत्र प्रमाणं प्रदर्शयति । तथा हि स्थितिमाह । सर्वमाप्नोति सर्वश इति श्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वं लीलारसमाप्नोतीति कथयन्ती पूर्वोक्तरीत्यैव तस्य लीलायां स्थितिमाह । अतो लीला

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वरूपमेवेदमलौकिकं तादृशमिति वैदिकैस्तथैव मन्तव्यमिति भावः। अलौकिकेऽर्थे प्रमाणमेवानुसर्तव्यं, न लौकिकी युक्तिः ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

प्रत्यक्षानुमाने श्रुतिस्मृती भगवत्सम्बन्धिनि लीलापदार्थे युक्त्यगम्यत्वं दर्शयतः । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । नैषा तर्केण मतिरापनेया । अलौकिकास्तु ये भावा न तांस्तर्केण योजयेदिति च । अतो लीलायां लौकिकयुक्तिविरोधो न दूषणं, प्रत्युत भूषणमेव । तदुक्तं, न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर इत्यादि ॥ २० ॥

एतादृशलीलाविशिष्टप्रभुस्वरूपमेव परमफलत्वेन वेदान्तश्रुतितात्पर्यविषय इति सूचयति ।

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

सोऽश्नुते सर्वान् कामान् सह ब्रह्मणेतिश्रुतौ भोगे भगवतो भक्तसाम्यमुच्यते । एतच्च पुरुषोत्तम एव सम्भवति । यतो भक्ते सख्यं दत्वा तत्कृतात्मनिवेदनमङ्गीकुर्वन् कृपया तं प्राधान्येन स्वरूपानन्दमनुभावयति । अन्यथा भक्तस्य स्वरूपानन्दानुभवो न भवेत्। एतादृशपरमकृपालुः पुरुषोत्तम एव परमं फलमिति सिद्धम् । मात्रपदेन न तत्समश्चाभ्यधिकश्च दृश्यत इतिश्रुतेर्भगवतः सर्वात्मना न भक्तसाम्यमिति ज्ञापितम् ॥ २१ ॥

एवं भगवत्स्वरूपानुभवस्य पुष्टिमार्गीयपरमफलत्वं निरूप्याक्षरप्राप्तेर्ज्ञानिनः फलत्वं निरूप्य तदनुभवानन्तरं कर्ममार्गवत् पुनरावृत्तिः स्यादित्याशङ्क्योभयोरप्यपुनरावृत्तिं सूत्रावृत्त्या निरूपयन्नुपसंहरति ।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

अत्र सूत्रावृत्त्या ज्ञानिनां भक्तानां चानावृत्तिरुच्यते । ब्रह्म-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लोकमभिसम्पद्यते, न स पुनरावर्तत इत्यादिशब्दस्तु ज्ञानिनामनावृत्तिमाह । भक्तिमार्गे तु यमेवैष वृणुते तेन लभ्य इतिश्रुतेर्वरणस्य नित्यत्वेनानावृत्तिरपि नित्या बोध्या । किञ्च, कालेन हि पुनरावृत्तिः । न यत्र कालोऽनिमिषां परः प्रभुरितिवाक्याद् भगवल्लीलायां कालप्रभावादपि न पुनरावृत्तिरिति ॥ २२ ॥

सम्राट्श्रीजयसिंहाज्ञां प्राप्य व्रजनाथभट्टेन ।
अणुभाष्यभास्करस्य मरीचिकेयं कृता जयतात् ॥ १ ॥

इति श्रीब्रह्मसूत्राणामणुभाष्यानुसारिवृत्तौ मरीचिकाख्यायां
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥

समाप्तोऽयं चतुर्थोऽध्यायः ॥
सम्पूर्णश्चायं ग्रन्थः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## ॥ श्रीहरिः ॥

---

अयि श्रीश्रीवल्लभाचार्यैशुद्धाद्वैतसम्प्रदायसिद्धान्तज्ञानरसिकाः सहृदयवराः !, इदं किलाभिज्ञायतां तत्रभवद्भिर्भवद्भिः।

यदेषा श्रीभगवत्कृष्णद्वैपायनप्रणीतब्रह्मसूत्राणां विवृतिरणुभाष्यानुसारिणी मरीचिकाख्या श्रीव्रजनाथभट्टकृता सम्मुद्र्य प्रकाशिता वरीवर्ति।

एनां च, 'नानामतध्वान्तविनाशनक्षमो वेदान्तसिद्धान्तविकासने पटुः। आविष्कृतोऽयं भुवि भाष्यभास्करो मुधा बुधा धावत नान्यवर्त्मसु' इत्यणुभाष्ये श्रीश्रीवल्लभाचार्यैः स्वभाष्यस्य भास्कररूपतया निरूपणाद् अणुभाष्यविभाकरानुगामिकिरणरूपेण व्यपदिशन् मरीचिकेति न्यरुपयद् ग्रन्थकारः।

स च, शुद्धाद्वैतसम्प्रदायस्य सौलभ्येन बोधार्थमेनां सम्राट्श्रीजयसिंहाज्ञानुसारेण व्यरचयदिति, 'सम्राट्श्रीजयसिंहाज्ञां प्राप्य व्रजनाथभट्टेन। अणुभाष्यभास्करस्य मरीचिकेयं कृता जयताद्' इति प्रशस्तिलेखाज्ज्ञायते।

तां चैनां नानाविधदर्शनप्रकाशाय प्रयतमानेन श्रीहरिदासगुप्ताभिधमहाशयेन प्रवर्तितो भाष्यादिभिः संशोध्य प्रकाशितवानस्मि।

अग्रे च क्रमशः सप्रकाशाख्यव्याख्योऽणुभाष्यग्रन्थोऽपि प्रकाशयिष्यत इति शुद्धाद्वैतसम्प्रदायपुस्तकमभिलष्यद्भिः सुधीभिरवधेयमिति, प्रकाशयिता।

रत्नगोपालभट्टः

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

चौखम्बा-संस्कृत-ग्रन्थमाला ।
( ग्रन्थसंख्या २४ )

# ब्रह्मसूत्रवृत्तिः ।

## मरीचिका

श्रीव्रजनाथभट्टकृता

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदाय विदुषा
श्रीरत्नगोपालभट्टेन संशोधिता ।



काश्याम् ।
विद्याविलास—नाम्नि यन्त्रालये, हरिदासगुप्तेन
मुद्रयित्वा प्रकाशितम ।

सन् १९०५
वैक्रमसम्बत् १९६२

शुभम्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीतारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम-वादरायण प्रणति वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | ( वेदान्तः ) | ६ |

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

